कि हम पीछे सकेत कर आए हैं—उस समय गद्य काव्य की उत्कृष्टता मापने का यही एकमात्र मान दण्ड था। इसमे बाण का कोई दोष नहीं। वैसे हम देखते हैं कि बाण को अपने पाठकों की इस शिकायत का पहले ही से कुछ आभास था और इसीलिए वे सुबन्धु की तरह उन्हें जगलों मे ही भटकते रहने देना पसन्द नहीं करते थे। थोड़ी ही देर बाद वे अपने भीत-श्रान्त पाठक को जगल से बाहर निकालकर विश्राम के लिए सरस, हरित शाद्वल का निर्माण कर देते थे। वह शाद्वल होता है अन्तर्जगत्—मानव हृदय के कोमल मधुर भावों का सरस धरातल। वर्ण्य विषय कोमल मधुर होते ही फिर भाषा शैली भी बाण की कोमल मधुर हो जाती है। इसी को 'शब्दार्थयो. समो गुम्फ.' कहते हैं। समास सब समाप्त हो जाते हैं, होते भी हैं तो छोटे छोटे नितान्त सुबोध। भावों की तरह चित्रण भी स्वाभाविक, सरल सुबोध हो जाता है। यह वैदर्भी शैली होती है। बाण ने हृदय की मार्मिक भूमि—ज्ञान, प्रेम आदि मनोभावों—का विश्लेषण और चित्रण इसी सरल शैली मे किया है। उनका शुकनास द्वारा चन्द्रापीड को और कपिञ्जल द्वारा श्वेतकेतु को दिया हुआ ज्ञानोपदेश, महाश्वेता का आत्ममनोव्यथा निवेदन आदि स्थल कितने सुन्दर, सरल, स्वाभाविक हैं। वास्तव में बाण की कादम्बरी का असली नवनीत इन्हीं मे छिपा मिलता है। नपे तुले शब्दों में उनके वाक्यों की सरल बनावट देखिए—

'[ राजलक्ष्मी ] न परिचय रक्षति, नाभिजनमीक्षते, न रूपमालोकयते, न कुलक्रममनुवर्तते, न शील पश्यति, न श्रुतमाकर्णयति, न धर्ममनुरुध्यते, न त्यागमाद्रियते' [शुकनासोपदेश.]

"का वा सुखाशा साधुजन निन्दितेषु प्राकृतजन-बहुमतेषु विषयेषु भवत ? स खलु धर्म बुद्धया विषलता वन सिञ्चति, कुवलय मालेति निस्त्रिंशमालिङ्गति, कृष्णागुरु धूमलेखेति कृष्णसर्पमवगूहते, रत्नमिति ज्वलन्तमङ्गारमभिस्पृशति' मूढो य विषय भोगेषु सुख बुद्धिमारोपयति।"

[ कपिञ्जल ]

"प्रसीद, सकृदप्यालप, दर्शय भक्त वत्सलताम्, ईषदपि विलोकय, पूरय मे मनोरथम्। आर्ताऽस्मि, भक्ताऽस्मि, अनुरक्ताऽस्मि, अनाथाऽस्मि, बालाऽस्मि, अगतिकाऽस्मि, दु खिताऽस्मि।"

[ महाश्वेता ]

इस तरह बाण का अन्तर्जगत्—काव्य के भाव-पक्ष—का चित्रण भी उतना ही सूक्ष्म विविध और मार्मिक है जितना बहिर्जगत् का। प्रधान भाव कवि ने कादम्बरी में प्रेम—शृङ्गार—रखा है, जो अधिकतर अपने विप्रलम्भ रूप में है। प्रेम की जितनी भी दशायें—अन्तर्दशायें हुआ करती हैं, कोई भी अपनी अभिव्यक्ति से अछूती नहीं रही है। बाण का प्रेम बड़ा मर्यादित और शिष्ट है। जब कभी वह भौतिक वासना के रूप मे प्रकट होने लगा, कवि ने झट उसे शापादि द्वारा कुचल दिया। जैसे हम पीछे संकेत कर आए है, बाण का प्रेम तप, त्याग और वियोग की अपेक्षा रखता है और अपने भोग के लिए जन्म-जन्मान्तर तक की प्रतीक्षा माँगता है। यही प्रेम का आध्यात्मिक रूप कहलाता है। प्रेम के अतिरिक्त बाण की कृतियों में हम यथास्थान करुण, वीर, बीभत्स और अद्भुत आदि रसों की अभिव्यक्ति भी पाते हैं, जो बड़ी सशक्त एव हृदयस्पर्शी है। इस तरह बाण भाव जगत् के भी सिद्ध-हस्त चितेरे हैं, केवल बहिर्जगत् के ही नहीं।

हम देखते हैं कि कला क्षेत्र में जब कोई विभूति ( जीनिअस ) अवतरित होती है, तो वह अपने पूर्ववर्ती कला का फूल होती है और परवर्ती का बीज। बाण के सम्बन्ध मे यह बात पूरी घटती है। बाण की कृतियाँ काव्य की अलंकृतशैली मे पूर्ण विकसित, परिनिष्ठित—चरम प्रकर्ष मे पहुँची हुई—हैं, साथ ही भावी कलाकारों के लिए बीज—सृजन के साधन—देने वाली भी बनी हुई हैं। परवर्ती कला क्षेत्र मे पड़े हुए बाण के इस व्यापक प्रभाव को देखकर सस्कृत-जगत् में 'बाणोच्छिष्ट जगत् सर्वम्' यह लोकोक्ति ही चल पड़ी है। बाण के बाद समस्त काव्य बाण की जूठन है। बाण के बाद ऐसा कोई भी गद्यकार या पद्यकार नहीं निकला, जिसने कोई ऐसी नयी चीज लिखी हो, जिस पर बाण ने अपनी लेखनी न चला रखी हो। सब से पहले कादम्बरी के उत्तरार्ध को लिखनेवाले बाणपुत्र भूषणभट्ट को ले लें, जिसने स्वय स्वीकार कर रखा है—'गद्ये कृतेऽपि गुरुणा तु तथाक्षराणि मन्निर्गतानि पितुरेव स मेऽनुभाव ।' बाण और सुबन्धुकी कृतियों मे कितनी ही जगह परस्पर शब्दतः और अर्थत. बड़ी समानता मिलती है। इसे देख लोगो का कहना है कि क्योंकि बाण ने अपने हर्षचरित मे 'वासवदत्ता' की प्रशसा कर रखी है, इसलिए वासवदत्ता कार सुबन्धु बाण का पूर्ववर्ती है, जिसको अपना आदर्श बनाकर बाण ने अपनी रचनाये की हैं। पर हम उन लोगों से सहमत नहीं हैं। यह कभी नहीं हो सकता है कि बाण जैसा सिद्धहस्त कलाकार सुबन्धु को अपना आदर्श बनाकर चले और उसका अनुकरण करे। बाण ने स्वय इस तरह की साहित्यिक चोरी की बड़ी निन्दा कर रखी है—

**बाण का परवर्ती प्रभाव**

अन्य वर्ण परावृत्या बन्ध चिह्न निगूहनै ।
अनाख्यात सता मध्ये कविश्चोरो विभाव्यते ॥ हर्ष० ॥

इसलिए बाण द्वारा उल्लिखित 'वासवदत्ता' सुबन्धु की 'वासवदत्ता' नहीं है, प्रत्युत महाभाष्यकारादि द्वारा उल्लिखित दूसरी ही 'वासवदत्ता' है, जो 'हर्षचरित' की तरह आख्यायिका रही होगी न कि सुबन्धु-लिखित 'वासवदत्ता' की तरह कथा। अत स्पष्ट है कि सुबन्धु ने ही बाण की नकल की है। सुबन्धु के बाद दण्डी, त्रिविक्रम भट्ट, सोमदेव, सोड्ढल, अम्बिकादत्त व्यास आदि गद्यकारों ने बाण को अपना आदर्श बना रखा है, इसीलिए उनकी रचनाओं में बाण की स्पष्ट छाप परिलक्षित होती है। हम विस्तार के भय से यहाँ उक्त सभी कलाकारों के तुलनात्मक अध्ययन मे नहीं जाना चाहते हैं। वस्तुत. गद्य-काव्य ही नहीं, परवर्ती पद्य-काव्य भी बाण की प्रेरणा से अनुप्राणित हैं। श्रीहर्ष के नैषध चरित' में नल के घोड़े पर बाण के इन्द्रायुध का, क्रीडा सर पर बाण के पम्पासर अथवा अच्छोद सर का, कुण्डनपुर पर बाण की उज्जयिनी का कितना प्रभाव है—यह सस्कृत-मनीषियों से छिपा नहीं है। इसलिए 'बाणोच्छिष्ट जगत् सर्वम्'—यह ठीक है।

**सस्कृत-जगत् द्वारा बाण का मूल्यांकन**

सस्कृत-जगत् ने अपने 'वश्यवाणीकविचक्रवर्ती' और उसकी कला का क्या क्या मूल्याकन किया है—इस सम्बन्ध मे हम नीचे कुछ प्रसिद्ध कवियों एव आलोचकों की उक्तियों को दे देने का लोभ सवरण नहीं कर सकते—

वागीश्वर हन्त भजेऽभिनन्दमर्थेश्वर वाक्पतिराजमीडे ।
रसेश्वर स्तौमि च कालिदास, बाण तु सर्वेश्वरमानतोऽस्मि ॥

( सोड्ढल )

जाता शिखण्डिनी प्राग् यथा शिखण्डी तथावगच्छामि ।
प्रागल्भ्यमधिकमाप्तु वाणी बाणो बभूवेति ॥

( धर्मदास )

हृदि लग्नेन बाणेन यन्मन्दोऽपि पद-क्रम. ।
भवेत् कवि-कुरङ्गाणा चापल तत्र कारणम् ॥

( त्रिलोचन भट्ट )

'रुचिर स्वर-वर्ण-पदा रस-भाववती जगन्मनो हरति ।
तत्किं तरुणी ? नहि नहि वाणी बाणस्य मधुरशीलस्य ॥'

( धर्मदास )

'सहर्षचरितारब्धाद्भुतकादम्बरी कथा ।
बाणस्य वाण्यनार्येव स्वच्छन्दा भ्रमति क्षितौ ॥'

( राजशेखर )

'प्रतिकविभेदनबाण. कवितातरुगहनविहरणमयूरः ।
सहृदयलोकसुबन्धुर्जयति श्रीबाणभट्टकविराजः ॥' ( वीरनारायणचरित )

'युक्त कादम्बरीं श्रुत्वा कवयो मौनमाश्रिता. ।
बाणध्वनावनध्यायो भवतीति स्मृतिर्यत. ॥' ( सोमेश्वरदेव )

'बाणस्य हर्षचरिते निशितामुदीक्ष्य
शक्तिं न केऽत्र कविताश्रमद त्यजन्ति ।
मान्द्य न कस्य च कवेरिह कालिदास
वाचा रसेन रसितस्य भवत्यधृष्यम् ॥' ( सोड्ढल )

'दण्डीत्युपस्थिते सद्य कवीना कम्पता मन ।
प्रविष्टे त्वन्तर बाणे कण्ठे वागेव रुध्यते ॥' ( अज्ञात )

'परिशीलितैव सरस कविराजैर्बहुभिरत्र वाग्देवी ।
बाणेन तु वैजात्यात् कथयति नामैव वाणीति ॥' ( अज्ञात )

'बाणोच्छिष्ट जगत् सर्वम् ।' ( अज्ञात )

कोई भी कवि या कलाकार जब कोई रचना करता है, तो उसका अपने सम सामयिक समाज से प्रभावित होना स्वाभाविक है। वह अपने प्रभावों, समसामयिक सामाजिक गति-विधियों एव राजनीतिक स्थितियों को अपनी कृति में यत्र-तत्र बिखेरे रहता है। यदि हम उन्हें एक सूत्र में पिरोने का यत्न करें, तो सम सामयिक समाज के विषय मे हमे पर्याप्त जानकारी मिल सकती है।

**बाण-कालीन भारत**

बाण के काल में समाज का गठन वर्ण एवं आश्रम व्यवस्था के रूप में मिलता है। ब्राह्मणों का काम साधारणत अध्ययनाध्यापन और पौरोहित्य रहता था, पर वे मन्त्री का काम भी कर लिया करते थे। ब्राह्मणों के ब्राह्मणेतर भी मित्र हुआ करते थे। बाण की मित्र मण्डली में सभी वर्णों के लोग थे। छूताछूत का प्रचार था। शूद्रो मे भील आदि आदि जातियाँ आती थीं। वे खेती बाड़ी एव निम्न स्तर का काम किया करते थे। देश में शिक्षा का पूरा प्रबन्ध था। शहर से बाहर आश्रम अथवा विद्या मन्दिर हुआ करते थे, लड़कियों को भी पर्याप्त शिक्षा मिला करती थी, परन्तु उनका शिक्षाविषय अधिकतर साहित्य न होकर कला सम्बन्धी और गृह सम्बन्धी हुआ करता था। नृत्य एव सगीत कला का विशेष प्रचार था। कभी कभी नाटक भी खेले जाते थे। चित्र कला और मूर्ति निर्माण कला भी लोकप्रिय थीं। लड़कियों को इधर उधर घूमने की स्वतन्त्रता थी, जो उनके गन्धर्व विवाहों से प्रमाणित होती है। श्रीहर्ष ने अपने 'नागानन्द' नाटक में लिख ही रखा है कि—'निर्दोष दर्शना खलु कन्यका.' अर्थात् लड़कियो को देखने मे कोई बुराई नहीं। लड़कियों का विवाह युवा होने पर ही हुआ करता था। समझदार लड़कियाँ—जैसे सरस्वती, महाश्वेता, कादम्बरी इत्यादि सोच समझकर योग्य वर को ही चुनती थीं, कामान्ध होकर ऐरे गैरे को नहीं। बाल विवाह और विधवा-विवाह नहीं हुआ करते थे, लेकिन बहु-विवाह आम थे। महिलाओं के साथ भद्र व्यवहार हुआ करता था। वे कभी कभी घूँघट भी निकाल लिया करती थीं। अपने श्रेष्ठ पुरुष आदर के पात्र हुआ करते थे। चन्द्रापीड आदरभाव के कारण ही शुकनास के आगे उच्चासन पर न बैठ कर 'क्षिति-तल' पर ही बैठा था। गृहस्थ जीवन साधारणतः सौहार्दपूर्ण रहा करता था। बाण ने यशोमती, विलासवती आदि माताओं का अपने पुत्रों के प्रति कितना गहरा प्रेम वर्णन कर रखा है। परन्तु स्त्रियाँ बच्चों से अधिक प्रेम पतियों को करती थीं। पति यद्यपि घर का सर्वेसर्वा होता था, तो भी घरेलू मामलों में वह अपनी पत्नी की राय ले लिया करता था। प्रभाकरवर्धन ने राज्यश्री का विवाह यशोमती से पूरी सहमति लेकर ही किया था। स्त्रियाँ कभी-कभी सती हो जाया करती थीं। महाराज प्रभाकरवर्धन के गम्भीर रूप से बीमार होने का समाचार पाते ही महारानी यशोमती उनकी मृत्यु से पहले ही भस्म हो गयी थी, क्योंकि उसकी इच्छा थी कि वह 'अविधवा' ही मरे। परन्तु कुछ स्त्रियाँ विधवा ही रहा करती थीं। सती-प्रथा का विरोध समाज में उठ खड़ा हो गया था। महाश्वेता और कादम्बरी के 'अनुमरण' ( सती होने ) के प्रयत्न को बाण ने आत्म हत्या, मूर्खता और महापाप बताकर इसके विरुद्ध प्रबल तर्क दे रखा है। विधवायें धार्मिक जीवन व्यतीत किया करती थीं, जो कष्टमय हुआ करता था। बाण द्वारा उल्लिखित शूद्रक की दिनचर्या से यह भी पता चलता है कि उस समय समाज में तैलाभ्यङ्गपूर्वक व्यायाम को भी महत्त्व दिया जाता था। धूम पान ( परिपीत-धूमवर्ति ) भी लोग किया करते थे।

धार्मिक क्षेत्र में लोगों का पुनर्जन्म में पूरा विश्वास था। भारतीय षोडश संस्कारों का पूरा-पूरा पालन हुआ करता था। उपनयन-संस्कार के बाद बालकों को अध्ययनार्थ आश्रमों में भेजा जाता था। आश्रम के एक कुलपति के नीचे दस हजार छात्रों के अध्ययन और

भोजनावास का प्रबन्ध रहता था। विवाहादि संस्कार खूब धूमधाम से किये जाते थे। जनता का मुख्य धर्म श्रौत स्मार्त था, परन्तु साथ ही बौद्ध धर्म और जैन धर्म भी चलते रहते थे। बौद्ध गेरुआ और जैन पीला वसन पहना करते थे, लेकिन धार्मिक सहिष्णुता देश में पूरी थी। आजकल की जैसी कट्टर साम्प्रदायिकता नहीं थी। खुशी खुशी से कोई धर्म-परिवर्तन कर सकता था। स्वय सम्राट् हर्षवर्धन अपने जीवन के उत्तरार्ध मे बौद्ध धर्म के प्रति आकृष्ट हो गये थे और बौद्ध-धर्म के प्रभाव में ही आकर उन्होंने उसके प्रचार के उद्देश्य से अपना अन्तिम नाटक 'नागानन्द' लिखा था। हाँ, दिगम्बर ( नग्नक्षपणक ) सम्प्रदाय के जैनी अच्छी निगाह से नहीं देखे जाते थे। उनका दिखाई देना अपशकुन में गिना जाता था ( 'अभिमुखमाजगाम शिखि-पिच्छललाञ्छनो नग्नाटक '—हर्षच० )। बौद्ध भिक्षु और भिक्षुणियाँ धर्म के नाम पर प्रेम व्यापारों में बिचौली का काम भी कर लिया करते थे। धर्म के नाम से ठगी भी चला करती थी। बाण ने कादम्बरी में बता रखा है कि किस प्रकार तापसों ने एक द्रविड़ ब्राह्मण को धन और पत्नी दिलाने का झूठा प्रलोभन देकर ठग लिया था। निम्न जातियों मे चण्डिका के आगे बलि देने की भी प्रथा थी। जगह जगह अन्नक्षेत्र, धर्मशाला और प्रपा ( प्याऊ ) भी खुले रहते थे। योग्य व्यक्तियों को दान भी दिया जाता था। न्यायाधिकरण में बहुत कम मुकदमें आया करते थे। कभी आते भी थे, तो वे धर्म-विरुद्धाचरण के, चोरी-डकैती के हुआ करते थे।

राजनैतिक क्षेत्र में देश में साम्राज्यवाद अथवा राज्यवाद था। राजा मन्त्रियों की सहायता से राजकार्य चलाता था। मन्त्रियों में एक मुख्य मन्त्री ( जैसे शुकनास ) होता था। मन्त्री भी 'अनेक कुलक्रमागत' हुआ करते थे, आजकल की तरह निर्वाचित नहीं। सेना में एक प्रधान सेनापति होता था। ह्यूँ साग के अनुसार सेना के चार अग—वाजिसेना, गजसेना, रथसेना और पदातिसेना होते थे। जहाँतक देश की सीमा का प्रश्न है, वह आजकल की अपेक्षा काफी विस्तृत थी। बाण का शूद्रक—'चतुरुदधि-माला मेखलाया भुवो भर्ता' था। पश्चिम की सीमा परसिया तक पहुँची हुई थी और यही कारण था कि परसिया के राजा ने महाराज तारापीड को इन्द्रायुध नाम का पारसी घोड़ा उपहार में भेजा था। देश छोटे-छोटे राज्यों मे विभक्त था। हर्षवर्धन के पूर्वजों का राज्य भी स्थाण्वीश्वर ( थानेसर ) में एक छोटा ही राज्य था। राजों में परस्पर राग-द्वेष और सघर्ष चलता रहता था। राज्यवर्धन की हत्या राजनैतिक षड्यन्त्र था। हर्षवर्धन जब स्थाण्वीश्वर को छोड़ कर कान्यकुब्ज पहुँचे, तो अपने बहनोई और भाई के मारे जाने तथा बहिन के लापता होने के दु:ख से आगबबूले थे ही, अत उन्होंने छः वर्ष के भीतर सभी राजाओं को पददलित कर दिया और चक्रवर्ती बन गये। उनकी राज्य-सीमा हिमालय से नर्मदा तक और बगाल की खाड़ी से सिन्ध तक पहुँच गयी थी।

**मोहनदेव पंत**

# कादम्बरी ।

## पूर्वभागः ।

रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे ।
अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः ॥ १ ॥

---

श्रेय श्रीललनाविलासकुशल पायादपायात्स व
श्रीमन्नाभिनरेन्द्रसूनुरमरै ससेव्यमानान्तिकः ।
रेजे यस्य कचावली भुजशिरोदेशे लुठन्ती प्रभो-
र्लग्ना शैवलमञ्जरी भवसरित्पार प्रयातु किमु ॥
सर्वेऽन्ये जनतानिषेविततया मानाभिभूता भृश
मन्यन्ते तृणवत्त्रिलोकमखिल दुर्बुद्धिबद्धाशया ।
कृत्स्नैश्वर्यजुषापि येन सुधिया देवेन्द्रसेव्याङ्घ्रिणा
नैवाकारि कदापि गर्वमलिन चेत स शान्ति श्रिये ॥
यत्कीर्तिर्धवलीचकार सहसा ब्रह्माण्डभाण्डोदर
दाशार्होऽपि तदन्तरा निपतित सद्यो न सलक्षित ।
तेनाद्यापि निरीश्वर जगदिद जल्पन्ति साङ्ख्यादय-
स श्रीनेमिजिनेश्वरो भवभृता देयादमन्दां मुदम् ॥
मूर्ध्नि न्यस्तद्विजिह्वाधिपतिफणगणस्पष्टसरम्भदम्भा-
द्धत्ते यः सप्तविश्वाद्भुतपरममनोहारिसाम्राज्यलक्ष्मीम् ।
नम्रालुस्वर्गिमौलिप्रकरमणिलसत्कान्तिभिश्चित्रिताङ्घ्रि-
स श्रीपार्श्वाधिराजो भवतु भवभिदे पार्श्वसंसेव्यमान ॥
यद्वाचामधिका विलासपदवीमीहेद् भृशं भारती
यत्सत्त्वैकपरम्परा कलयितु सिंहोऽङ्कदम्भादियाव् ।
यत्सौन्दर्यदिदृक्षयेव समभूदक्ष्णा सहस्र हरे
स श्रीवीरविभुर्ददातु भविनां शश्वन्मनोवाञ्छितम् ॥
श्रीमत्तप पद्मसहस्रदीधिति श्रीहीरसूरि. समभून्महोदय. ।
यद्वक्त्रसौन्दर्यगुण विलोकयन्ययौ सुरौघ किमु निर्निमेषताम् ॥
अनन्यसौजन्यगुणैर्गरीयान्विशिष्टशिष्टाचरणैर्वरीयान् ।
तत्पट्टपाथोनिधिपूर्णचन्द्रो विराजते श्रीविजयादिसेन. ॥

तत्पट्टोदयचूलावलम्बिपूर्णेन्दुसन्निभ श्रीमान् ।
श्रीविजयतिलकसूरिर्भूरिगुणैर्भूषितो जयति ॥
तत्सम्प्रदाये प्रथितप्रभावो बभूव दानर्षिरतिप्रसिद्ध ।
यदीयवैराग्यकथा प्रवक्तु प्राप्तो गुरु किं हरिसन्निधानम् ॥
तद्दीक्षितानेकविनेयवर्गमुक्तालतामध्यमणिप्रकार ।
श्रीवाचकेन्द्र सकलादिचन्द्रो बभूव विश्वाद्भुतवाग्विलास ॥
श्रीसूरचन्द्र समभूत्तदीयशिष्याग्रणीर्न्यायविदा वरेण्य ।
यत्तर्कयुक्त्या त्रिदिव निषेवे तिरस्कृतश्चित्रशिखण्डिजोऽपि ॥
तदीयपादाम्बुजचञ्चरीको विराजतेऽद्धा हरिधीसखाभ ।
श्रीवाचक सम्प्रति भानुचन्द्रो ह्यकब्बरक्ष्मापतिदत्तमानः ॥
श्रीशाहिचेतोऽब्जषडङ्घ्रितुल्य श्रीसिद्धचन्द्रोऽस्ति मदीयशिष्यः ।
कादम्बरीवृत्तिरियं तदीयमनोमुदे तेन मया प्रतन्यते ॥

इह हि विशिष्टशिष्टाचारानुमितश्रुतिबोधितकर्तव्यताक प्रारिप्सितविघ्नविघातफलकं हिरण्यगर्भनमस्कारात्मक मङ्गलमाचरति—रजोजुष इति । अजाय स्वयभुवे नम इत्यन्वय । किंभूताय । प्रजानां जन्मनि सृष्टिकाले रजोजुषे रजोगुणयुक्ताय । पुन किंविशिष्टाय । प्रजाना स्थितौ स्थितिकाले सत्त्ववृत्तये सत्त्वस्य वृत्तिर्यस्मिन् । सत्त्वगुणयुतायेत्यर्थ । पुन किंलक्षणाय । प्रजानां प्रलये विनाशकाले तम स्पृशे तमोगुणयुक्ताय । अमीषा च गुणाना लक्षण 'सत्त्वं लघु प्रकाशक च, चलमवष्टम्भक च रज । गुर्वावरण च तम.' इति द्रष्टव्यम् । जन्मनि स्थितौ प्रलये चेति निमित्तसप्तमी वा । पुन किंविशिष्टाय । सर्गस्थितिनाशहेतवे प्रजानामित्यस्य सर्वत्रानुषङ्ग । तेन प्रजाना सर्ग. स्थितिश्च नाशश्च तेषा हेतवे कारणीभूताय । पुन किंलक्षणाय । त्रयीमयाय । त्रयी ब्रह्मविष्णुमहेशानाम् । वेदाना वा त्रयी । तन्मयाय तत्स्वरूपाय । पुन किंविशिष्टाय । त्रिगुणात्मने ब्रह्मविष्णुमहेशात्मकत्वेन तत्तद्गुणयोगात्त्रिगुणात्मकाय । सत्त्वरजस्तमोगुणस्वरूपायेत्यर्थ । तादृशाय पितामहाय नम इति प्राचीनव्याख्या ॥ अत्र च व्याख्याने विधे सृष्टिमात्रकर्तृत्वेन केवल रजोगुणस्यैव सबन्धात्त्रिगुणात्मकत्वमतिविरुद्धम् । किंच विधेस्तमोगुणवत्त्वे सत्त्वगुणवत्त्वे वा शिवत्व विष्णुत्व च व्यपदिश्येत । एतेषा त्रयाणा गुणभेदादेव मूर्तिभेद इति पौराणिका । अपिच पूर्वार्धे जन्मस्थितिप्रलयकर्तृत्वस्य रजोजुषे सत्त्ववृत्तये तम स्पृश इत्यनेन त्रिगुणात्मकत्वस्यापि चोक्तत्वेन पुनरुत्तरार्धे सर्गस्थितिनाशहेतव इति त्रिगुणात्मन इति च पुनरुक्तत्वादिति प्रकारान्तरेण व्याख्यास्याम —अजाय कूटस्थनित्याय परब्रह्मणे नम इत्यन्वय । किंभूताय । प्रजाना सर्गस्थितिनाशहेतवे । प्रजानामित्यनित्यमात्रपदार्थोपलक्षकम् । तेनानित्यपदार्थाना सर्गस्थितिनाशकारणायेत्यर्थ· । अनित्यपदार्थाना सृष्टिस्थितिनाशहेतुत्व च श्रुतिसिद्धम् । 'जगत्कारण ब्रह्म' इति श्रुते । पुन. किंभूताय । त्रयीमयाय । त्रयी वेदाना त्रयी तत्स्वरूपाय । 'वेद एव परं ब्रह्म' इत्युक्तत्वात् । यद्वा । त्रयी ब्रह्मविष्णुमहेशानां त्रयी तत्स्वरूपाय । यथा मृद उत्पन्नेऽपि घटे मृन्मय इति व्यवहारस्तथा ब्रह्मणस्त्रयाणामुत्पादकत्वेऽपि त्रयीमयत्वव्यवहार. समुचित. । ब्रह्मविष्णुमहेशाख्यो जीवा एवेति वेदान्तिन । अतएव त्रिगुणात्मकाय । भेदाभेद-

जयन्ति बाणासुरमौलिलालिता दशास्यचूडामणिचक्रचुम्बिनः ।
सुरासुराधीशशिखान्तशायिनो भवच्छिदस्त्र्यम्बकपादपांसवः ॥ २ ॥
जयत्युपेन्द्रः स चकार दूरतो बिभित्सया यः क्षणलब्धलक्ष्यया ।
दृशैव कोपारुणया रिपोरुरः स्वयं भयाद्भिन्नमिवास्रपाटलम् ॥ ३ ॥

विवक्षयेत्यर्थः । तस्मै परब्रह्मणे' कथं ब्रह्मविष्णुमहेशात्मकत्वमत आह—प्रजानां जन्मनि सृष्टौ रजोजुट् प्रजापतिस्तत्स्वरूपायेत्यर्थः । पुनः प्रजानां स्थितौ सत्त्ववृत्तिर्विष्णुस्तत्स्वरूपाय । पुनः प्रजानां प्रलये तमःस्पृक् शिवस्तत्स्वरूपाय । यथैकस्यैव स्फटिकस्य नीलपीतादिगुणसम्बन्धान्नील पीत इति व्यवहारस्तथैकस्यैव परब्रह्मणः सृष्टिकाले रजोगुणसम्बन्धात् ब्रह्मेति, स्थितिकाले सत्त्वसम्बन्धाद्विष्णुरिति, प्रलये तमःसम्बन्धादीश्वर इति व्यवहारः । तेन परब्रह्मण एवायं नमस्कार इति किं बहुना ॥ १ ॥

जयन्तीति । त्र्यम्बकस्य शिवस्य पादपांसवश्चरणरेणवो जयन्ति । सर्वोत्कर्षेण वर्तन्त इत्यर्थः । कथंभूताः । बाणासुरेति । बाणो बाणनामासुरस्तस्य मौलिना मुकुटेन वा लालिता परिचिताः । पुनः किंविशिष्टाः । दशास्येति । दशास्यो रावणस्तस्य चूडामणयः शिरोमणयस्तेषां चक्रं समूहं चुम्बन्ति स्पृशन्तीत्येवंशीलाः । पुनः किंविशिष्टाः । सुरेति । सुराश्चासुराश्च तेषामधीशाः स्वामिनस्तेषां शिखाश्चूडास्तासामन्तः प्रान्तस्तत्र शेरत इत्येवंशीलाः' । पुनः किंविशिष्टाः । भवच्छिदः । संसारविच्छेदिन इत्यर्थः । अत्र पूर्वविशेषणत्रयेण परमेश्वरचरणरजसः परमैश्वर्यं भवच्छिद इत्यनेन च संसारिणां संसारदुःखनिवारकत्वमुक्तमिति ॥ २ ॥

जयतीति । स उपेन्द्रो विष्णुर्नृसिंहावतारी जयति सर्वोत्कृष्टत्वेन वर्तते । स कः । यो नृसिंहो बिभित्सया भेत्तुमिच्छया दूरतो दूरादेव क्षणं लब्धं लक्ष्यमवलोकनैकाग्रत्वं यया अत एव कोपेन रोषेण अरुणया आरक्तया दृशैव दृष्ट्यैव रिपोः शत्रोर्हिरण्यकशिपोः उरो वक्षःस्थलमस्ररुधिरं तद्वत्पाटलमारक्तं चकार । भयाद्विदारणभीत्या स्वयमेव भिन्नमिवेति कवेरुत्प्रेक्षा ॥ ३ ॥

उस अजन्मा ( परब्रह्म ) को नमस्कार है जिसमें ( उसके ज्ञानाकार होने के कारण ) तीनों वेद सम्मिलित हैं, तीन गुण ( सत्त्व, रज और तम ) जिसका सारतत्त्व है, जो सृष्टि के सर्जन, पालन और विघटन का कारण है, जो सृष्ट पदार्थों के जन्म के समय रजोगुण से युक्त हो जाता है, उनके पालन के समय सत्त्वगुणप्रधान होता है और उनके विनाश के समय तमोगुण को धारण कर लेता है ॥ १ ॥

शिवजी के पाँवों की वे धूलियाँ विजयी ( सर्वोत्कृष्ट ) हैं जो जन्ममरण ( के चक्र ) को काट देती हैं, जिनको बाणासुर ने अपने मुकुट ( अथवा ) मस्तक पर उठाया था, जो रावण के मुकुट ( में लगीं ) मणियों के समूह पर पड़ी थीं, और जो सुरों एवं असुरों, दोनों के अधिपतियों के केशों ( सिरों ) के अग्रभागों पर विश्राम करती हैं—वहाँ पड़ी रहती हैं ॥ २ ॥

वह उपेन्द्र ( विष्णु ) विजयी है जिसने अपने क्रोध के कारण लाल हुई तथा इसके ( शत्रु रूप लक्ष्य को ) बींधने की इच्छा[1] से केवल एक क्षणभर के लिये ही उधर फिरायी हुई दृष्टि से अपने शत्रु की छाती को रक्त सदृश लाल कर दिया था, मानो कि वह भय से स्वयं ही फट गयी हो ॥ ३ ॥

१. बिभित्सा, भिदिर् + सन् + टाप् ।

नमामि भत्सोश्चरणाम्बुजद्वय सशेखरैर्मौखरिभिः कृतार्चनम् ।
समस्तसामन्तकिरीटवेदिकाविटङ्कपीठोल्लुठितारुणाङ्गुलि ॥ ४ ॥
अकारणाविष्कृतवैरदारुणादसज्जनात्कस्य भयं न जायते ।
विष महाहेरिव यस्य दुर्वचः सुदुःसह सन्निहितं सदा मुखे ॥ ५ ॥
कटु कणन्तो मलदायकाः खलास्तुदन्त्यल बन्धनश्रृङ्खला इव ।
मनस्तु साधुध्वनिभिः पदे पदे हरन्ति सन्तो मणिनूपुरा इव ॥ ६ ॥

---

शश्वद्गुरोर्नमस्कार कुर्वन्नाह—**नमामीति**। भत्सुरिति गुरोर्नाम । क्वचित्तु 'भर्त्सु' इति पाठ । तस्य चरणाम्बुजद्वय पादकमलयुगल नमामि नमस्करोमि । किंभूतम् । सशेखरै समुकुटैर्मौखरिभि क्षत्रियविशेषै कृत विहितमर्चन पूजन यस्य तत्तथा । पुन किंविशिष्टम् । **समस्तेति**। समस्ता समग्रा ये सामन्ता विषयान्तरराजास्तेषा किरीटानि कोटीराण्येव वेदिका परिष्कृता भूमि । विस्तीर्णत्वात्तत्साम्यम् । तस्या विटङ्को मध्य उन्नतप्रदेश । विटङ्क-शब्दस्य कपोताद्याधारभूतकाष्ठवाचित्वेऽप्यत्र लक्षणयोन्नतत्वमात्रवाचित्वम् । विटङ्क एव पीठ स्थल तत्रोल्लुठिता घृष्टा अत एवारुणा रक्ता । तत्रत्यरक्तादिसम्बन्धात्स्वभावेन चारुणा अङ्गुलय करशाखा यस्येति तत्तथा ॥ ४ ॥

**अकारणेति**। असज्जनात्खलात्कस्य साधोर्भय साध्वस न जायते न भवति । अपितु सर्वस्यापि भवतीत्यर्थः । कथभूतादसज्जनात् । **अकारणेत्यादि**। अकारणमनिमित्तमेवाविष्कृत प्रकटीकृतं यद्वैर विरोध' तेन दारुणात् क्रूरान्निष्ठुरात् । यस्य खलस्य सदा निरन्तर मुख आनने सन्निहित निकटस्थं दुर्वचो दुष्टवचन सुदु सहमत्यन्तोद्वेगजनक भवति । यथा महाहेर्महोरगस्य विष गरलं मुखे सन्निहित परमसन्तापकत्वाद् दु सहमित्युपमा ॥ ५ ॥

**कट्विति**। खला दुर्जना. साधून्सज्जनानलमत्यर्थं तुदन्ति पीडयन्ति । किं कुर्वन्त । कणन्तो रटन्त । किम् । कटु । अर्थाद् दुर्वचनमित्यर्थ । पुन किंविशिष्टा. । मलदायका मलो मिथ्याकलङ्कस्तस्य दायका । आरोपका इत्यर्थ । क इव । बन्धनश्रृङ्खला इव । बन्धन मनुष्या-दैस्तदर्थं श्रृङ्खला लोहनिगडा इव । तेऽपि कटु कुत्सित शब्दायमाना मल स्वसम्पर्कात्स्वमालिन्य

---

मैं 'भत्सु' के कमल-सदृश उस चरणयुगल को प्रणाम करता हूँ जिसको मौखरि वंश के क्षत्रिय अथवा राजा (अपने) मुकुट पहन कर पूजते हैं और जिसकी लाल अंगुलियाँ सभी सामन्तों (करद राजाओं) के मुकुटों से बनी वेदी रूप आसन पर लोटती हैं (उसपर रगड़ खाती हैं) ॥ ४ ॥

उस दुष्ट व्यक्ति से कौन नहीं डरता जो बिना कारण ही शत्रुता दिखाने के कारण भयानक है और जिसके मुख में (अत्यन्त दुस्सह) दुर्वचन सदा इस भाँति विद्यमान रहते हैं जैसे किसी बड़े साँप के मुख में उग्रविष सदा विद्यमान रहता है ॥ ५ ॥

कटु वचन बोलते हुए तथा अपवाद (मल-निन्दा) करनेवाले दुष्ट जन कर्कश ध्वनि करनेवाली तथा जंग (का मैल) लगा देनेवाली बेड़ियों की भाँति अत्यन्त दुःख पहुँचाते हैं। परन्तु सज्जनगण सुष्ठु वचनों द्वारा मनको सदा हर्षित करते हैं—जैसे कि मणियों से बड़े नूपुर प्रत्येक कदम पर अपनी मधुर झणझणाहट से मन को हर्षाते हैं ॥ ६ ॥

सुभाषित हारि विशत्यधो गलान्न दुर्जनस्यार्करिपोरिवामृतम् ।
तदेव धत्ते हृदयेन सज्जनो हरिर्महारत्नमिवातिनिर्मलम् ॥ ७ ॥
स्फुरत्कलालापविलासकोमला करोति राग हृदि कौतुकाधिकम् ।
रसेन शय्या स्वयमभ्युपागता कथा जनस्याभिनवा वधूरिव ॥ ८ ॥

तस्यारोपका स्वाच्छन्द्येन गतागतावरोधका भवन्तीति । उत्तरार्धेन साधून्स्तौति–सन्त सुजनास्तु साधुध्वनिभिर्मनोहारिशब्दैर्वचनै पदे पदे शब्दे शब्दे प्रतिक्षण वा मनश्चित्तं हरन्ति गृह्णन्ति । क इव । यथा मणिखचिता नूपुरा मञ्जीराणि पदे पदे अर्थात्कामिनीना चरणप्रक्षेपे प्रक्षेपे साधुध्वनिभिर्मञ्जुलसिञ्जितैर्हृदयहारिणो भवन्तीत्युपमा ॥ ६ ॥

सुभाषितमिति । सुभाषित सुकाव्यादि हारि मनोहार्यपि दुर्जनस्य खलस्य गलात् कण्ठाग्निगरणादधो न विशति न गच्छति । हृदयशून्यत्वादिति भाव: । कस्येव । अर्करिपो॰ पीयमानममृत यथा न हृदय विशति पूर्वोक्तहेतोरेव । तदेव सुभाषित सज्जनो गुणग्राहको हृदयेन स्वान्तेन धत्ते धारयति । सहृदयत्वान्न कदाचिद्विस्मरतीति भाव । यथा हरि विष्णुर्नारायणो हृदयेन वक्ष स्थलेनातिनिर्मल स्वच्छ महारत्न कौस्तुभ दधाति ॥ ७ ॥

स्फुरदिति । अभिनवा कथा गद्यपद्यमयी रसेन शृङ्गारादिना कृत्वा जनस्य सहृदय-जनस्य हृद्यन्त करणे कौतुक कुतूहलमधिक यस्मिंस्तत्कौतुकाधिकम् । कौतुकपूर्णमित्यर्थं । तादृश राग प्रीतिं करोति जनयति । किंभूता । स्फुरदिति । स्फुरश्चञ्चन्कलो मधुरो य आलाप शब्दरचना तस्य विलासो माधुर्यं तेन कोमला मृद्वी । अन्यत्रापि कथायामालापादिक भवत्येवेति ध्वनि । पुन किंविशिष्टा । शय्यामभ्युपागता प्राप्ता । 'शय्या तल्पे शब्दगुम्फे' इत्यनेकार्थं । यथाभिनवा नवोढा वधू रसेन प्रेम्णा स्वयमेव अर्थाद्भर्तृजनस्य शय्यां पल्यङ्कमागता कौतुकम-नुराग च करोति । किंभूता वधू । स्फुरन् प्रसर्पन् य कलो मन्द्र आलापविलासो वचनव्यापारस्तेन कोमला सुन्दरा । 'कोमल मृदु सुन्दरे' इति विश्व ॥ ८ ॥

सुभाषित, ( यदि ) मनोहारी हो ( तो भी ) दुर्जन के गले नहीं उतरता ( अर्थात् दुर्जन उसका मूल्याकन नहीं कर सकता ), जैसे कि अमृत राहु के गले म नहीं उतरता, परन्तु उसी ( सुभाषित ) को सज्जन अपने हृदय मे सजो कर रखता[1] है—जैसे कि विष्णु मूल्यवान तथा अत्यन्त निर्मल मणि ( कौस्तुभ मणि ) को ( अपने वक्ष पर ) पहनता है ॥ ७ ॥

जैसे मधुर वाणी तथा ( अपने द्वारा ) प्रदर्शित कामक्रीडाओं के कारण आक-र्षक बनी हुई तथा स्वयमेव अपने प्रेमी की शय्या पर आयी हुई नववधू प्रेमी के हृदय मे उत्सुकताबहुल अनुराग को उत्पन्न कर देती है वैसे ही रोचक सलापों तथा ( उसमें वर्णित ) कामक्रीडाओं से ललित हुई कथा ( काव्यरचना ) उसमे व्याप्त कोमल भावनाओं के कारण स्वयमेव ( शय्या अर्थात् ) समुचित रचना रूप में गुम्फित हुई व्यक्ति के हृदय मे उत्सुकता से जगाये हर्ष को उत्पन्न कर देती है ॥ ८ ॥

१ धृ, वह् अथवा धारणार्थक धातुओं के योग में जिस स्थान पर रख कर वस्तु उठायी जाती है वह 'करण' होता है । करण में तृतीया विभक्ति है ।

हरन्ति क नोज्ज्वलदीपकोपमैर्नवैः पदार्थैरुपपादिताः कथाः ।
निरन्तरश्लेषघनाः सुजातयो महास्रजश्चम्पककुड्मलैरिव ॥ ९ ॥
बभूव वात्स्यायनवंशसम्भवो द्विजो जगद्गीतगुणोऽग्रणीः सताम् ।
अनेकगुप्तार्चितपादपङ्कजः कुबेरनामांश इव स्वयम्भुवः ॥ १० ॥

हरन्तीति । नवै स्वबुद्ध्यैव रचितै पदार्थै पदाना शब्दानामर्थैरभिधेयै उपपादिता निर्मिता रचिता. कथा गद्यपद्यादिप्रबन्धा क सहृदय जन न हरन्ति न वशीकुर्वन्ति । सर्वस्यापि मनोहारिण्यो भवन्तीति भाव । कीदृशै पदार्थैः । उज्ज्वलदीपकोपमैरुज्ज्वल प्रकटो दीपकोऽलङ्कारविशेष उपमा च येषु ते तथा तै । 'शृङ्गार शुचिरुज्ज्वल' इत्यमर. । कीदृश्य. कथा. । निरन्तरेति । निरन्तरमव्यवधान प्रतिपद वा । उपमानोपमेययोरर्थसाम्यरूपः शब्दसाम्यरूपो वा यः श्लेषस्तेन घना बहुलतरा । पुन किंभूता । सुजातय इति । सुष्ठु जातिश्छन्दोविशेषो यासु । यद्वा । सुष्ठु जाति स्वरूप यासा ता इव । यथा नवैरम्लानैश्चम्पककुड्मलैर्हेमपुष्पकमुकुलैरुपपादिता महास्रजो महामाला मनो हरन्ति । अत्र यद्यपि कुड्मलैर्मालानिर्माणे नातीव रम्यत्व तथाप्यग्रिमक्षणे विकासोन्मुखकुड्मलैर्मालानिर्माणे त्वौचित्यमेव । कीदृशैश्चम्पककुड्मलै. । उज्ज्वलो यो दीपक. प्रदीपक. प्रदीपस्तदुपमैस्तत्तुल्यै । किंभूता स्रज । निरन्तर सान्द्रतर य श्लेषो ग्रथना तेन घना निबिडा । पुनः किंभूता । सुष्ठु जातयो जातीपुष्पाणि यासु ता. ॥९॥

कीर्त्यनुवृत्त्यर्थं स्ववंश्यानाह—बभूवेति । कुबेरनामा द्विजो ब्राह्मणो बभूवासीत् । कथंभूत । वात्स्यायन इति । वात्स्यायननामा ऋषिस्तस्याय वात्स्यायनो वंशोऽन्वयस्तस्मिन्सभव समुत्पन्न । वत्सगोत्रीय इत्यर्थ. । द्विज इति च द्विजोत्कृष्टत्वसूचनार्थम् । यथा गजमात्रस्य दन्तवत्त्वेऽप्युत्कृष्टदन्ते दन्तीति प्रयोग । पुन. कीदृश । जगदिति । जगति विश्वस्मिन्नुद्गीता उत्प्राबल्येन गानविषयीकृता गुणा शौर्यादयो यस्य स तथा । पुन' कीदृश । सताम् अग्रणी साधूनामग्रेसर । किंभूत. । अनेकेति । अनेकेऽसंख्या ये गुप्ता गुप्तनामाङ्किता वैश्यशूद्रादय. । तदुक्तम्—'शर्मान्त ब्राह्मणस्योक्त वर्मान्त क्षत्रियस्य तु । गुप्तदासात्मकं नाम प्रशस्त वैश्यशूद्रयो ॥' इति । तैरर्चित पादपङ्कज चरणसरोज यस्य स तथा । पुन कीदृश इव । स्वयंभुवो ब्रह्मणोंऽशोऽवतार एकदेशरूप इव । अतिवैदिकत्वादिति भाव ॥ १० ॥

नये नये[1] तथा भड़कीले 'दीपक' तथा 'उपमा' अलकारो से भरे पदो से भरी वे रचनायें जो निरन्तर ( पदपद पर ) आये श्लेषो के कारण सुश्लिष्ट हैं और जिनमे जाति अलकार प्रचुर है, चम्पककलियो से बनायी गयीं उन बड़ी मालाओ के समान किसको आनन्दित नहीं करतीं जो ( फूलो को ) विना अन्तर लगाने से सुग्रथित है और जिनमे सुन्दर जाति-पुष्प भरे पड़े है ॥ ९ ॥

वात्स्यायन कुल में उत्पन्न हुआ, ससार भर द्वारा गाये गये गुणो वाला, सज्जनो में अग्रणी, अनेक गुप्तों ( गुप्त राजाओ ) द्वारा पूजित चरण कमलों वाला, स्वयभू ब्रह्मा का अशावतार सदृश प्रतीत होता हुआ कुबेर नाम का एक ब्राह्मण था ॥ १० ॥

१ 'नवै. पदार्थै' का अर्थ स्वय अपनी बुद्धि से रचे हुए पदों के अर्थों अर्थात् अभिधेयों से रचित ( उपपादित ) भी है ।

उवास यस्य श्रुतिशान्तकल्मषे सदा पुरोडाशपवित्रिताधरे ।
सरस्वती सोमकषायितोदरे समस्तशास्त्रस्मृतिबन्धुरे मुखे ॥ ११ ॥
जगुर्गृहेऽभ्यस्तसमस्तवाङ्मयैः ससारिकैः पञ्जरवर्तिभिः शुकैः ।
निगृह्यमाणा बटवः पदे पदे यजूंषि सामानि च यस्य शङ्किताः ॥ १२ ॥

---

**उवासेति** । यस्य कुबेरद्विजस्य मुख आनने सरस्वती वाग्देव्युवास । वसति स्मेत्यर्थः । किंभूते मुखे । **श्रुतीति** । श्रुतिभिर्वेदाध्ययनै शान्तमुपशमित कल्मष पाप यस्य तत्तथा । परमपवित्र इत्यर्थं । पुन कथभूते । **सदेति** । सदा सर्वकाले पुरोडाशेनाग्निहोत्रे देवेभ्यो दत्तहवि शेषेण पवित्रित पावनीकृतोऽधर ओष्ठो यस्य तत्तथा तस्मिन् । पुन किंविशिष्टे । **सोमेति** । सोमेन सोमयागे सोमसञ्ज्ञकलतारसेन कषायित किञ्चित्कटुकीभूतमुदर मध्यभागो यस्य तत्तथा तस्मिन् । सोमस्य किञ्चित्कटुत्वादिति भाव । पुनः कीदृशे । **समस्तेति** । समस्तानि समग्राणि यानि शास्त्राणि व्यासादिप्रणीतसूत्ररूपाणि स्मृतयश्च मन्वादिप्रणीता धर्मनिबन्धास्ताभिर्बन्धुरम् । मनोहरमित्यर्थः । तस्मिन् ॥ ११ ॥

**जगुरिति**—यस्य कुबेरविप्रस्य गृहे बटव शिष्यभूता ब्रह्मचारिण शङ्किता सत्रासा सन्तो [ यजूषि ] यजुर्वेदान् सामानि सामवेदाश्च जगु । पठन्ति स्मेत्यर्थ । शङ्कितत्वे बीजमाह–किंभूता बटव । निगृह्यमाणा निग्रहो निर्भर्त्सनं तेन त्रास्यमाना । कस्मिन् । पदे पदे शुद्धपाठकै शुकै कीरै । कथभूतैस्तै । ससारिकै सारिकाभि सह वर्तमानै । अनेन सारिकाणामपि विद्यावत्त्व सूचितम् । पुन कथभूतै । **पञ्जरवर्तिभिरिति** । पञ्जरो लोहशलाकानिर्मित पक्षिगृह तत्र वर्तिभि । तस्थितैरित्यर्थ । पुन कीदृशै । **अभ्यस्तेति** । अभ्यस्त जिह्वाग्रवर्ति समस्त समग्र वाङ्मय चतुर्दशविद्यात्मक येषा ते तथा तै । समस्तविद्यापारगतैरित्यर्थ । 'भवद्भिरशुद्ध पठ्यते । वय गुरुनिकटे कथयित्वा ताडन कारयिष्याम ।' ईदृश शुकवचनमाकर्ण्य ते भीता सन्त पठन्ति बटव । यद्गृहे शुकानामप्येतादृशज्ञानमिति तन्महिमोपवर्णनम् ॥ १२ ॥

---

उसके उस मुख मे वाणी की देवी सरस्वती सदा रहती थी—उस मुख में जिसके पाप वेद ( के पाठ ) से नष्ट हो गये थे, जिसके अधर सदा पुरोडाश ( यज्ञशेष ) से पवित्र किये रहते थे, जिसका भीतरी भाग ( उदर ) सोमरस ( के पान करने ) से कसैला हो गया था और जो ( उसमें उपस्थित ) श्रुतियों तथा शास्त्रों के ( पाठ- ) स्मरण के कारण आकर्षक था ॥ ११ ॥

उस ब्राह्मण के घर में सारे साहित्य ( वाङ्मय ) को कण्ठाग्र किये हुए पिञ्जरों में बन्द, मैनाओं समेत, तोतों द्वारा प्रत्येक शब्द पर टोके जाते ब्रह्मचारी ( शिष्य ) बड़ी हिचक के साथ यजुर्वेद तथा सामवेद का पाठ करते थे ॥ १२ ॥

हिरण्यगर्भो भुवनाण्डकादिव क्षपाकरः क्षीरमहार्णवादिव ।
अभूत्सुपर्णो विनतोदरादिव द्विजन्मनामर्थपतिः पतिस्ततः ॥ १३ ॥
विवृण्वतो यस्य विसारि वाङ्मय दिने दिने शिष्यगणा नवा नवाः ।
उषःसु लग्नाः श्रवणेऽधिका श्रिय प्रचक्रिरे चन्दनपल्लवा इव ॥ १४ ॥
विधानसम्पादितदानशोभितैः स्फुरन्महावीरसनाथमूर्तिभिः ।
मखैरसंख्यैरजयत्सुरालय सुखेन यो यूपकरैर्गजैरिव ॥ १५ ॥

---

हिरण्येति । तत कुबेरादर्थपतिनामा पुत्रोऽभूत् । किंभूत । द्विजन्मना ब्राह्मणाना पति श्रेष्ठ । क कस्मादिव । यथा भुवनस्याण्डक ब्रह्माण्ड तस्माद्धिरण्यगर्भ स्वयभू । हिरण्यगर्भोपमया वेदपारगत्व सूचितम् । पुन क कस्मादिव । क्षीरमहार्णवाद् दुग्धोदधे क्षपाकर शशाङ्क । क्षीरसमुद्रोत्थचन्द्रोपमया च समस्तजनाह्लादकत्व सूचितम् । पुन क कस्मादिव । विनता पक्षिणी तस्या उदरात्कुक्षे सुपर्णो गरुड इव । अनेन नारायणपरायणत्व सूचितम् । गरुडपक्षे द्विजन्मना पक्षिणाम् । ब्रह्मपक्षे चन्द्रपक्षे च द्विजन्मना ब्राह्मणाना पतिरित्यपि योज्यम् ॥ १३ ॥

विवृण्वत इति । नवा नवा नूतना । उत्तरोत्तर बुद्धिशालिन इति यावत् । एतादृशा शिष्यगणाश्छात्रचया यस्य अर्थपतेर्गुरोरधिका श्रिय शोभा प्रचक्रिरे वितेनिरे । पुन किंभूतस्य यस्य । दिने दिन उष सु प्रात समयेषु विसारि विसरणशील वाङ्मय चतुर्दशविद्यात्मक विवृण्वत । अध्यापयत इत्यर्थ । किंभूता शिष्या । श्रवणे गुरोर्वचनाकर्णने लग्ना सावधाना । यद्वा । श्रवणे कर्णे लग्ना । जगद्विदिता इत्यर्थ. । क इव । यथा चन्दनवृक्षस्य मलयजतरो पल्लवा किसलयानि नवा नवा प्रतिदिनमम्लाना श्रवणे कर्णे लग्ना सन्त शोभा कुर्वन्ति । रमण्या इति शेष ॥ १४ ॥

विधानेति । योऽर्थपतिरसख्यैरगण्यैर्मखैर्यज्ञै सुखेनाप्रयासेन सुरालय स्वर्गमजयत् । आचक्रामेत्यर्थ । किंभूतैर्मखै । विधानेति । विधानेन विध्युक्तमार्गेण सम्पादित विहित यद्दान

---

उस द्विज से ब्राह्मणो का मुखिया अर्थपति इस प्रकार उत्पन्न[१] हुआ जिस प्रकार कि ब्रह्माण्ड से हिरण्यगर्भ अथवा क्षीरसागर से चन्द्रमा अथवा ( अपनी माता ) विनता के गर्भ से गरुड उत्पन्न हुआ था ॥ १३ ॥

जिस प्रकार प्रात काल ( स्त्रियो के ) कानों पर रखे हुए ताजे चन्दन पल्लव शोभा को बढ़ाते हैं उसी प्रकार प्रतिदिन प्रात.काल विस्तृत साहित्य की व्याख्या करते हुए उस अर्थपति के सदा नये बनते हुए वचनों को सुनने में दत्तचित्त शिष्यों ने उसके यश को बढ़ाया था ॥ १४ ॥

१५ उस अर्थपति ने विहित नियमों के अनुसार दिये गये दानों से सुशोभित, देदीप्यमान महावीरअग्नियों ( श्रौताग्नियों ) से सयुक्त स्वरूप वाले तथा यज्ञस्तम्भरूप हाथों

---

१ 'भुवः प्रभव' इस सूत्र द्वारा उत्पत्ति के स्रोत की अपादान-सज्ञा होने के कारण पंचमी विभक्ति हुई है ।

स चित्रभानुं तनयं महात्मनां सुतोत्तमानां श्रुतिशास्त्रशालिनाम् ।
अवाप मध्ये स्फटिकोपलोपम क्रमेण कैलासमिव क्षमाभृताम् ॥ १६ ॥
महात्मनो यस्य सुदूरनिर्गताः कलङ्कमुक्तेन्दुकलामलत्विषः ।
द्विषन्मनः प्राविविशुः कृतान्तरा गुणा नृसिंहस्य नखाङ्कुरा इव ॥ १७ ॥

---

ब्राह्मणेभ्य स्वर्णादिप्रतिपादन तेन शोभितै । विशिष्टदक्षिणैरित्यर्थ । पुन किंभूतै । स्फुरदिति । स्फुरन्त उज्ज्वलन्तो ये महावीरा श्रौताग्नयस्तै सनाथा सहिता मूर्ति स्वरूप येषा ते तथा तै । अग्नित्रयसहितैरित्यर्थ । 'होमाग्निस्तु महाज्वालो महावीर प्रवर्गवत्' इति कोश । पुन किंभूतै । यूपकरैरिति । यूपा यज्ञे पशुबन्धनार्थं स्तम्भविशेषास्त एव करा हस्ता येषा ते तथा तै । कैरिव गजैरिवेति यज्ञगजयो शब्दसाम्येनोपमा । किंभूतैर्गजै । विधानेन मदोद्रेकार्थं गजादीना दीयमानभक्ष्यविशेषेण । अत एव ' विधानपिण्डस्नेहप्लुति-स्नपितबाहुरिभाधिराजम्' इति माघे । तेन सम्पादित निष्पन्न यद्दान मदजल तेन शोभितै । पुन पक्षे स्फुरन्त शूरा ये महावीरा योद्धारस्तै सनाथमूर्तिभि । अधिष्ठितैरित्यर्थ । पुन पक्षे यूपवद्यज्ञस्तम्भवत्कर शुण्डादण्डो येषा ते तथा तै ॥ १५ ॥

स इति । सोऽर्थपति क्रमेण । वशक्रमेणेत्यर्थ । महात्मना जितेन्द्रियाणा श्रुतिशास्त्र-शालिना श्रुतिशास्त्राध्यापकाना सुतोत्तमाना पुत्राणा मध्ये चित्रभानुसज्ञक पुत्रमवाप लेभे । किंभूतम् । स्फटिकमिति । स्फटिकोपल क्षीरतैलस्फटिकाभ्यामन्य स्वच्छस्फटिकस्तद्वदुपमा यस्य स तथा तम् । निष्कलङ्कमित्यर्थ । किंभूताना सुतोत्तमानाम् । क्षमाभृतां क्षान्तिमताम् । भूधराणा मध्ये वरमित्यर्थ । 'क्षितिक्षान्त्यो क्षमा' इत्यमर । पक्षे स्फटिकाश्मभिर्निर्मित स्फटिकमयत्वात्कैलासस्येति ॥ १६ ॥

महेति । महात्मनो यस्य चित्रभानोर्गुणा । अपिशब्दाध्याहारेण पितु समाना अपि द्विषन्मन शत्रूणामप्यन्त करण प्राविविशु प्रवेश चक्रु । किं पुन सज्जनानामिति । किंभूता गुणा । सुदूरनिर्गता । दिगन्त गता इत्यर्थ । पुन कीदृशा । कलङ्केति । कलङ्केन लक्षणेन

---

वाले असख्य यज्ञों द्वारा स्वर्ग को इस प्रकार सरलता से जीत लिया था कि मानो यह विजय उसने विधान[1] (भोजन) द्वारा उत्पादित मदजल से सुशोभित, उन हाथियो द्वारा प्राप्त की हो जिन पर अत्यन्त साहसी महायोद्धा सवार हैं और जिनकी सूँड यज्ञस्तम्भ के समान हो ।१५।

उसने उचित समय पर अपने सभी वेदशास्त्र पढ़े हुए तथा उत्कृष्ट एव उच्चात्मा पुत्रों मे चित्रभानु नाम के पुत्र को प्राप्त किया, वह चित्रभानु क्षमाशीलों के मध्य स्फटिक-मणि-सा स्वच्छ-पवित्र था अतएव मानो पर्वतों के मध्य स्फटिक प्रस्तरों द्वारा श्वेत हुआ कैलास पर्वत ही था ॥ १६ ॥

उस महात्मा के दूर-दूरतक पहुँचे (दिगन्तव्यापी) तथा कलङ्करहित चन्द्रकला के समान निर्मल कान्तिवाले गुण, (बलात्) प्रवेश-मार्ग बनाकर उसके शत्रुओं के मन में

---

१. विधान हस्तिकवलम् इति वैजयन्ती । मदोद्रेक के हेतु दिया जानेवाला भक्ष्यविशेष ।

दिशामलीकालकभङ्गतां गतस्त्रयीवधूकर्णतमालपल्लवः ।
चकार यस्याध्वरधूमसञ्चयो मलीमसः शुक्लतरं निजं यशः ॥ १८ ॥
सरस्वतीपाणिसरोजसम्पुटप्रमृष्टहोमश्रमशीकराम्भसः ।
यशोंऽशुशुक्लीकृतसप्तविष्टपात्ततः सुतो बाण इति व्यजायत ॥ १९ ॥

---

मुक्तो वर्जितो य इन्दुश्चन्द्रस्तस्य कला षोडशोंऽशस्तद्वदमला विशदा त्विट् कान्तिर्येषां ते तथा । पुन कीदृशा' । कृतेति । कृत निष्पादितमन्तरमवकाश । प्रवेशपद्धतिरिति यावत् । यैस्ते तथा । कस्य क इव । नृसिंहस्य विष्णोर्नखाङ्कुरा पुनर्भवाग्रभागा इव । यथा नृसिंहस्य नखाङ्कुरा द्विषद्धृदय प्रविष्टास्तथैतेऽपीति भाव ॥ १७ ॥

दिशामिति । यस्य चित्रभानोर्मलीमसोऽप्यध्वरधूमसञ्चयो यज्ञधूमसमूहो निज स्वकीयं यश शुक्लतरमतिशयेनोज्ज्वल चकार विदध इति विशेषोक्ति । किंविशिष्टोऽध्वरधूमसञ्चय । दिशामिति । दिग्वधूनामलीके ललाटदेशेऽलकभङ्गतामलकाश्चूर्णकुन्तलास्तेषा भङ्गो रचना-विशेषस्तस्य भावस्तत्ता ता गत प्राप्त । एतेनाजस्र क्रतुसमूहविधानेन धूमस्य दिगन्तव्यापित्व सूचितमिति । पुन किंविशिष्ट । त्रयीति । त्रयी वेदत्रयी सैव वधूस्तस्या कर्णे श्रोत्रे तमाल पल्लव इव तमालपल्लव । श्यामत्वसाधर्म्यात्तमालकिसलयेनोपमानम् ॥ १८ ॥

सरस्वतीति । ततश्चित्रभानोर्बाण इति बाणाभिधान सुत पुत्रो व्यजायताभवत् । किंविशिष्टात्तत । सरस्वतीति । सरस्वत्या भारत्या पाणिसरोजसम्पुटेन हस्तकमलयुग्मेन स्वयमेव प्रमृष्ट प्रोञ्छित होमादिकर्मसम्बन्धि श्रमस्य खेदस्य शीकराम्भ प्रस्वेदजल यस्य स तथा तस्मात् । पुन कथभूतात् । यश इति । यशस कीर्तेरंशवो दीप्तयस्तै शुक्लीकृतानि शुभ्रीकृतानि सप्त रवितुरगप्रमितानि विष्टपानि भुवनानि येन स तथा तस्मात् । 'विष्टप भुवन जगत्' इत्यमर ॥ १९ ॥

---

इस प्रकार प्रविष्ट हो गये ( अर्थात् उनके मन मे भय उत्पन्न कर गये ) जैसे कि नृसिंह भगवान के चन्द्रमा की कला के समान श्वेत तथा लम्बे बढ़े हुए नख हिरण्यकशिपु के हृदय में घुस गये थे ॥ १७ ॥

उसके यज्ञो के घने धुँए ने, स्वय काला होते हुए भी, उसके अपने यश को और अधिक चमका दिया था, वह धूम दिशा ( रूप महिलाओं ) के सिरों पर की घुघराली केश लटाओ के सदृश था तथा वेदत्रयी ( ऋक्, यजु', साम ) रूपा वधू के कान मे सुशोभित तमाल-पत्र के सदृश था ॥ १८ ॥

अपनी ( निज की ) कीर्ति की किरणों से सातों लोकों को श्वेत ( प्रकाशित ) किये हुए तथा जिसके हवन करने की थकावट से उत्पन्न हुए पसीने को सरस्वती स्वय अपने करकमलों की हथेलियों से पोंछ दिया करती थी, उस ( चित्रभानु ) से बाण नाम का पुत्र उत्पन्न हुआ ॥ १९ ॥

द्विजेन तेनाक्षतकण्ठकौण्ठ्यया महामनोमोहमलीमसान्धया।
अलब्धवैदग्ध्यविलासमुग्धया धिया निबद्धेयमतिद्वयी कथा॥ २०॥

आसीदशेषनरपतिशिरःसमभ्यर्चितशासनः पाकशासन इवापरः, चतुरुदधिमालामेखलाया भुवो भर्ता, प्रतापानुरागावनतसमस्तसामन्तचक्रः, चक्रवर्तिलक्षणोपेतः,

---

द्विजेनेति। इदानीं बाण कथा चिकीर्षुरतितीक्ष्णबुद्धिरप्यहङ्कार निराकुर्वन्नाह—तेनेति। तेन बाणेन द्विजेनेय कादम्बरीरूपा कथा धिया बुद्ध्यैव निबद्धा ग्रथिता। पूर्वं बुद्ध्यारूढीकृत्य पश्चाल्लिखितेति भाव। समुद्रसमकादम्बरीकथोपबन्धने धिय सामर्थ्यं ज्ञात्वापि 'मन्द कवियश प्रार्थी' इत्यादिवद्धियो मान्द्यमेवारोपयति—अक्षतेति। अक्षतमच्छिन्न कण्ठे गळे कौण्ठ्य कुण्ठता यस्या सा तथा तया। कण्ठेऽपि कुण्ठिता किमुत सभायामपीति भाव। पुन कथंभूतया। महेति। महानुत्कृष्टो यो मनोमोहश्चित्तविकलता तेन मलीमसा मलिना चासावन्धा चेति तया। पुन कथंभूतया। अलब्धेति। अलब्धोऽप्राप्तो यो वैदग्ध्यविलासश्चातुर्यलीला तेन मुग्धाप्रगल्भा तया। एतादृश्यापि बुद्ध्या रचिता कथा। अतिद्वयीति विशेषणबलाद् बुद्धेरतितीक्ष्णत्वं फलितम्। द्वयीं बृहत्कथा वासवदत्तां चातिक्रान्तेत्यर्थं॥ २०॥

'प्रसिद्धो वापि वर्ण्यं स्यान्महीपालोऽथवा दशरूपकेऽपि—'प्रख्यातोत्पाद्यमिश्रत्वभेदात् त्रेधापि तत्त्रिधा। प्रख्यातमितिहासादेरुत्पाद्य कविकल्पितम्। मिश्र च सङ्करात्' इत्यादेरुक्तभेदाना काव्यनाटकचम्पूना मध्ये 'गद्यपद्यमयी चम्पूर्द्विधा श्लेषवती च या। राजवर्णनमादौ स्यान्नगरीवर्णनं तत। तथा चामुकमन्यस्मिन्न तु तन्नृषु कुत्रचित्॥' यथा—'शूलसम्बन्धो देवतायतनेषु न नृषु' इति नलचम्प्वाम्। तथात्रैवाग्रे 'चित्रकर्मसु वर्णसङ्करो न मनुष्येषु' इत्यादिचम्पूलक्षणयुक्ता कादम्बरीसञ्ज्ञिका कथामारचयति—आसीदिति। शूद्रको नाम राजासीदिति दूरेणान्वय। अथ राजान विशेषयन्नाह—अशेषेति। अशेषा समग्रा ये नरपतयो राजानस्तेषा शिरांस्युत्तमाङ्गानि तै समभ्यर्चित सादरतया गृहीत शासनमाज्ञा यस्य स तथा। सर्वेषामाज्ञापको न त्वाज्ञाकर। अत एवापरो भिन्न पाकशासन इव। इन्द्रसाम्यम्। चतुरिति। चत्वारश्च त उदधयश्च चतुरुदधयस्तेषा माला पङ्क्ति सैव मेखलावधिर्यस्यास्तादृश्या भुव पृथिव्या भर्ता नायक। प्रताप इति। प्रताप कोशदण्डज तेज, अनुराग स्नेह ताभ्यामवनत नम्रीभूत समग्र सामन्तचक्र सामन्तमण्डल स्वदेशपर्यन्तवर्ति राजचक्र यस्य तथा। अन्यदपि लोहचक्रमग्निप्रतापादवनत भवतीति ध्वन्यते। चक्रेति। चक्रवर्ती सार्वभौमस्तस्य यानि

---

उस ब्राह्मण ने अपनी उस बुद्धि से यह अनुपम कथा रची है जिसकी कण्ठस्थ-कुण्ठता अर्थात् ( अभिव्यक्ति शक्ति की ) निर्बलता अभी दूर नहीं हुई है, जो ( उसके ) मन की मदान्धतारूपी कालिमा से अभी तक काली-मन्द ( अथवा अन्धी ) ही बनी हुई है तथा चातुर्य से प्राप्त होने योग्य लालित्य को न प्राप्त करने के कारण जो अभी तक अपरिपक्व ही है॥ २०॥

( पहले कभी ), ( दूसरे ) सभी राजाओं द्वारा ( झुकाये ) सिरों द्वारा पूजी गयीं ( मानी गयीं ) आज्ञाओं वाला, और दूसरा इन्द्र सरीखा, शूद्रक नाम का राजा था। वह चारों समुद्रों की माला रूप परिधि वाली ( चारों समुद्रों तक की सारी ) भूमि का स्वामी

चक्रधर इव करकमलोपलक्ष्यमाणशङ्खचक्रलाञ्छनः, हर इव जितमन्मथः, गुह इवाप्रतिहतशक्तिः, कमलयोनिरिव विमानीकृतराजहंसमण्डलः, जलधिरिव लक्ष्मीप्रसूतिः, गङ्गाप्रवाह इव भगीरथपथप्रवृत्तः, रविरिव प्रतिदिवसोपजायमानोदयः, मेरुरिव

---

लक्षणानि सामुद्रिकशास्त्रप्रतिपादितानि तैरुपेत सहित । पुनस्तमेव विशेषयन्नाह—चक्रधरेति । करकमले हस्तपद्म उपलक्ष्यमाण दृश्यमान शङ्खचक्राकार च रेखोपरेखास्वरूप लाञ्छन चिह्न यस्य स तथा । क इव । चक्रधर इव विष्णुरिव । सोऽपि शङ्खचक्रायुधलाञ्छितकर स्यादित्युपमानोपमेयभाव । हर इवेति । जितो निर्जितो मन्मथजनकत्वान्मन्मथानीन्द्रियाणि येन स तथा । क इव । हर इव शम्भुरिव । सोऽपि जितमन्मथ स्यादित्युभयो साम्यम् । गुह इवेति । अप्रतिहताकुण्ठिता शक्ति· सामर्थ्यं यस्येति स तथा । क इव । गुह इव कार्तिकेय इव । सोऽप्यप्रतिहतशक्ति स्यादित्युभयो साम्यम् । एतत्पक्षे शक्तिरस्त्रविशेष । अत एव 'षाण्मातुर शक्तिधर' इत्यमर । विगतेति । विगतो मानो दर्पो यस्य तद्विमान तथा कृत राजहंसाना श्रेष्ठनृपाणा मण्डल वृन्द येन स तथा । क इव । कमलयोनिरिव विधातेव । एतत्पक्षे विमान देवयान तत्स्वरूपीकृत राजहंसाना पक्षिविशेषाणा मण्डल येन स तथा । हंसाधिरूढत्वादिति भाव· । 'देवयान विमान स्यात्' इत्यमर· । 'राजहंसास्तु ते चञ्चुचरणैरतिलोहितै' इत्यमर । जलधीति । लक्ष्मी सम्पत्ति शोभा वा । 'लक्ष्मीश्छाया च शोभायाम्' इति हैम । तस्या प्रसूतिरुत्पत्तिस्थान शोभाया वा । क इव । जलधिरिव समुद्र इव । सोऽपि लक्ष्म्या रमाया शोभाया वोत्पत्तिस्थान समुद्रमथनादेव तन्निर्गमात् । तथा च जगद्विभूषितमिति शोभाजनकत्वमिति भाव । गङ्गेति । भगीरथस्य राज्ञ पन्था पितॄणामुद्धारस्तत्र प्रवृत्तो लग्न । क इव । गङ्गाप्रवाह इव स्वर्धुनीरय इव । सोऽपि भगीरथपथप्रवृत्त स्यात्तदनुयायित्वादित्युभयो· साम्यम् । रविरिति । प्रतिदिवस प्रत्यहम् उपजायमान उत्पद्यमान उदय· सम्पत्तेरुद्रेको यस्य स तथा । क इव । रविरिव भानुरिव । सोऽपि निरन्तरमुदयाचलाज्जायमानोद्गम स्यादित्युपमा । मेरुरिति । सकलै समग्रैरर्थिलोकैरुपजीव्यमाना सेव्या पादच्छाया कान्तिर्यस्य स तथा । क इव । मेरुरिव स्वर्णाद्रिरिव ।

---

था, (उसके) शौर्य के प्रति प्रेम के कारण सारे करद राजा उसको नमस्कार करते थे, वह (अपने शरीर पर) चक्रवर्ती (राजा) के चिन्हों से युक्त था, जिसके कमल सदृश हाथों मे शङ्ख तथा चक्र (आयुध) के विशेष लक्षण स्पष्टतया दिखायी देते हैं उस ('चक्र' धारी) विष्णु की भाँति उस राजा के कमल सदृश हाथो पर शङ्ख तथा चक्र के चिन्ह दिखाई दे रहे थे, कामदेव को जीतने वाले शिव की भाँति उसने अपने प्रणयोन्माद को जीता हुआ था, दबा रखा था, जैसे गुह (कार्तिकेय) की 'शक्ति' (अस्त्रविशेष) अबाधित है वैसे ही उसकी शक्ति (सामर्थ्य) अप्रतिकार्य थी, कमलजन्मा ब्रह्मा ने राजहंसो के सारे मण्डल (परिवार) को अपना विमान बना रखा है—उसने राजहंसो—श्रेष्ठ राजाओं के सारे मण्डल को, (उनके) स्वाभिमान को दबाकर स्वाभिमान से रहित (वि + मानी कृत) किया हुआ था—इस कारण वह ब्रह्मा के सदृश प्रतीत होता था, लक्ष्मी के जन्मस्थान, समुद्र, की भाँति वह सम्पत्ति का स्रोत था, गङ्गा नदी का प्रवाह भगीरथ द्वारा चले गये मार्ग पर चलता है वैसे ही वह भी

सकलोपजीव्यमानपादच्छायः, दिग्गज इवानवरतप्रवृत्तदानार्द्रीकृतकरः, कर्ता महाश्चर्याणाम्, आहर्ता क्रतूनाम्, आदर्शः सर्वशास्त्राणाम्, उत्पत्तिः कलानाम्, कुलभवनं गुणानाम्, आगमः काव्यामृतरसानाम्, उदयशैलो मित्रमण्डलस्य, उत्पातकेतुरहितजनस्य, प्रवर्तयिता गोष्ठीबन्धानाम्, आश्रयो रसिकानाम्, प्रत्यादेशो

स कथभूत । सकलैरर्थाहृदैवै । अन्येषा तत्र प्रवेशाभावात् । उपजीव्या पादा प्रत्यन्तपर्वतास्तेषा छायातपाभावो यस्य स तथा । 'छाया सूर्यप्रिया कान्ति प्रतिबिम्बमनातप' इत्यमर । दिग्गज इति । अनवरत निरन्तर प्रवृत्त कृत यद्दान जलसहित देयद्रव्य तेनार्द्रीकृत स्तिमित करो हस्तो यस्य स तथा । क इव । दिग्गज इव दिङ्नाग इव । एतत्पक्षे निरन्तरप्रवृत्त प्रचलित यद्दान मद । 'मदो दान प्रवृत्तिश्च' इति कोश । तेन स्तिमित कर शुण्डादण्डो यस्य स तथेत्युपमा । कर्तेति । महाश्चर्याण्यनन्यकृतयुद्धादीनि तेषा कर्ता निष्पादक । आहर्तेति । क्रतूना यज्ञानामाहर्ता कारक । आदर्श इति । सर्वशास्त्राणा समग्रवाङ्मयानामादर्शो मुकुर । तत्र तेषा प्रतिबिम्बितत्वादिति भाव । उत्पत्तिरिति । कलानामिति द्विसप्ततिप्रमिता या कला शिल्पादिरूपास्तासामुत्पत्तिर्जन्मभू । गुणानामिति । गुणा गाम्भीर्यादयस्तेषा कुलभवन परम्परास्थानम् । आगम इति । काव्यामृतेति काव्य कविकर्म तत्सम्बन्धिनो येऽमृतरसास्तेषामागम उद्गमरूप । उदयेति । मित्राणि सुहृदस्तेषा मण्डल समुदायस्तस्योदयशैलोऽभ्युन्नते स्थानम् । पक्षे मित्रमण्डलस्य सूर्यबिम्बस्योदयशैल उदयाचल । उत्पातेति । अहितजनस्य शत्रुलोकस्योत्पातकेतुर्धूमकेतु । प्रवर्तयितेति । गोष्ठीबन्धाना मधुरकथानां प्रवर्तयिता प्रवर्तक । आश्रय इति । रसिकाना रसवेत्तॄणामाश्रय. आश्रयस्थानम् । प्रत्यादेश इति । धनुष्मता धनुर्धारिणा प्रत्यादेशो निराकर्ता । 'प्रत्यादेशो निरा-

भगीरथ के समान धीर था—मानो भगीरथ के पथ का ही अनुगामी था, प्रतिदिन उदित होने वाले सूर्य की भाँति उसकी उन्नति ( उदय ) भी प्रतिदिन हो रही थी, सारे ( चौदहों ) लोक ( अपनी स्थिरता के लिये ) जिस प्रकार मेरु के समीपस्थ पहाड़ियों की छाया पर निर्भर रहते है उस मेरु की भाँति वह राजा भी ऐसा था कि सारे लोक अपनी रक्षा के लिये उसके पाँवो की छाया पर निर्भर थे, जैसे दिग्गज की सूड ( कर ) निरन्तर बहते मदजल से गीली रहती है, वैसे ही उसका भी हाथ ( कर ) निरन्तर दिये जाते दान से सना रहता था, वह बड़े आश्चर्यजनक कार्यों को किया करता था, यज्ञ किया करता था, सारे शास्त्रों का दर्पण ( आदर्श ) था, सारे शास्त्र उसमे प्रतिबिम्बित थे, वह कलाओ का उत्पत्तिस्थान ( उत्साहवर्धक तथा उनका सुधार-कर्ता ) था, गुणों का ( एक प्रकार से ) कुलक्रमागत निवासस्थान ही था, वह काव्य के अमृत सरीखे आनन्दों का स्रोत ( आगम ) था, वह अपनी मित्रमण्डली का उदयगिरि ( उनकी उन्नति का स्रोत ) था, जैसे कि उदयपर्वत सूर्यमण्डल के उदय का स्थान होता है । वह अपने शत्रुओं के लिये धूमकेतु, उनके अनिष्ट का सूचक, था,

१. "पादा प्रत्यन्तपर्वता" ।

धनुष्मताम्, धौरेयः साहसिकानाम्, अग्रणीर्विदग्धानाम्, वैनतेय इव विनतानन्दजनन, वैन्य इव चापकोटिसमुत्सारितारातिकुलाचलो राजा शूद्रको नाम।

नाम्नैव यो निर्भिन्नारातिहृदयो विरचितनारसिंहरूपाडम्बरम्, एकविक्रमाक्रान्तसकलभुवनतलो विक्रमत्रयायासितभुवनत्रय च हसति स्मेव वासुदेवम्। अतिचिरकाललग्नमतिक्रान्तकुनृपतिसहस्रसपर्ककलङ्कमिव क्षालयन्ती यस्य कृपाण-

---

कृति' इति कोश। सर्वधनुर्धरोत्कृष्ट इत्यर्थ। **धौरेय इति**। साहसिकाना सत्ववतां मध्ये धोरेयो धुर्य। **अग्रणीरिति**। विदग्धाना पण्डिताना मध्येऽग्रणीर्मुख्य.। **वैनतेय इति**। विनतेभ्य कृतनतिभ्य आनन्दस्य प्रमोदस्य जनन कर्ता। क इव। वैनतेय इव सुपर्ण इव। सोऽपि विनताया स्वमातु प्रमोदकृत्स्यादित्युभयो साम्यम्। **वैन्य इवेति**। चापो धनुस्तस्य कोटिरग्रभागस्तेन समुत्सारिता निराकृता अरातय एव शत्रव एव कुलाचला कुलपर्वता क्षेत्रसीमावर्तिपर्वता येन स तथा। क इव। वैन्य इव पृथुराज इव। एतत्पक्षेऽरातय कुलाचलाश्चेति द्वन्द्व। शेष पूर्ववत्। पृथुना पूर्वं पर्वताकीर्णां धरित्री विलोक्य धनु कोट्या पर्वतानुत्सार्य भू समीकृतेति पुराणम्।

**नाम्नेति**। य शूद्रको वासुदेव श्रीकृष्ण हसति स्मेव हास्य चकारेव। कथभूत। नाम्नैवाभिधानश्रवणमात्रेणैव निर्भिन्नानि द्वैधीकृतान्यरातीनां शत्रूणा हृदयानि वक्षासि येन स तथा। कीदृश वासुदेवम्। **विरचितेति**। विरचितो विहितो नारसिहरूपलक्षण एवाडम्बर आटोपो येन स तथा तम्। **एकेति**। एकेनाद्वितीयेन विक्रमेण पराक्रमेणाक्रान्त व्याप्त सकल समग्र भुवनतल विष्टपतल येन स तथा। कथभूत वासुदेवम्। **विक्रमेति**। विक्रम पादविक्षेपस्तस्य त्रय त्रितय तेनायासित सप्राप्तखेदम्। 'आसितम्' इति पाठ आसित स्थितम्। अत्राय भाव—अस्य राज्ञो नामश्रवणादेव वक्षोविदारण भवति। वासुदेवेन तु शत्रुवक्षोविदारणे नृसिंहावताराडम्बरं कृतम्। राज्ञा चैकेनैव विक्रमेण पराक्रमेण सर्व जगदाक्रान्तम्। वासुदेवेन तु भुवनाक्रमणाय विक्रमत्रय कृतमिति हास्ये हेतु.। **अतीति**। यस्य कृपाणधाराजले खड्गधारा-

---

वह साहित्यिक सस्था ( गोष्ठीबन्ध ) का प्रवर्तक था, रसिको का आश्रयदाता था, उसने ( सभी प्रमुख ) धनुर्धारियो ( की कीर्ति ) को धूमिल किया हुआ था—ग्रहण लगा रखा था,[1] वह साहसिको का नेता था, वह पण्डितो—सुसस्कृत व्यक्तियो का—अग्रणी था, गरुड़ जैसे विनता ( अपनी माता ) को आनन्द देता है वैसे ही वह भी अपने वशवदो को आनन्द देता था, वेनपुत्र ( वैन्य ) पृथु ने जैसे अपने शत्रुभूत पर्वतो को धनुष के अग्रभाग से उखाड़ फेका था वैसे ही उसने भी अपने धनुष की नोक से पर्वत सरीखे ( सुदृढ ) शत्रुकुल को नष्ट कर दिया था।

उसने केवल अपने नाम से ही शत्रुओ के हृदयों को चीर कर रख दिया था और अपने एकमात्र ( विक्रम ) शौर्य द्वारा ही ( मानो एक ही पग में ) सम्पूर्ण भूमण्डल को जीत कर मानो उस विष्णु का मजाक उड़ाया था कि जिसको ( अपने शत्रु हिरण्यकशिपु के हृदय को

---

१. प्रत्यादेश.—निराकृति —Obscuring.

धाराजले चिरमुवास लक्ष्मीः। यश्च मनसि धर्मेण, कोपे यमेन, प्रसादे धनदेन, प्रतापे वह्निना, भुजे भुवा, दृशि श्रिया, वाचि सरस्वत्या, मुखे शशिना, बले मरुता, प्रज्ञायां सुरगुरुणा, रूपे मनसिजेन, तेजसि सवित्रा च वसता सर्वदेवमयस्य प्रकटितविश्वरूपाकृतेरनुकरोति भगवतो नारायणस्य। यस्य च मदकलकरिकुम्भपीठपाटनं विदधतो

रूपे जले चिर बहुकाल यावल्लक्ष्मी पद्मोवास वसति चक्रे। खड्गबलाल्लक्ष्मी स्ववशीकृतेति भाव । कि कुर्वतीव क्षालयन्तीव प्रमार्जयन्तीव। कम्। अतीति। अतिचिरकालो भूयानतीत काल समयस्तेन लग्न जातम्। पुन कीदृशम्। अतीति। अतिक्रान्ता व्यतीता ये कुनृपतय कदर्थनरपतयस्तेषा सहस्रं तेन सम्पर्क सम्बन्धस्तेन य कलङ्कोऽभिज्ञानम्। अन्योऽपि पङ्कादिकं जलादिना क्षालयतीति ध्वनि । यश्चेति। य शूद्रको भगवतो नारायणस्यानुकरोति। 'कृञ प्रतियत्ने' इत्यनेन कृञ कर्मणि षष्ठी। भगवन्त नारायण सर्वदेवमयत्वेन विश्वात्मकतया चानुकरोति। तत्तुल्यता भजतीत्यर्थं । तदेव दर्शयति—मनसि धर्मेणेत्यादि । अत्र वसतेति वसतापदस्य सर्वत्रान्वयो यथालिङ्गम्। मनसि स्वान्ते धर्मेण वृषेण वसता वास कुर्वता। सदैव धर्मचिन्तनात् कोपे क्रोधे यमेन कृतान्तेन। तत्कालमेव सापराधिना प्राणहरणात्। तथा प्रसादे प्रसन्नतायां धनदेन श्रीदेन। सेवाकृत्समीहिताधिकप्रदानात्। प्रतापे पूर्वोक्तलक्षणे वह्निनाग्निना। समग्रशत्रुदाहकत्वात्। भुजे बाहौ भुवा पृथिव्या। राज्यभारक्षमत्वात्। दृशि चक्षुषि श्रिया लक्ष्म्या। सप्रीतिनिरीक्षणमात्रेणैव तत्सभवात्। वाचि वचने सरस्वत्या भारत्या। अनवरतगद्यपद्याद्यनेकप्रबन्धविधानात्। मुखे वदने शशिना चन्द्रेण। तदनुकारित्वाज्जनाह्लादकत्वाच्च। बले सामर्थ्ये मरुता वायुना। अनिबलत्वात्। तथा प्रज्ञाया प्रतिभाया सुरगुरुणा बृहस्पतिना। नि प्रतिमप्रतिभावत्वात्। एवरूपे सौन्दर्ये मनसिजेन कामेन। मानिनीमानहरणात्। तेजसि प्रतापलक्षणे सवित्रा सूर्येण। शत्रूणा दुर्निरीक्ष्यत्वात्। किविशिष्टस्य नारायणस्य। सर्वेति। सर्वे च ते देवाश्च सर्वदेवास्तत्स्वरूप सर्वदेवमय । अत्र 'प्राचुर्यविकारप्राधान्यादिषु' इति सूत्र आदिशब्दात्स्वरूपार्थेऽपि मयड्ग्रहस्तस्य। प्रकटितेति। प्रकटिता प्रकाशिता विश्वरूपा त्रिजगत्स्वरूपाकृतिराकारो येन स तथा तस्य। अनेन राज्ञस्तत्साम्य सूचित भवतीति भाव । यस्य चेति। यस्य राज्ञ समरनिशासु सङ्ग्रामरात्रिषु राजलक्ष्मीर्वैरिनृपश्रीरभिसारिकेव ध्वान्ते दत्तसंकेतेव समीप सन्निधिमगादागतवती। सकृदित्येकवारम्। पुनर्न गतेति भाव । यस्य कि कुर्वत.। विदधत आचरत.। किम्। मदेति। मदेन दानवारिणा कल मनोज्ञ यत्करिकुम्भपीठ हस्तिशिर पिण्ड-

चीरने के लिये ) नृसिंह का बाह्य ( दिखाऊ ) रूप धारण करना पड़ा था और ( सारे ससार को व्याप्त करने के लिये ) तीन डग भर कर ससार को कष्ट देना पड़ा था। राजलक्ष्मी उसकी तलवार की धार के विशुद्ध जल में बहुत देर तक रही थी, मानो कि वह ( उस जल में ) ( अपने ऊपर ) बहुत देर से लगे हुए, बीते हुए सहस्रों दुष्ट शासकों के सम्पर्क से ( आये ) कलङ्क को धोती रही थी। इसके अतिरिक्त जो ( अपने ) मन में धर्म, क्रोध में यम ( मृत्यु ), कृपा मे कुबेर, शौर्य मे अग्नि, भुजा मे पृथ्वी, दृष्टि में लक्ष्मी, वाणी मे सरस्वती, मुख में चन्द्रमा, बल मे वायु, बुद्धिमत्ता मे बृहस्पति, सौन्दर्य में कामदेव, और अपने तेज में सूर्य के

लग्नस्थूलमुक्ताफलेन दृढमुष्टिनिपीडनान्निष्ठ्यूतधाराजलबिन्दुदन्तुरेणेव कृपाणेनाकृष्यमाणा, सुभटोरःकपाटविघटितकवचसहस्रान्धकारमध्यवर्तिनी करिकरटगलितमदजलासारदुर्दिनास्वभिसारिकेव समरनिशासु समीपं सकृदगाद्राजलक्ष्मीः। यस्य च हृदिस्थितानपि भर्तॄन्दिधक्षुरिव प्रतापानलो वियोगिनीनामपि रिपुसुन्दरीणामन्तर्जनितदाघो दिवानिशं जज्वाल। यस्मिंश्च राजनि जितजगतिपालयति मही चित्रकर्मसु

फलक तस्य पाटन विदारणम्। अर्थाद्वैरिणामित्यर्थ। पुना राजलक्ष्मीं विशेषयन्नाह—आकृष्येति। आकृष्यमाणा समन्तादृगृह्यमाणा। केन। कृपाणेन खड्गेन। इत खड्ग विशिनष्टि—लग्नेति। लग्नानि सम्बद्धानि स्थूलानि स्थविष्ठानि गजसम्बन्धीनि मुक्ताफलानि रसोद्भवानि यस्य स तथा तेन। दृढेति। दृढमुष्ट्या यन्निपीडनम्। अत्र दार्ढ्यमात्रविवक्षया न पुवद्भावनिषेध॥ तस्मान्निष्ठ्यूत निर्गत धारैव जलमिति रूपक तस्य ये बिन्दव पृषत तैरेव दन्तुरेणोदग्रदशनेनेत्युपमा। 'उदग्रदो दन्तुर स्यात्' इति कोश। सुभटोर इति। परस्य ये सुभटा योद्धारस्तेषामुरास्येव कपाटानि तेभ्यो विघटितानि विभिन्नानि यानि कवचानि तनुत्राणि तेषा यत्सहस्र तदेव नैल्यसादृश्यादन्धकारस्तमिस्रं तन्मध्यवर्तिनी तदन्त पातिनी। अथ समरनिशां विशेषयन्नाह—करीति। करिणां गजाना करटानि कपोलानि तेभ्यो गलित च्युत यन्मदजल दानवारि तस्यासारो वेगवान्वर्षस्तेन दुर्दिन मेघज तमो यासु तास्तथा तासु। यस्य चेति। यस्य पूर्वोक्तस्य राज्ञ प्रताप कोशदण्डज तेजस्तदेवानलो वह्निर्दिवानिशमहोरात्र जज्वाल प्रदीप्तो बभूव। कि कर्तुमिच्छुरिव। भर्तॄन् दिधक्षुरिव दग्धुमिच्छुरिव। किंविशिष्टान्भर्तॄन्। हृदिस्थितानपि हृदयवर्तिनोऽपीत्यनेन दाहायोग्यत्व सूचितम्। अथ पूर्वोक्त प्रतापानल विशिनष्टि—अन्तरिति। अन्तर्मध्ये जनित उत्पादितो दाघो दग्धिर्येन स तथा। कासाम्। रिपुसुन्दरीणा शत्रुवनितानाम्।

बसने के कारण सभी देवताओं से युक्त तथा विविध रूपों (अथवा सम्पूर्ण विश्व) को अपनी आकृति में प्रदर्शित करने वाले भगवान् विष्णु के समान[1] था। और जिसके समीप हाथियों के कपोलों से गिरे मदजल की वर्षा से अन्धकार युक्त हुई (दूसरे राजाओं की) राजलक्ष्मी (अन्धेरे मे आने का संकेत देने वाली) अभिसारिका-सी युद्ध समय की रात्रियोंमे कितनी ही बार, श्रेष्ठ योद्धाओं के (कपाट सदृश) चौडे वक्ष स्थलो से खसोट कर लिये हुए सहस्रों (काले) कवचो रूप अन्धकार मे लिपटी हुई जिसकी उस तल्वारसे खिंची हुई-सी प्राय आयी थी-कि जिस पर राजा द्वारा कामोन्माद से क्रोधाविष्ट हस्तियो के मस्तको को विदीर्ण करते समय (हस्तियों के मस्तकों पर लगे हुए मोतियो मे से) मोटे-मोटे मोती लग गये थे तथा जो दृढ (मुष्टि) से कसी पकड़ से दबाने पर निकली हुई अपनी धार रूप जल के बिन्दुओं से (जड़ी जाने के कारण) दन्तुर सी प्रतीत हो रही थी। और उसका शौर्य रूप अग्नि, उसके शत्रुओं की विधवा स्त्रियों तक को भीतर ही भीतर झुलसाता हुआ दिन रात प्रज्वलित रहता था मानो कि वह उनके हृदयों मे भी स्थित (अर्थात् सजो कर रखी हुई पतियों की मूर्तियों) तक को जला देना चाहता था। और जगत् को जीतनेवाले जिस राजा के पृथ्वी का पालन करते

1. नारायणस्य अनुकरोति, 'कृञ प्रतियत्ने' इत्यनेन कर्मणि षष्ठी।

वर्णसङ्कराः, रतेषु केशग्रहाः, काव्येषु दृढबन्धाः, शास्त्रेषु चिन्ता, स्वप्नेषु विप्रलम्भाः, छत्रेषु कनकदण्डाः, ध्वजेषु प्रकम्पाः, गीतेषु रागविलसितानि, करिषु मदविकाराः, चापेषु गुणच्छेदाः, गवाक्षेषु जालमार्गाः, शशिकृपाणकवचेषु कलङ्काः,

---

कीदृशीनाम् । वियोगिनीनामपि वियुक्तानामपि पूर्वमेव भर्तृव्यापादनात् । एतेन हृदयान्तर्गत शत्रुगण यत्प्रतापो न सहत इति तत्प्रतापाधिक्यवर्णनेन राज्ञ आधिक्यवर्णनम् । पुनस्तदाधिक्य वर्णयन्नाह—**यस्मिन्श्चेति** । यस्मिन्राजनि जितजगति निर्जितविष्टपे मही पृथ्वीं पालयति शासति सत्येतानि वस्तून्येतेषु स्थलेष्वासन्बभूवु । न प्रजानामित्यन्वय । तान्येवाह—**चित्रेत्यादि** । चित्रकर्मस्वालेख्यक्रियासु वर्णा रक्तपीतादयस्तेषां सङ्करा परस्परसम्बन्धा । चित्रकर्मणि सुवर्णसङ्करा इति वा । सुवर्णमिश्रालेख्यानीत्यर्थ । द्वितीयपक्षे वर्णा ब्राह्मणादयस्तेषा सङ्करा । अन्यतोऽन्योत्पत्तिरित्यर्थ । **रतेष्विति** । रतेषु मैथुनेषु केशग्रहा । नान्यत्र कलहेषु । तदभावात् । **काव्येष्विति** । काव्येषु कविकर्मसु दृढबन्धा कठिनबन्धा । नान्यत्र । अपराधाभावात् । **शास्त्रेष्विति** । शास्त्रेषु सिद्धान्तेषु चिन्ता चिन्तनम् । नान्यत्र । समग्रवस्तुन सद्भावात् । **स्वप्नेष्विति** । स्वप्नदशाया विप्रलम्भा वियोगा । नान्यत्र । पुरुषायुषजीवित्वाज्जनस्येति भाव । **छत्रेष्विति** । छत्रेष्वातपत्रेषु कनकदण्डा सुवर्णयष्टय । नान्यत्र । कनकदण्डा' दण्डेन सुवर्णग्रहणम् । स्वस्वमार्गानतिक्रमेण तासा प्रवर्तनात् । **ध्वजेष्विति** । ध्वजेषु पताकासु प्रकम्पा

---

हुए[1] प्रजाओं मे वर्णों अर्थात् रगों का मिश्रण केवल चित्रकारियों में था ( जातियो का परस्पर मिश्रण अथवा वर्णसकर नहीं था ), बालों को पकड़ने की घटनाएँ ( केशग्रह ) ( केवल ) कामुक क्रीड़ाओ मे होती थीं ( लड़ाई झगडों मे नहीं, क्योकि वे तो होते ही नहीं थे ), कठोर अर्थात् अशिथिल ( पदबन्ध ) पदव्यवस्थापन ( केवल ) काव्यों मे होता था ( अपराधो के अभाव से कठोर कारावास होते ही नहीं थे ), चिन्ता अर्थात् विचार विमर्श ( केवल ) शास्त्र-सम्बन्ध से ही होता था ( दूसरी किसी प्रकार की चिन्ता तो प्रजाओं को होती ही नहीं थी ), विप्रलम्भ अर्थात् पति पत्नी के वियोग ( केवल ) स्वप्नों में ही होते थे ( अन्यत्र कहीं प्रजाओ मे परस्पर विप्रलम्भ अर्थात् धोखे नहीं होते थे ), सोने के दण्ड ( केवल ) छतरियों में लगाये जाते थे ( अपराधियो के न रहने से अन्यत्र जुर्माने के रूप में सोना—सुवर्णदण्ड—नहीं देना पड़ता था ), ( केवल ) पताकाएँ ही काँपती थीं ( दुष्कर्म करने वाले नहीं थे—फिर अन्यत्र कम्प अथवा भय कहाँ होता ? ), राग अर्थात् मधुर स्वर की अभिव्यक्तियाँ केवल गीतों में ही होती थीं ( अन्यत्र कहीं भी क्रोध आदि दुष्ट आवेगों की अभिव्यक्ति नहीं होती थी ), मद अर्थात् कामोन्माद के विकार अथवा प्रभाव केवल हाथियों मे ही थे ( अन्यत्र कहीं भी मदविकार अहकार के परिणाम नहा थे, क्योंकि अहकार किसी में था ही नहीं ), गुण ( अर्थात् उसकी रस्सी ) की ( छेद ) टूटफूट केवल धनुषों में ही थी ( अन्यत्र

---

१ यस्मिन् राजनि महीं पालयति चित्रकर्मसु वर्णसङ्करा आसन् 'यस्य च भावेन भावलक्षणम्' इस सूत्र से 'राजन्' शब्द में सप्तमी ।

रतिकलहेषु दूतप्रेषणानि, सार्यक्षेषु शून्यगृहाः न प्रजानामासन्। यस्य च परलोकाद्भयम्, आन्तःपुरिकाकुन्तलेषु भङ्गः, नूपुरेषु मुखरता, विवाहेषु करग्रहणम्, अनवरतमखाग्निधूमेनाश्रुपातः, तुरङ्गेषु कशाभिघातः, मकरध्वजे चापध्वनिरभूत्।

---

प्रकर्षेण वेल्लनम्। नान्यत्र। भीतेरभावात्। **गीतेष्विति**। गीतेषु गानेषु रागा वसन्तादय शास्त्रीया देशीया धनाश्रीप्रभृतयस्तेषा विलसितानि चेष्टितानि। नान्यत्र रागा क्रोधादयस्तेषां विलसितानि हननादिरूपाणि। तादृग्रागद्वेषाभावात्। **करिष्विति**। करिषु हस्तिषु मदो दान तस्य विकारा विकृतय। नान्यत्र मदोऽहङ्कारस्तस्य विकारास्तत्तद्विचेष्टितानि। मदो रागस्तस्य विकारा इति वा। सर्वदा गुरुवचनामृतास्वादमेदुरितमानसत्वात्। **चापेष्विति**। चापेषु धनुःषु गुणस्य ज्यारूपस्य छेद त्रुटनम्। नान्यत्र गुणस्य शौर्यादेर्विच्छेद। सर्वदा सदाचारित्वात्। **गवाक्षेष्विति**। गवाक्षेषु वातायनेषु जालमार्गा वातागमहेतवो जालिका। नान्यत्र कुवेणीस्थापनपथा। सर्वदाभयदानप्रवृत्तत्वात्। **शशीति**। शशी चन्द्र, कृपाण खड्ग, कवच सनाह, एतेषा द्वन्द्व। एषु कलङ्काश्चिह्नानि। नान्यत्र कुलमालिन्यादिहेतवो व्यभिचारादिदोषा। **रतिकलहेष्विति**। रतिकलहेषु कामकेलिषु विग्रहेषु दूतप्रेषणानि सञ्चारकगमनानि। नान्यत्र। सर्वदा प्रबलविरोधिनोऽभावात्। **सार्यक्षेष्विति**। सारय खेलिन्य, अक्षा पाशका,

---

कहीं भी गुणो का भग—उनकी विहीनता नहीं थी), (वायु के आवागमन के लिये) जालीयुक्त मार्ग (केवल) झरोखो मे ही थे (अन्यत्र प्रजाओं मे जालमार्ग अर्थात् कपटपूर्ण व्यवहार थे ही नहीं), कलङ्क अर्थात् धब्बे (केवल) चन्द्रमा पर, तलवारों पर तथा कवचों पर ही लगते थे (प्रजा मे चरित्रों पर अथवा कुलों के नामों पर कलङ्क लगते ही नहीं थे), दूतों का सम्प्रेषण—दूत भेजना—(केवल) प्रेम कलहों मे ही होता था (युद्ध आदि के लिये दूत भेजना नहीं पड़ता था, क्योंकि राजा का कोई शत्रु ही नहीं था), खाली घर (वर्ग) केवल शतरञ्ज के खिलाड़ियों की बिसातों में ही दिखायी देते थे (प्रजाओं के घर सन्तानविहीनता अथवा छोड़कर भाग जाने से खाली नहीं होते थे) और जिस राजा को भय (केवल) परलोक का ही था, भग (घुँघरालापन) (केवल) उसके अन्तःपुर की स्त्रियों के बालों मे ही था, (अन्यत्र कहीं भी भङ्ग अर्थात् नियम का विपर्यय नहीं था), मुखरता—टनटनाहट—केवल नूपुरों में थी (अन्यत्र कहीं भी मुखरता अर्थात् वाचालता नहीं थी), हस्तग्रहण (केवल) विवाह (सस्कारों) मे ही होता था (प्रजाओं से कर नहीं लिया जाता था), आँसुओं का गिरना (केवल) निरन्तर होनेवाले यज्ञों की अग्नि के धुँए से होता था (शोकादि के कारण आँसू नहीं बहते थे), कोड़ों की मार (केवल) घोड़ों पर ही होती थी (अपराधियों के न होने के कारण अन्यत्र कोड़े नहीं मारने पड़ते थे), धनुष की टकारध्वनि केवल कामदेव में होती थी (योद्धाओं के बाणों का शब्द होता ही नहीं था, क्योंकि प्रजा को कोई भय ही नहीं था)।

तस्य च राज्ञः कलिकालभयपुञ्जीभूतकृतयुगानुकारिणी, त्रिभुवनप्रसवभूमिरिव विस्तीर्णा, मज्जन्मालवविलासिनीकुचतटास्फालनजर्जरितोर्मिमालया जलावगाहनागतजयकुञ्जरकुम्भसिन्दूरसन्ध्यायमानसलिलयोन्मदकलहंसकुलकोलाहलमुखरीकृत - कूलया वेत्रवत्या परिगता विदिशाभिधाना नगरी राजधान्यासीत् ।

---

तेषु शून्यगृहा शून्यस्थानानि । नान्यत्रोद्वसगृहाणि । राजदेयद्रव्यजनितपीडाभावात् । यस्य चेति । यस्य राज्ञ । अभूदिति क्रिययान्वितम् । कर्मीभूतमाह—भयमिति । परलोकादेव जन्मान्तरादेव तत् । न तु शत्रुलोकात् । तथा यस्य राज्ञ । अन्त पुरे भवा आन्त पुरिका । भवार्थे ठक् । तासा नायिकाना कुन्तलेषु केशेषु भङ्गो वक्रता । नान्यत्र । तथा नूपुरेषु हसकेषु मुखरतानुरणनरूपा । न तु प्रजासु मौखर्यं वाचालत्वम् । विवाहेष्विति । विवाहेषूपयामेषु करग्रहण हस्तग्रहणम् । न तु प्रजासु करो राजदेयद्रव्य तद्ग्रह । अनवरतेति । अनवरत निरन्तर मखाग्निधूमेन यज्ञाग्निधूमेनाश्रुपातो नेत्रजलच्युति । न तु शोकादिना । तुरङ्गेति । तुरङ्गेष्वश्वेषु कशा चर्मदण्डस्तस्या अभिघात प्रहार । नान्यत्र । मकर इति । मकरध्वजे कन्दर्पे चापस्य धनुषो ध्वनि । अन्यत्र न भयाभावात्तदारोपणमिति भाव ।

तस्येति । तस्य च राज्ञो राजधान्यासीदित्यन्वय । ता विशेषयन्नाह—कलीति । कलिकालाद्यद्भय त्रासस्तस्मात्पुञ्जीभूत समुदायीभूत यत्कृतयुग तदनुकरोतीत्येवशीला या सा । विस्तीर्णेति । विस्तीर्णा विपुला । केव । त्रिभुवनेति । त्रयाणां भुवनाना समाहारस्त्रिभुवन तस्य प्रसवभूमिरुत्पत्तिस्थल धरित्री तद्वदिव । परीति । परिगता सङ्गता । कया । वेत्रवत्या नद्या । अथ नदीं विशिनष्टि—मज्जन्निति । मज्जन्त्य स्नान्त्यो या मालवविलासिन्योऽवन्तिकामिन्यस्तासा यानि कुचतटानि पयोधरस्थलानि तेषामास्फालनेनाघातेन जर्जरिता क्षीणा ऊर्मिमाला कल्लोलपङ्क्तयो यस्या सा तथा तया । अत्र कुचानामतिकाठिन्य व्यङ्ग्यम् । जलेति । जल पानीय तस्यावगाहनमवलोडन तदर्थमागता. समायाता जयकुञ्जरा परदलदलनसमर्था हस्तिनस्तेषा कुम्भा शिर पिण्डा तेषु शोभाकृद्यत्सिन्दूर नागज तेन सन्ध्यायमान सन्ध्यावदारक्त सलिल जल यस्या सा तथा तया । उन्मदेति । उन्मदानां प्रबलमदाना कलहसाना कादम्बाना यानि कुलानि तेषा य कोलाहलोऽनभिव्यक्तध्वनिस्तेन मुखरीकृत प्रतिध्वन्युक्त कूल सैकत यस्या सा तथा तया । अत्र विस्तृतकमलस्वच्छपानीयादि व्यङ्ग्यम् । किमभिधाना राजधानीत्याशयेनाह–विदिशेति । विदिशेत्यभिधान यस्या सा तथा ।

---

उस राजा की राजधानी विदिशा नाम की नगरी थी। वह नगरी कलियुग के भय से (एक स्थान पर) एकत्रित हुए सत्ययुग-के समान थी (क्योंकि उसके निवासी धर्म का पालन करते थे), वह (दूर-दूर तक) फैली हुई थी, मानो तीनों लोकों की जन्मभूमि ही हो, और उस वेत्रवती नदी से घिरी हुई थी कि जिसकी लहरें (उसमें) स्नान करती मालव महिलाओं के स्तनों पर टकराकर मन्द पड़ जाती थीं, जिसका जल स्नान के लिये आये (राजा के) विजयी हाथियों के मस्तकों के सिन्दूर से सन्ध्या-सा लाल-लाल दिखायी देता था और जिसका तट मदमस्त कलहंसों के कोलाहल से गूँजता था।

स तस्यामवर्जिताशेषभुवनमण्डलतया विगतराज्यचिन्ताभारनिर्वृतः, द्वीपान्तरागतानेकभूमिपालमौलिमालालालितचरणयुगलो वलयमिव लीलया भुजेन भुवनभारमुद्वहन्, अमरगुरुमपि प्रज्ञयोपहसद्भिरनेककुलक्रमागतैरसकृदालोचितनीतिशास्त्रनिर्मलमनोभिरलुब्धैः स्निग्धैः प्रबुद्धैश्चामात्यैः परिवृतः समानवयोविद्यालङ्कारैरनेक-

**स तस्यामिति**। तस्या नगर्यां स राजातिचिर बहुकाल प्रथम आद्ये वयस्यवस्थायां सुख सात यथा स्यात्तथोवास वास चक्र इत्यन्वय । अथ राजान विशेषयन्नाह—**विगतेति**। विगतो दूरीभूतो यो राज्यचिन्ताभारस्तेन निर्वृतो निष्पन्नप्रयोजन । तत्र हेतुमाह—**अवर्जितेति**। अवर्जितानि स्वायत्तीकृतान्यशेषाणि समग्राणि भुवनमण्डलानि येन तस्य भावस्तत्ता तया। **द्वीपेति**। एकस्माद् द्वीपादन्ये द्वीपा द्वीपान्तराणि तेभ्य आगता समायाता येऽनेके बहवो भूमिपाला राजानस्तेषा मौलय किरीटानि शिरासि वा तेषा माला स्रज पङ्क्तयो वा ताभिर्लालित क्रीडित चरणयुगल पादयुग्म यस्य स तथा। किं कुर्वन्। उद्वहन्नुत्पाटयन्। (बिभ्रत् ?) किम्। भुवनभार जगद्धीवधम्। केन। भुजेन बाहुना। किमिव। वलयमिव बाहुभूषणमिव। कया। लीलया क्रीडया। स्वल्पप्रयासेनेत्यर्थ। किंविशिष्ट स। **परीति**। परिवृत परिवेष्टित। कै। अमात्यैर्मन्त्रिभि। 'अमात्य सचिवो मन्त्री धीसख' इति कोश। किं कुर्वद्भिस्तैर्मन्त्रिभि। उपहसद्भिरुपहास कुर्वद्भि। कम्। अमरगुरुमपि बृहस्पतिमपि। कया। प्रज्ञया बुद्ध्या। अथ मन्त्रिणो विशिनष्टि—**अनेकेति**। अनेके च ते कुलक्रमागताश्चानेककुलक्रमागता। कुलपारम्पर्यागतैर्न त्वाधुनिकैरित्यर्थ। **असकृदिति**। असकृन्निरन्तरमालोचित निदिध्यासित यन्नीतिशास्त्र नृपोचिताचारबोधको ग्रन्थस्तेन निर्मलानि स्वच्छानि मनासि येषां ते तथा तै। **अलुब्धैरिति**। अलुब्धै अलोलुपै। स्निग्धैर्वत्सलै। 'स्निग्धस्तु वत्सल' इति

वह राजा अपनी युवावस्था मे उस नगरी म बहुत दिनो तक सुखपूर्वक रहा। सारे ससार को (पहले ही) जीत लेने के कारण अपने राज्य की चिन्ता के भार से मुक्त हुआ वह प्रसन्न था, (उसको श्रद्धाजलि अर्पित करने के लिये उसके समीप) दूसरे देशों से आये अनेक राजाओं के मुकुटों की पक्तियों[1] से उसके दोनो पॉव चूमे जाते थे[2], वह अपनी भुजा पर ससार के भार (अर्थात् उत्तरदायित्व) को इतनी सरलता से धारण किये हुए था जैसे कि वह अपनी भुजा पर (किसी हल्के) ककण को पहने हुए हो, वह ऐसे मन्त्रियों से घिरा रहता था कि जो अपनी (अधिक) बुद्धिमत्ता से देवताओं के उपदेष्टा गुरु बृहस्पति का भी उपहास करते थे। वे अनेक थे और कुल परम्परा से नियुक्त थे, एक से अधिक बार[3] अर्थात् सम्यक्तया अधीत राजनीति शास्त्रों से उनके मन परिष्कृत हो गये थे, वे लोभी नहीं थे, अनुरागी तथा बुद्धिमान् थे, वह राजा ऐसे राजकुमारो के साथ सुखी था[4] कि जो आयु, (विद्या) गुणा और आभूषणों मे उसके समान थे, राज्याभिषिक्त राजकुलो में उत्पन्न हुए

१ मौलिमाला। २ अर्थात् द्वीप द्वीपान्तरों के राजा उसके वशवद थे। ३. असकृत्। ४ रममाण अर्थात् विविध प्रकार के आमोद प्रमोद मे व्यस्त रहता था।

मूर्धाभिषिक्तपार्थिवकुलोद्गतैरखिलकलाकलापालोचनकठोरमतिभिरतिप्रगल्भैः कालविद्भिः प्रभावानुरक्तहृदयैरग्राम्योपहासकुशलैरिङ्गिताकारवेदिभिः काव्यनाटकाख्यानकाख्यायिकालेख्यव्याख्यानादिक्रियानिपुणैरतिकठिनपीवरस्कन्धोरुबाहुभिरसकृद्दलितसमदरिपुगजघटापीठबन्धैः केसरिकिशोरकैरिव विक्रमैकरसैरपि विनयव्यवहारिभिरात्मनः प्रतिबिम्बैरिव राजपुत्रैः सह रममाणः प्रथमे वयसि सुखमतिचिरमुवास। तस्य चातिविजिगीषुतया महासत्त्वतया च तृणमिव लघुवृत्ति स्त्रैणमाकल-

---

कोश । प्रबुद्धै पण्डितै । पुन कि कुर्वाणो नृपति । राजपुत्रैर्नृपतनयै सह रममाण क्रीडा कुर्वाण । इतो राजपुत्रान्विशेषयन्नाह—**आत्मन इति** । आत्मन स्वकीयस्य प्रतिबिम्बैरिव प्रतिच्छायैरिव । सर्वदा तदनुयायित्वात् । **समानैरिति** । समाना सदृशा, वयोवस्थाविशेषा, विद्याश्चतुर्दश प्रतीता, अलङ्कारा विभूषणानि येषा ते तथा ते । **अनेकेति** । अनेके सहस्रशो ये मूर्धाभिषिक्ता कृताभिषेका पार्थिवा राजानस्तेषा कुलानि वंशास्तेभ्य उद्गते प्रभवै । **अखिलेति** । अखिला समग्रा या कला विज्ञानानि तासा कलापा समुदायास्तेषां यदालोचन विमर्शन तेन कठोरा शास्त्रे दृढा मतिर्बुद्धिर्येषा ते तथा तै । एतेन मन्त्रदाढ्यं सूचितम् । **अतीति** । अतिप्रगल्भै प्रतिभान्वितै । 'प्रगल्भ प्रतिभान्विते' इति कोश । **कालेति** । कालविद्भि समयज्ञै । अवसरज्ञैरिति यावत् । **प्रभावेति** । प्रभावो माहात्म्य तेनानुरक्तान्यासक्तानि हृदयानि चेतासि येषा ते तथा । **अग्राम्येति** । अग्राम्यो नागरिको य उपहासो नर्मवचो विलासस्तत्र कुशलैश्चतुरै । 'कुशलश्चतुरोऽभिज्ञ –' इति कोश । **इङ्गितेति** । इङ्गित चेष्टाविशेष आकार आकृति तौ विदन्तीत्येवशीलास्ते तथा ते । **काव्येति** । काव्य निपुणकविकर्म,

---

थे, सभी विविध कलाओ के विवेचन से—अध्ययन से—जिनकी बुद्धियाँ पूर्णतया परिपक्व[1] हो चुकी थीं, जो अत्यन्त प्रतिभाशाली थे, ( किसी काम को करने के लिये ) उचित काल अर्थात् अवसर को पहचानते थे, अपने हृदयो से शौर्य[2] के अनुरागी थे, अशिष्टतारहित विनोद ( करने ) मे कुशल थे, विचारों[3] अर्थात् भावनाओं और बाह्य आकार प्रकारों को समझते थे, काव्य नाटक कथा उपन्यास चित्रकारी ( मूल की ) व्याख्या आदि की रचना करने में विशेष योग्य थे, जिनके कधे, जघाएँ और भुजाएँ—( आदि अग ) बहुत कठोर और मासल थे, जिन्होने अनेक बार क्रुद्ध, ( अपने ) शत्रुहस्तियों की टुकड़ियों के चौड़े मस्तकों को[4] विदीर्ण किया था, जो ( शौर्य मे ) सिंह शावको सरीखे थे, यद्यपि एकमात्र शौर्य ( के कर्म ) मे ही प्रसन्न रहते थे तोभी वे ( उचित मात्रा में ) विनय को भी निभाते थे, ( सक्षेप यह है कि ) जो मानो उसके अपने ही ( इतने सारे ) प्रतिबिम्ब थे। और वह चूंकि अतिमात्रा मे विजयो का इच्छुक था, असाधारण शूरवीर था इस कारण स्त्री जाति[5]

---

१ कठोर। २. प्रभाव। ३ इंगित। ४. पीठबन्ध का अर्थ मांसपेशियों को बांधनेवाली शिरायें होना चाहिये। (अनु) ५. स्त्रैणम् स्त्रीसमूहम्' 'स्त्रीपुंसाभ्याम्' इति तद्धितार्थेषु नञ् ।

यतः प्रथमे वयसि वर्तमानस्यापि रूपवतोऽपि सन्तानार्थिभिरमात्यैरपेक्षितस्यापि सुरतसुखस्योपरि द्वेष इवाऽऽसीत्सत्यपि रूपविलासोपहसितरतिविभ्रमे लावण्यवति विनयवत्यन्वयवति हृदयहारिणि चावरोधजने। स कदाचिदनवरतदोलायमानरत्न-

अवस्थानुकृतिर्नाटकम्, आख्यानकानि चूर्णकानि, आख्यायिका वासवदत्तादि, आलेख्यानि चित्रकर्माणि, व्याख्यानान्यर्थनिर्वचनानि, इत्यादिका या क्रिया कार्याणि तासु निपुणैर्दक्षैः। 'निष्णातो निपुणो दक्षः' इति कोशः। अतीति। अतिकठिना अतिकठोरा पीवरा पुष्टा स्कन्धा बाहुशिरास्युरवो विस्तीर्णा बाहवश्च येषां ते तथा तैः। असकृदिति। असकृन्निरन्तरमवदलिता मर्दिता समदा मदयुक्ता या रिपुगजघटा शत्रुद्विपपङ्क्तयस्ता एव पीठबन्धा स्थलविशेषा यैस्ते तथा तैः। केसरीति। केसरिणां सिंहानां किशोरकैरिव बालैरिव। अत्र किशोरशब्दोऽल्पवयसि सामान्येन प्रयुक्तः। 'किशोरोऽल्पवया हयः' इति तु विशेषो ग्रन्थकृता नाश्रितः। विक्रमैरिति। विक्रम एव पराक्रम एवैकोऽद्वितीयो रसो येषां ते तथैवविधैरपि। विनयेन प्रश्रयेण व्यवहारो व्यवहरणं विद्यते येषां ते तथा तैः। एतेन शक्तौ सत्यामपि विनयाधिक्यं सूचितम्। अन्वयस्तु प्रागेवोक्तः। तस्य चेति। तस्य राज्ञः प्रथमे वयसि वर्तमानस्यापि। अत्र वृद्धत्वापेक्षया वयसः प्राथम्यं ज्ञेयम्। अन्यथाग्रेतनेनान्वयानुपपत्तिः। एवंविधेऽवरोधजने सत्यपि सुरतसुखस्योपरि निधुवनमात्रस्योपरि द्वेष इव मत्सर इवासीद् बभूव। किं कुर्वतो राज्ञः। आकलयतः सम्भावयतः। किम्। स्त्रैणं स्त्रीसमूहम्। तदेव विशिनष्टि—लघ्विति। लघु तुच्छा वृत्तिर्वर्तनं यस्य तत्। किमिव। तृणमिव यवसमिव। एतेन तासामकिञ्चित्करत्वं सूचितम्। कया हेतुभूतया। अतीति। अतिशयेन विजेतुमिच्छुर्विजिगीषुस्तस्य भावस्तत्ता तया। तद्रसाक्षिप्तचेतस्कत्वेन कामोत्पत्तेरसम्भवात्। पुनर्हेत्वन्तरं प्रतिपादयन्नाह—महेति। महासत्त्वमतिशायि धैर्यं (यस्य सः) ? तस्य भावस्तत्ता तया। प्रायशो महासत्त्वस्य सिंहवत्स्वल्प एव कामः स्यात्। किंविशिष्टस्य राज्ञः। रूपवतोऽपि सौन्दर्यवतोऽपि। एतेन युवतीमनउन्मादकत्वेऽपि तदभिलाषाभाव इति विभावनोक्तिः। अत्रापिशब्दो विरोधालङ्कारद्योतनार्थः। एतादृशोऽपि विषयसुखोपरत इति विरोधः। पुनरेव राजानं विशेषयन्नाह—सन्तानार्थिभिरिति। सन्तानमपत्यं तदेवार्थः प्रयोजनं विद्यते येषां ते तथा तैरमात्यैः सचिवैरपेक्षितस्यापि वाञ्छितस्यापि। एतेन सचिवानुकूल्यं दर्शितम्। अथावरोधजनं विशेषयन्नाह—रूपेति। रूपं सौन्दर्यम्, विलासा विलसनानि तैरुपहसिता हास्यास्पदीकृता रतेः कामस्त्रियो विभ्रमा भ्रूसमुत्क्षेपा येन स तथा तस्मिन्। लावण्येति। लावण्यं लवणिमा तद्वति।

(अथवा स्त्रीत्व) को तिनके के समान अति तुच्छ (सर्वथा महत्त्वहीन) समझता था (और इसीलिये) युवा होते हुए भी, अत्यन्त सुन्दर होते हुए भी उसको सन्तान चाहने वाले मन्त्रियों द्वारा अभीष्ट भी काम-क्रीडाओं (से उपलब्ध सुख) से मानो घृणा ही थी—यद्यपि उसके रनिवास की स्त्रियाँ (अपने) रूप तथा हाव-भाव से रति की काम-क्रीडाओं[1] तक को लजाती थीं, सुन्दर थीं, विनम्र थीं, कुलीन थीं और आकर्षक थीं और वह अपने मित्रों से घिरा रह कर (विविध कार्यों में व्यस्त रहकर) अपना दिन व्यतीत कर देता था—कभी तो वह स्वयं

1. रतिविभ्रमा।

वलयो घर्घरिकास्फालनप्रकम्पझणझणायमानमणिकर्णपूरः स्वयमारब्धमृदङ्गवाद्यः सङ्गीतकप्रसङ्गेन, कदाचिदविरलविमुक्तशरासारशून्यीकृतकाननो मृगयाव्यापारेण, कदाचिदाबद्धविदग्धमण्डलः काव्यप्रबन्धरचनेन, कदाचिच्छास्त्रालापेन, कदाचिदाख्यानकाख्यायिकेतिहासपुराणाकर्णनेन, कदाचिदालेख्यविनोदेन, कदाचिद्वीणया, कदाचिद्दर्शनागतमुनिजनचरणशुश्रूषया, कदाचिदक्षरच्युतकमात्राच्युतकबिन्दुमतीगूढ-

विनयेति। विनयोऽभ्युत्थानादिरूपस्तद्युक्ते। एतेन तदानुकूल्य सूचितम्। अन्वयेति। अन्वयो वश स विद्यते यस्य स तथा तस्मिन्। अत्रास्त्यर्थे (प्राशस्त्यार्थे ?) वतु। सुवशज इत्यर्थ। अत्र प्रौढकुलोत्पन्नत्वेन रूपलावण्यातिशयत्व व्यङ्ग्यम्। हृदयेति। हृदयस्य चित्तस्य हारिण्याक्षेपके। अनेन सर्वजनस्पृहणीयत्व व्यङ्ग्य सूचितम्। स कदाचिदिति। स राजा दिवसमनैषीदिति-नायेति सर्वत्र सम्बध्यते। केन। कदेति। कदाचित्कस्मिंश्चित्प्रस्तावे। गीतनृत्यवाद्यत्रय प्रेक्षणार्थे कृत सगीतकमुच्यते तत्प्रसङ्गेन। तत्सम्बन्धेनेत्यर्थ। इतो राजान विशेषयन्नाह—अनवरतेति। अनवरत निरन्तर दोलायमान कम्पमान रत्नवलय कङ्कण यस्य स तथा। घर्घरिकेति। घर्घरिका वाद्यविशेषस्तस्या आस्फालन वादन तेन य प्रकम्पश्चलन तेन झणझणायमानो झणझणेति शब्द कुर्वाणो मणिकर्णपूरो मणिखचित कर्णालङ्कारो यस्य स तथा। स्वयमिति। स्वयमात्मनैवारब्ध विहित मृदङ्गवद्वाद्य वादित्र येन स तथा। उभयहस्ताभ्या तद्वादनादिति भाव। पुन कदाचित्। मृगयेति। मृगयाखेटकस्तस्या व्यापारेण व्याहृत्या। अविरलेति। अविरलमविच्छिन्न विमुक्ता क्षिप्ता ये शरा बाणास्तेषामासारो वेगेन वर्षस्तेन शून्यीकृत कानन वन येन स तथा। अत्र समग्रवनचारिव्यापादन व्यङ्ग्यम्। आबद्धेति। आबद्धमारचित विदग्धाना प्रेक्षावता मण्डल येन स तथा। कदेति। काव्य पूर्वव्यावर्णितस्वरूपं, प्रबन्धा कथास्तेषां रचनेन ग्रथनेन। एतेन राज्ञोऽपि पण्डितजनानुरागित्व प्रेक्षावत्त्व च सूचितम्। पुन केन। शास्त्रेति। शास्त्राणा न्यायादीनामालापेनापृच्छनेन। 'आपृच्छालाप सम्भाष' इति कोश। पुन केन। आख्यानकेति। आख्यानक व्यक्तकथा, आख्यायिका वासवदत्तादिका, इतिहास पुरावृत्तम्, पुराण मत्स्यादि, तेषामाकर्णनेन श्रवणेन। कदाचिदिति। आलेख्य चित्रकर्म तस्य विनोदेन क्रीडयेत्यर्थ। पुन केन। वीणयेति। वीणा विपञ्ची तद्वादनेन तच्छ्रवणेन चेत्यर्थ।

मृदङ्ग बजाता हुआ सगीत में व्यस्त रहता था,—इस समय उसके रत्न ( खचित ) कगन निरन्तर हिलते रहते थे तथा ( उसके द्वारा बजायी गयी ) घर्घरिका ( एक प्रकार का बाजा ) के बजाने से हुए कम्पन से ( उसके ) रत्नजटित कुडल ( कर्णाभूषण ) झणझणाते रहते थे—, कभी वह शिकार खेलने में व्यस्त रहता था और ( इस समय ) वह निरन्तर छोड़े जाते बाणों की वर्षा से जगल को ( हिरण आदि शिकार के पशुओं से ) शून्य कर देता था, कभी वह पण्डितमण्डली को जोड़कर काव्यरचना में व्यस्त रहता था, कभी शास्त्रचर्चा में व्यस्त रहता था, कभी कथाओं, उपन्यासों, इतिहासों और पुराणों को सुनता रहता था, कभी चित्रकारी से मन बहलाता रहता था, कभी बीणा बजाने लगता था, कभी ( अपने से ) भेंट करने आये मुनियों की चरणसेवा में लगा रहता था, और कभी अक्षरच्युतक, मात्रा—

चतुर्थपादप्रहेलिकाप्रदानादिभिर्वनितासम्भोगसुखपराङ्मुखः सुहृत्परिवृतो दिवसमनैषीत् । यथैव च दिवसमेवमारब्धविविधक्रीडापरिहासचतुरैः सुहृद्भिरुपेतो निशामनैषीत् ।

एकदा तु नातिदूरोदिते नवनलिनदलसम्पुटभिदि किञ्चिन्मुक्तपाटलिम्नि भगवति सहस्रमरीचिमालिनि राजानमास्थानमण्डपगतमङ्गनाजनविरुद्धेन वामपार्श्वावलम्बिना

---

पुन केन। दर्शनेति। दर्शनार्थं विलोकनार्थमागता प्राप्ता ये मुनिजना साधुलोकास्तेषा चरणशुश्रूषा पादसपर्या तया। पुन केन। अक्षरेति। अक्षरस्य वर्णस्य च्युतिर्यत्र तदक्षरच्युतकम्। यथा—‘कुर्वन्दिवाकराश्लेष दधच्चरणडम्बरम्। देव यौष्माकसेनाया करेणु प्रसरत्यसौ ॥’ इति। अत्र करेणुपदात्ककारच्युतौ द्वितीयार्थप्रतीति। मात्रायाश्च्युतिर्यत्र तन्मात्राच्युतकम्। यथा—‘मूलस्थितिमध कुर्वन्पात्रैर्जुष्टो गताक्षरे। विट सेव्य कुलीनस्य तिष्ठत पथिकस्य स ॥’ इति। विटपदादिकारमात्राच्युतौ वटस्यार्थस्य प्रतीति। पद्यवर्णसख्यया बिन्दुमात्रव्यवस्थापनेन तद्वर्णोपलब्धि ‘बिन्दुमती यथा—‘◌ि◌◌◌◌ू◌ा◌◌ ◌ि◌ ि◌◌ो ◌ु-◌ु◌ी◌ु । ◌◌ु◌◌◌ि ◌ु◌ू◌ा◌ु◌◌◌◌ी◌◌◌ो◌◌◌◌ू ॥’ इति। एतत्पद्य यथा—‘त्रिनयनचूडारत्न मित्र सिन्धो कुमुद्वतीबन्धु। अयमुदयति घुसृणारुणरमणीवदनोपमश्चन्द्र ॥’ गूढो गुम्फश्चतुर्थ पादो यस्य तद् गूढचतुर्थपादं चित्रम्। एतदुदाहरण विदग्धमुखमण्डनादवसेयम्। प्रहेलिका प्रवह्लिका। सा शाब्दी, आर्थी च। आद्योदाहरणं यथा—‘पयस्विनीना धेनूना ब्राह्मण प्राप्य विशतिम्। ताभ्योऽष्टादश विक्रीय गृहीत्वैका गृह गत ॥’ अत्र धेन्वा ऊना धेनूना ता धेनूनामिति विशतेर्विशेषणनार्थावगम सुगम। आर्थी यथा—‘जइ सासुआइ भणिआ पियवासघरमि दीवय देसु। ता कीस मुद्धमुही हिययमि निवेसए दिट्ठिम् ॥’ एतेन सर्वदा मम हृदयान्तर्वर्तित्वेन मम हृदयमेव भर्तुर्वासगृहम्। तेन तत्र दीपकरणानर्हत्वमिति ज्ञापितम्। एतासा प्रदान समर्पणम्। आदिशब्दात्स्वात्मना तन्निर्माणं च तै। अथ नृप विशेषयन्नाह—वनितेति। वनिताना योषितां य सम्भोग उपभोगस्तज्जनितं यत्सुखं सातं तस्मात्पराङ्मुखोऽनभिमुख। सुहृद्भि सज्जनैर्मित्रैर्वा परिवृत. परिवेष्टित। यथैवेति। यथा येन प्रकारेण दिवस वासरमनैषीत्। एव तथैव निशा त्रियामामपि। सुहृद्भिर्मित्रैरुपेत सयुत। कीदृशै। आरब्धेति। आरब्धा प्रारब्धा ये विविधक्रीडासु परिहासास्तेषु चतुरैर्दक्षै। अनैषीद्गमयदिति सम्बन्ध।

---

च्युतक, बिन्दुमती, गूढचतुर्थपाद, प्रहेलिका आदि (बूझने के लिये) देता था और (इस प्रकार) स्त्रीसंभोग सुख से पराङ्मुख हुआ—उससे मुह मोड़े हुआ—दिन बिता देता था। और वह जैसे दिन बिताता था वैसे ही नाना प्रकार के खेलों और हँसी-मजाक करने में चतुर अपने मित्रो से घिरा रह कर रात्रियों को भी बिता देता था।

किन्तु एक बार जब नये कमलों की (बन्द) कलियों को खोलने वाले, सहस्रों किरणों की पक्ति से सुशोभित—भगवान् सूर्यदेव—अभी बहुत दूर तक आकाश में चढ़े भी

कौक्षेयकेण सन्निहितविषधरेव चन्दनलता भीषणरमणीयाकृतिः, अविरलमलयजानुलेपनधवलितस्तनतटोन्मज्जदैरावतकुम्भमण्डलेव मन्दाकिनी, चूडामणिप्रतिबिम्बच्छलेन राजाज्ञेव मूर्तिमती राजभिः शिरोभिरुह्यमाना, शरदिव कलहंसधवलाम्बरा, जामदग्न्यपरशुधारेव वशीकृतसकलराजमण्डला, विन्ध्यवनभूमिरिव वेत्रलतावती, राज्याधिदेवतेव विग्रहिणी प्रतीहारी समुपसृत्य क्षितितलनिहितजानुकरकमला सविनयमब्रवीत्—देव, द्वारस्थिता सुरलोकमारोहतस्त्रिशङ्कोरिव कुपितशतमखहुंकार-

एकदेति। एकस्मिन्समये प्रतिहारी द्वारदेशे नियुक्ता स्त्री समुपसृत्य निकटदेशमागत्य राजानं सविनयमब्रवीदित्यन्वयः। विनयेन सह वर्तमानमवोचदित्यर्थः। सूर्यवर्णनाव्याज उक्त्यवसरमाह—भगवतीति। श्रीसूर्ये सतीत्यर्थः। इत सूर्यं विशेषयन्नाह—सहस्रेति। सहस्रसंख्या ये मरीचयः किरणास्तैर्मालते शोभते तान्धारयतीति वा यः स तथा तस्मिन्। नेति। नातिदूरं स्वल्पकालीनमुदितमुद्गमनं यस्य स तथा तस्मिन्। नवेति। नवानि प्रत्यग्राणि यानि नलिनानि तेषां दलानि पत्राणि तेषां यः सम्पुटो मुकुलस्तं भिनत्तीति स तथा तस्मिन्। किञ्चिदिति। किञ्चिदीषन्मुक्तः परित्यक्तः पाटलिमा श्वेतरक्तत्वं येन स तथा तस्मिन्। दूरोदितेत्यारभ्य त्रिभिर्विशेषणैः प्रत्यूषसमयो व्यज्यते। कीदृशं राजानम्। आस्थानेति। आस्थानमण्डपः उपवेशनस्थलं तत्र गतं प्राप्तम्। प्रतीहारीं विशेषयन्नाह—भीषणेति। भीषणा भयानका रमणीया मनोज्ञाकृतिराकारो यस्याः सा तथा। रमणीयत्वे दृष्टान्तमाह—चन्दनलतेवेति। यथा चन्दनलता वस्तुस्वभावादेव रमणीया तथेयमपीत्यर्थः। लताया भीषणत्वे हेतुमाह—सन्निहितेति। सन्निहिता पार्श्ववर्तिनो विषधराः सर्पा यस्याः सा तथेत्यर्थः। भीषणत्व

नहीं थे—अर्थात् अभी उदय ही हुए थे और (उसके बिम्ब की) लालिमा अब भी थोड़ी सी ही कम हुई थी कि सभामण्डप में बैठे राजा के समीप (साक्षात् शरीर धारण किये हुए राज्य (की रक्षिका) अधिष्ठात्री देवी सी (भव्य) प्रतिहारी ने पहुँच कर अपने घुटनों तथा कमल सरीखे हाथों को भूमि पर टिका कर राजा से विनयपूर्वक निवेदन किया। यह प्रतिहारी स्त्रियों (के सामान्य व्यवहार) के विरुद्ध बायीं ओर लटकती तलवार के कारण उस चन्दनलता-सी भयानक तथा आकर्षक दोनों प्रतीत हो रही थी कि जिस पर साँप बैठा हुआ हो, गाढे चन्दन को लेप करने से श्वेत हुए स्तन प्रदेश वाली होने के कारण उस मन्दाकिनी नदी जैसी थी कि (जिसकी धारा में से) ऐरावत हस्ती निकल रहा हो, (राजाओं के) मुकुटों में (जड़ी हुई) मणियों में (पड़े अपने) प्रतिबिम्ब के बहाने वह राजाओं के सिरों से उठायी गयी शरीरधारिणी राजाज्ञा-सरीखी दिखायी दे रही थी, (उड़ते हुए) हंसों के कारण श्वेत आकाश वाली शरत् ऋतु के समान वह कलहंसों जैसे श्वेत वस्त्र पहने हुए थी, सारे क्षत्रियों को अपने वश में किये हुए, परशुराम के फरसे की धारा के सदृश उसने भी (वहाँ उपस्थित) सभी राजाओं (के मनों) को अपने आधीन कर रखा था, (हाथ में) बेंत लिये हुए वह ऐसी प्रतीत हो रही थी कि मानो बेंत के पौधों से भरी हुई विन्ध्यवन (के समीप) की भूमि ही हो। वह बोली "स्वामिन्! क्रुद्ध इन्द्र के हुंकार द्वारा

निपातिता राजलक्ष्मीर्दक्षिणापथादागता चाण्डालकन्यका पञ्जरस्थ शुकमादाय

आगन्तुकहेतुमाह—वामेति । वामपार्श्वे मध्यप्रदेशेऽवलम्बतेऽवतिष्ठत इत्येवशीलेन कौक्षेयकेण खड्गेन 'तरवारिर्मण्डलाग्र खड्गकौक्षेयकौ' इति कोश । खड्ग विशिनष्टि—अङ्गनेति । अङ्गनाजन प्रमदावर्गस्तस्य विरुद्धेन । भयोत्पादकेनेत्यर्थ । यथा चन्दनलताया निसर्गतो रमणीयत्वेऽपि सन्निहितविषधरत्वेन भीषणत्व तथैतस्या अपि स्वभावतो बन्धुरत्वेऽपि वामपार्श्ववर्तिनिस्त्रिशत्वेन भीषणत्वमित्यभिप्राय । अथ प्रतीहारीं विशिनष्टि—अविरलेति । अविरल घनतर यन्मलयजस्य चन्दनस्यानुलेपनमुद्वर्तन तेन धवलित शुभ्रीकृत स्तनतट कुचतट यस्या सा तथा । तत्र दृष्टान्तमाह—मन्दाकिनीव स्वर्धुनीव । इतो गङ्गा विशेषयन्नाह—उन्मज्जदिति । उन्मज्जन्स्नान कुर्वंश्च ऐरावतो हस्तिमल्लस्तस्य कुम्भमण्डल शिर पिण्डचक्रवाल यस्यां सा तथा । चन्दनशुभ्र कुम्भोपमानेन कुचतटस्य काठिन्य व्यज्यते । केव । मूर्तीति । मूर्तिमती विग्रहवती राजाज्ञेव नृपशिष्टिरिव । ननु राजाज्ञा सन्निहितराजशिरोभिरुह्यमाना भवेत् । इय तु तथा न भवतीत्यत आह—चूडेति । अर्थात्सन्निहितराजमस्तकेषु चूडामणय शिरोमणयस्तेषु य प्रतिबिम्ब प्रतिच्छायस्तस्य छल मिष तेन । राजभिर्नृपै शिरोभिरुत्तमाङ्गैरुह्यमाना । पुन केव । शरदिव घनात्यय इव । उभयत्र विशेषणसाम्यमाह—कलहसेति । कलहस एव कलहस इव वा धवल शुभ्रमम्बर वस्त्र यस्या सा तथा । पुन केव । जामदग्न्येति । जमदग्नेर्गोत्रापत्य जामदग्न्य परशुरामस्तस्य परशु कुठारस्तस्य धारा प्रान्तप्रदेशस्तद्वदिव । उभयविशेषणसाम्यमाह—वशीति । वशीकृत स्वायत्तीकृत क्रूरत्वेन व्यामोहेन वा सकलराजाना समग्रभूपतीना मण्डल चक्र यया सा तथा । पुन केव । विन्ध्यस्येति । विन्ध्यस्य जलबालकस्य वनमरण्य तस्य भूमि पृथिवीव तत्सदृशीव । उभयत्र साम्यमाह—वेत्रेति । वेत्राणा वेतसानां लता सरलवृक्षा यत्र । पक्षे वेत्रस्य लता यष्टि । हस्त इति शेष । यस्या सा तथा । पुन केव । राज्येति । राज्यस्याधिदैवताधिष्ठात्री सान्निध्यकारिणी देवतेव सू(सु)रीवेत्युत्प्रेक्षा । अपूर्वेति शेष । अत एव विग्रहिणी शरीरिणी । पुनस्तामेव विशेषयन्नाह—क्षितीति । क्षितितले भूमितले निहिता जानू तलकीलौ, अथ च करौ तावेव कमले यया सा तादृशी । सविनय विनयेन सह वर्तमानम् । किमब्रवीत्तत्राह—देवेति । हे देव हे स्वामिन्, द्वारे स्थिता चाण्डालाना दिवाकीर्तीना कन्यका कुमारी पञ्जरे पक्षिणामाश्रये स्थितं शुक कीरमादाय गृहीत्वा देव स्वामिन विज्ञापयति । स्वरहस्यं निवेदयतीत्यर्थं । केव । सुरेति । सुराणा देवानां लोक स्वर्गमारोहत आरोहण कुर्वतत्रिशङ्कोरयाज्यस्य राजलक्ष्मीरिव । तामेव विशेषयन्नाह—कुपितेति । त्रिशङ्कोरयाज्यस्य देवयागात्स्वर्गे वासो न भवतीत्यत कुपितः क्रुद्धो य. शतमख इन्द्रस्तस्य हुङ्कार कोपध्वनिस्तेन निपाति

( भूमि पर ) गिरायी गयी स्वर्ग में चढ़ते त्रिशङ्कु की राजलक्ष्मी-सी दक्षिण देश से आयी एक चाण्डालकन्या पिंजरे में बन्द एक तोते को लिए हुई, द्वार पर खड़ी आप से इन

देवं विज्ञापयति—'सकलभुवनतलरत्नानामुदधिरिवैकभाजनं देवः। विहङ्गमश्चायमाश्चर्यभूतो निखिलभुवनतलरत्नमिति कृत्वा देवपादमूलमादायागताहमिच्छामि देवदर्शनसुखमनुभवितुम्' इति। एतदाकर्ण्य 'देवः प्रमाणम्' इत्युक्त्वा विरराम। उपजातकुतूहलस्तु राजा समीपवर्तिनां राज्ञामालोक्य मुखानि 'को दोषः ? प्रवेश्यताम्' इत्यादिदेश।

अथ प्रतीहारी नरपतिकथनानन्तरमुत्थाय तां मातङ्गकुमारीं प्रावेशयत्। प्रविश्य च सा नरपतिसहस्रमध्यवर्तिनमशनिभयपुञ्जितकुलशैलमध्यगतमिव कनक-

---

ताध क्षिप्ता। कीदृशी चाण्डालकन्यका। दक्षिणेति। दक्षिणापथाद्दक्षिणमार्गादागता प्राप्ता। प्रतीहारी चाण्डालकन्यकाया सामान्यतो विज्ञापनाविषयमाह— सकलेति। चाण्डालकन्यकायास्त्वियं विज्ञापना। देवेति। हे देव, इति कृत्वा तं शुकमादाय देवस्य राज्ञः पादमूलं चरणमूलमहमागता देवदर्शनसुखं महाराजस्यावलोकनसातमनुभवितुमनुभवविषयीकर्तुमिच्छामि समीहे। इतिशब्दवाच्यमाह—सकलेति। सकलानि समग्राणि यानि भुवनतलानि तेषु यानि रत्नानि तेषामेकं भाजनमुत्कर्षस्थानम्। क इव। उदधिरिव समुद्र इव। यथोदधिः सर्वरत्नानां भाजनं तथा देवो भवानपीत्यर्थः। अयं विहगमः पक्षी शुक आश्चर्यभूत इत्यद्भुतप्रेक्षणविषयः, अतस्तादृग्लोकविशेषत्वादेव निखिलानि यानि भुवनतलानि तेषां रत्नमुत्कृष्टम्। 'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' इति। आदाय गृहीत्वा। देवः प्रमाणमिति। यदेवास्य राज्ञोऽनुशासनं तदेव मया विधेयमित्युक्त्वा विरराम तूष्णीं बभूवेत्यन्वयः। प्रतीहार्युक्तं चाण्डालकन्यकाविज्ञापनावाक्यं सर्वं नृपेणाकर्ण्य राजमन्त्रिवर्गैरमन्त्र्य निराकुर्वन्प्रतीहारीं प्रतीत्यादिदेश। को दोषः प्रवेश्यतामिति। स्पष्टम्। कीदृशो राजा। उपेति। उपजातमुत्पन्नं कुतूहलं कौतुकं यस्य स तथा। किं कृत्वा। समीपवर्तिनां निकटस्थानां राज्ञां मन्त्रिणां च मुखानि वदनान्यालोक्य निरीक्ष्येत्यर्थः। तेषामपि तदिच्छेति ज्ञात्वेत्यर्थः।

अथेति। अथ नरपतिकथनानन्तरमुत्थायोत्थानं कृत्वा मातङ्गकुमारीं प्रावेशयत्प्रवेशमकारयत। प्रविश्य चेति। प्रविश्य प्रवेशं कृत्वा सा चाण्डालकुमारी राजानमद्राक्षीत् अपश्य-

---

शब्दों में निवेदन करती है—"महाराज, आप महासागर की भाँति सम्पूर्ण भूमण्डल के रत्नों (अर्थात् सर्वोत्कृष्ट पदार्थों) के एकमात्र संग्रहालय (निक्षेपागार) हैं, और यह पक्षी सारे भूमण्डल का एक आश्चर्यजनक रत्न है—यह सोचकर इसको लेकर आप के चरणों में आयी मैं महाराज के दर्शनों से उत्पन्न सुख को अनुभव करना चाहती हूँ।'—यह सुनकर आप जैसा भी निर्णय करें।" प्रतिहारी इतना कह कर रुक गयी। अब उस राजा ने, जिसके मन में उत्सुकता उत्पन्न हो गयी थी, अपने समीपवर्ती राजाओं के मुखों को देखकर (उनकी ओर देखकर)—"क्या हानि है! उसको आने दो।" यह कह कर (उसको) भीतर लाने की आज्ञा दी।

तब राजा के यह कह चुकने पर वह प्रतिहारी उठ कर उस चाण्डालकन्या को भीतर लिवा लायी और उसने प्रविष्ट होकर राजा को देखा। उस समय राजा (दूसरे) सहस्रों

शिखरिणम्, अनेकरत्नाभरणकिरणजालकान्तरितावयवमिन्द्रायुधसहस्रसञ्छादिताष्टदिग्भागमिव जलधरदिवसम्, अवलम्बितस्थूलमुक्ताकलापस्य कनकशृङ्खलानियमितमणिदण्डिकाचतुष्टयस्य गगनसिन्धुफेनपटलपाण्डुरस्य नातिमहतो दुकूलवितानस्याधस्तादिन्दुकान्तपर्यङ्किकानिषण्णम्, उद्धूयमानसुवर्णदण्डचामरकलापम्, उन्मयूखमुखकान्तिविजयपराभवप्रणते शशिनीव स्फटिकपादपीठे विन्यस्तवाम-

---

दित्यर्थः। 'दृशिर् प्रेक्षणे' इत्यस्य लुङि रूपम्। राजानं विशेषयन्नाह—नरपतीति। नरपतीनां राज्ञां यत्सहस्रं तन्मध्यवर्तिनम्। तदन्तरालस्थितमित्यर्थः। कमिव। कनकशिखरिणमिव मेरुमिव। कीदृशं मेरुम्। अशनीति। अशनेरिन्द्रायुधाद्वज्राद्यद्भयमातङ्कस्तेन पुञ्जिता एकत्रीभूता एकत्र समवेता ये कुलशैलाः क्षेत्रसीमाकारिपर्वतास्तेषु मध्यगतं तदन्तःस्थितम्। पुनर्नृपं विशिनष्टि—अनेकेति। अनेकानि विविधानि यानि रत्नाभरणानि मणिखचितभूषणानि तेषां यानि किरणजालकानि। जालान्येव जालकानि। स्वार्थे कप्। मरीचिमण्डलानि तैरन्तरिता आच्छादिता अवयवा अपघना यस्य स तम्। नीलपीतादिवर्णयोगात्। तत्रोपमानमाह—इन्द्रेति। इन्द्रायुधानां हरिकार्मुकाणां यत्सहस्रं तेन सञ्छादितास्तिरोहिता अष्टौ दिग्भागाः ककुभां प्रदेशा यस्मिंस्तथाभूतं जलधरदिवसमिव प्रावृड्दिनमिव। पुनस्तमेव नृपं विशिनष्टि—नातीति। नातिमहतः स्थानोचितप्रमाणस्य दुकूलं क्षौमं तस्य वितानमुल्लोचः। 'उल्लोचो वितानः कदकोऽपि' इत्यभिधानचिन्तामणिः। तस्याधस्तात्तदधःप्रदेशे इन्दुकान्तानां चन्द्रकान्तमणीनां या पर्यङ्किका मञ्चिका तस्यां निषण्णमुपविष्टम्। अथ वितानं विशेषयन्नाह—अवेति। अवलम्बितः आश्रितः स्थूलानां स्थविष्ठानां मुक्तानां रसोद्भवानां कलापो जालं येन स तथा। कस्य तस्य। कनकेति। कनकं सुवर्णं तस्य या शृङ्खला बन्धनरश्मयस्तैर्नियमिता निबद्धा मणिदण्डिका रत्नखचिता यष्टयस्तासां चतुष्टयं यस्मिन्स तथा तस्य। गगनेति। गगनसिन्धोः स्वर्णद्या फेनो डिण्डीरः। 'डिण्डीरोऽब्धिकफः फेनः' इत्यभिधानचिन्तामणिः। तस्य पटलं समूहस्तद्वत्पाण्डुरः शुभ्रः तस्य। पुनर्नृपं

---

राजाओं के मध्य बैठा ऐसा दिखायी दे रहा था कि मानो (अपने शत्रु इन्द्र के) वज्र के डर से एकत्रित कुलशैलों के मध्य में स्थित—चारों ओर उनसे घिरा हुआ सुमेरु-पर्वत हो, (पहने हुए) अनेक रत्नमय आभूषणों की किरणों के पुञ्ज से ढके हुए अगों वाला ऐसा प्रतीत हो रहा था कि वह सहस्रों इन्द्रधनुषों से ढकी आठों दिशाओं के प्रदेशवाला वर्षाऋतु का दिवस हो। राजा चन्द्रकान्त मणियों के पलंग पर, एक ऐसे रेशमी शामियाने के नीचे बैठा था जो बहुत बड़ा नहीं था, (उस शामियाने पर) मोटे मोटे मोती (हार बने) लटक रहे थे, (उसके) सोने की साकलों से कसे (नियमित) चार मणिमय स्तम्भ थे, और वह आकाशगंगा के फेन पटल-सा श्वेत था, (राजा पर) सोने की मूठ लगे चँवर डुलाये जा रहे थे। उसने अपने बाँये पैर को संगमरमर के बने एक पीढ़े पर रखा हुआ था जो उस चन्द्रमा सरीखा दिखायी देता था कि जो ऊपर को उठती हुई किरणोंवाले (राजा के) मुख की शोभा की विजय के कारण हुए निरादर से मानो अपना सिर झुकाए हुए हो,

पादम्, इन्द्रनीलमणिकुट्टिमप्रभासंपर्कश्यामायमानैः प्रणतरिपुनिःश्वासमलिनीकृतैरिव चरणनखमयूखजालैरुपशोभमानम्, आसनोल्लसितपद्मरागकिरणपाटलीकृतेनाचिरमृदितमधुकैटभरुधिरारुणेन हरिमिवोरुयुगलेन विराजमानम्, अमृतफेनधवले गोरोचनालिखितहंसमिथुनसनाथपर्यन्ते चारुचामरवायुप्रनर्तितान्तदेशे दुकूले वसानम्, अतिसुरभिचन्दनानुलेपनधवलितोरःस्थलम्, उपरिविन्यस्तकुङ्कुमस्थासकमन्तरान्तरानिपतितबालातपच्छेदमिव कैलासशिखरिणम्, अपरशशिशङ्कया नक्षत्र-

विशिनष्टि—उद्धूयेति। उद्धूयमानो व्यज्यमान सुवर्णस्य काञ्चनस्य दण्डोऽवलम्बनयष्टिर्येष्वेतादृशानि चामराणि प्रकीर्णकानि तेषा कलाप समूहो यस्य स तम्। स्फटिकेति। स्फटिकाना स्वच्छमणीना यत्पादपीठं चरणस्थापनस्थल तत्र विन्यस्त स्थापितो वामपाद सव्यचरणो येन स तथा तम्। पादपीठ विशेषयन्नाह—शशिनीति। शशिनीव चन्द्रमसीव। अथ शशिन विशेषयन्नाह—उन्मयूखेति। उदूर्ध्वं मयूखा किरणा यस्मिन्नेतादृश यन्मुख तस्य या कान्तिर्दीप्तिस्तया यो विजयो जयस्तेन य पराभवस्तिरस्कारस्तेन प्रणते पादसंलग्ने। पुनर्नृपं विशेषयन्नाह—चरणेति। चरणाना पादाना ये नखा पुनर्भवास्तेषा मयूखा किरणास्तेषां जालानि समूहास्तैरुपशोभमान भासमानम्। मयूखजाल विशेषयन्नाह—इन्द्रेति। इन्द्रनीलमणीनामिन्द्रमणीना या कुट्टिमप्रभा बद्धभूमिकान्तिस्तस्या सपर्को मिश्रभावस्तेन श्यामायमानै श्यामवदाचरमाणै। कीदृशैरिव। प्रणतेति। प्रणता नता ये रिपव शत्रवस्तेषा ये निश्वासाश्चेतना. (नि.श्वासपवनाः?) तैर्मलिनीकृतैर्मालिन्य प्राप्तैरिव। पुनर्नृपं विशेषयन्नाह—ऊरू इति। ऊरू सक्थी तयोर्युगल तेन विराजमान शोभमानम्। ऊरुयुगल विशिनष्टि—आसनेति। आसन उपवेशनस्थल उल्लसिता देदीप्यमाना ये पद्मरागा लोहितमणयस्तेषा ये किरणा मयूखास्तै

वह (अपने) पाँवों के नाखूनों की उन किरणों के ताने बाने से सुशोभित था जो इन्द्रनील मणियों से मँढे फर्श की चमक से काली-काली हो रही थीं और ऐसी प्रतीत हो रही थीं कि मानो (उसके पाँवों पर) झुके शत्रुओं की आहों से मैली हो गयी हों, (अपने) आसन से निकली पद्मरागमणि (लालमणि-) यों की किरणों से लाल हुई जांघों से ऐसा शोभायमान था कि मानो अभी अभी मारे हुए 'मधु' तथा 'कैटभ' (नाम के राक्षसों) के रक्त से लाल हुई जंघाओंवाला 'विष्णु' (भगवान्) हो, वह अमृतफेन से श्वेत, गोरोचना से चित्रित हंस-युगल सहित किनारियों वाले (राजा के समीप डुलाये जा रहे) सुन्दर चँवरों की वायु से डुलाये गये आंचलों वाले 'रेशमी दुकूल' ओढे हुए था, उसका वक्ष स्थल अत्यन्त सुगन्धित चन्दन लेप से श्वेत हुआ हुआ था, (वक्ष स्थल के) ऊपर केसर के थापे[1] (शोभाधायक चिह्न) लगे हुए थे तथा इस प्रकार वह कैलाशपर्वत के उस शिखर जैसा प्रतीत होता था कि जिस पर बीच-बीच मे (जहाँ-तहाँ) नयी धूप (लाल लाल) के धब्बे पड़े हों, (मोतियों के) हार की परिधि—[2](मेखला) बनाये हुए (हार से घिरा) उसका मुँह ऐसा लग रहा था कि मानो उस (मुख) को दूसरा चन्द्रमा समझकर नक्षत्रमाला ही ने

१. 'स्थासकस्तु हस्त-बिम्बम्' इति कोश। । २ 'परिधि परिवेषश्च'।

मालयेव हारलतया कृतमुखपरिवेषम्, अतिचपलराज्यलक्ष्मीबन्धनिगडकटकशङ्कामुपजनयतेन्द्रमणिकेयूरयुग्मेन मलयजरसगन्धलुब्धेन भुजङ्गद्वयेनेव वेष्टितबाहुयुगलम्, ईषदालम्बिकर्णोत्पलम्, उन्नतघोणम्, उत्फुल्लपुण्डरीकनेत्रम्, अमलकल-

---

पाटलीकृतेन। श्वेतरक्तीकृतेनेत्यर्थ। 'श्वेतरक्तस्तु पाटल' इति कोश। कमिव। अचिरेति। अचिर त्वरित मृदितो मर्दितो यो मधुकैटभो दैत्यविशेषस्तस्य यद्रुधिर रक्त तेनारुणेन रक्तेनोरुयुगलेन विराजमानं हरिमिव कृष्णमिव। पुन किं कुर्वाण नृपम्। वसान दधानम्। किम्। दुकूले क्षीरोदवस्त्रे (कौशेये?)। अथैते विशिनष्टि—अमृतेति। अमृतस्य सुधाया फेनस्तद्वद्धवले शुभ्रे। गोरोचनेति। गोरोचना गोपित्त तेन लिखितानि यानि हंसमिथुनानि सितच्छदयुग्मानि तै सनाथ सहित पर्यन्त प्रान्तदेशो ययोस्ते। चार्विति। चारुणी च ते चामरे च चारुचामरे तयोर्वायुना समीरणेन प्रनर्तिता आन्दोलिता अन्तदेशा प्रान्तदेशा ययोस्ते। पुनर्नृप विशेषयन्नाह—अतीति। अतिसुरभि अतिसुगन्धि यच्चन्दन मलयज तस्यानुलेपनमङ्गरागस्तेन धवलित शुभ्रीकृतमुर स्थल वक्ष स्थल यस्य स तथा तम्। उपरीति। उपरि। अर्थाद्वक्षस। विन्यस्ता विहिता कुङ्कुमस्य केसरस्य स्थासका हस्तबिम्बा यस्य स तम्। 'स्थासकस्तु हस्तबिम्बम्' इति कोश। कमिव। अन्तरेति। अन्तरान्तरा मध्ये मध्ये निपतिता पर्यस्ता बालातपस्य नवीनालोकस्य छेदा खण्डा यस्मिन्नेतादृश कैलासशिखरिणमिव रजताद्रिमिव। पुन प्रकारान्तरेण तमेव नृपं विशेषयन्नाह—अपरेति। अपरोऽन्यो य शशी चन्द्रस्तस्य या शङ्का भ्रान्तिस्तया नक्षत्राणि तारास्तासामाली (सा माला) श्रेणी तद्रूपयैव हारलतया। 'हारो मुक्तान्त प्रालम्बस्रक्कलापावली लता' इति कोश। तेन कृतो विहितो मुखस्याननस्य परिवेष, परिधिर्यस्य स तम्। अनेन हारलताया अत्यन्तनैर्मल्य मुखस्य च चन्द्रसाम्य सूचितम्। 'परिधि परिवेषश्च' इति कोश। अतीति। अतिचपलातिचञ्चला या राज्यलक्ष्मीराधिपत्यश्रीस्तस्या बन्धो नियमनं तत्र निगडोऽन्दुकस्तस्य यत्कटक वलय तस्य शङ्कामारेकामुपजनयता कुर्वता। एवभूतेनेन्द्रमणियुक्तमिन्द्रनीलमणिखचित यत्केयूरयुग्ममङ्गदद्वन्द्व तेन वेष्टित परिक्षिप्त बाहुयुगल भुजद्वितय यस्य स तथा तम्। यद्यपि समस्तवेष्टितपदस्य बाहुपदान्वितस्य विभक्त्यन्तरबद्धेनान्वयस्तथापि विशेषे क्वचित् 'मानेन जितेन्द्रिय' इत्यादौ तथा दृष्टत्वाददोषो द्रष्टव्य। केनेव। मलयेति। मलयजश्चन्दन तस्य यो रसो द्रवस्तस्य गन्धे परिमले लुब्धेनासक्तेन भुजङ्गद्वयेनेव सर्पयुग्मेनेव। ईषदिति। ईषत्किंचिदालम्बि लम्बमान कर्णोत्पल श्रवणपङ्कज यस्य स तथा तम्। उन्नतेति। उन्नतोच्चा घोणा नासिका यस्य स तम्। उत्फुल्लेति। उत्फुल्ल विकसित यत्पुण्डरीक सिताम्भोज तद्वन्नेत्रे लोचने यस्य स तम्। किं कुर्वन्त नृपम्। ललाटदेशमलिकप्रदेशमुद्वहन्त धारयन्तम्।

---

घेर रखा हो, अत्यन्त चञ्चल राज्यलक्ष्मी को बाधने की साकल के वलयों का भ्रम उत्पन्न करते, नीलम के बने, दो केयूरों से घिरी उसकी भुजाएँ, चन्दनलेप की गन्ध के लोभी-दो साँपों से घिरी प्रतीत हो रही थीं, उसके कान (मे लगे हुए) के कमल कुछ-कुछ लटके हुए थे, उसकी नाक उठी हुई थी तथा आँखें पूर्ण विकसित कमल सी थीं, उसका माथा शुद्ध

धौतपट्टायतमष्टमीचन्द्रशकलाकारमशेषभुवनराज्याभिषेकपूतमूर्णासनाथं ललाटदेशमुद्वहन्तम्, आमोदिमालतीकुसुमशेखरमुषसि शिखरपर्यस्ततारकापुञ्जमिव पश्चिमाचलम्, आभरणप्रभापिशङ्गिताङ्गतया लग्नहरहुताशमिव मकरध्वजम्, आसन्नवर्तिनीभिः सर्वतः सेवार्थमागताभिरिव दिग्वधूभिर्वारविलासिनीभिः परिवृतम्, अमलमणिकुट्टिमसक्रान्तसकलदेहप्रतिबिम्बतया पतिप्रेम्णा वसुधरया हृदयेनेवोह्यमानम्, अशेषजनभोग्यतामुपनीतयाप्यसाधारणया राजलक्ष्म्या समालिङ्गितदेहम्,

अथालिक विशेषयन्नाह—अमलेति। अमल निर्मल यत्कलधौत सुवर्णं तस्य य पट्टस्तद्वदायत विस्तीर्णम्। 'अयनम्' इति पाठे सुवर्णतिलकस्थानम्। 'अयन सरणिर्मार्गे' इति कोश.। अष्टमीति। अष्टम्या यच्चन्द्रशकल तदर्धभागस्तद्वदाकार आकृतिर्यस्य तत्तथा। उभयो पक्षयोरष्टम्यामष्टावेव कला इत्यर्धचन्द्र। अतोऽष्टमीग्रहण युक्तमेवेति भाव'। अशेषेति। अशेषाणि समग्राणि यानि भुवनानि तेषा राज्यमाधिपत्य तस्याभिषेको मङ्गलस्नान तेन पूत पवित्रम्। ऊर्णेति। ऊर्णा भ्रुवोरन्तरावर्तस्तेन सनाथ सहितम्। 'ऊर्णा मेषादिलोम्नि स्यादावर्तस्त्व (र्ते चा)न्तरा भ्रुवो' इत्यमर। स च चक्रवर्तिप्रभृतीनामेव नान्यजनस्य। तदुक्तम्—'भ्रूद्वयमध्ये मृणालतन्तुसूक्ष्मं शुभ्रायतमेक प्रशस्तावर्तं महापुरुषलक्षणम्' इति। पुनरेव नृप विशेषयन्नाह—आमोदीति। आमोदीनि सुगन्धीनि यानि मालतीकुसुमानि जातीपुष्पाणि तेषा शेखरश्चूडाभूषण यस्य स तथा तम्। कमिव। पश्चिमाचलमिवास्ताद्रिमिव। कीदृशम्। उषसीति। उषसि प्रभाते शिखरे सानुनि पर्यस्ता पतितास्तारकाणा नक्षत्राणा पुञ्जा समूहा यस्मिन्स तम्। अत्र शैलशिखरनृपोत्तमाङ्गयो पुष्पपुञ्जतारकयोश्चोपमानोपमेयभाव।

(अथवा चमकाये गये) सोने के कमर बन्द—सा चौड़ा, अष्टमी के चन्द्रखण्ड के आकार का, सम्पूर्ण भुवनों के आधिपत्य (राज्य) के लिये (किये गये) अभिषेक (सस्कार के जल) से पवित्र किया गया था और (उसके मस्तक को दोनों भौहों के बीच) रुएँदार बालों की (मगलसूचक) पक्ति थी, सुगन्धित मालती-पुष्पों की माला को अपना शिरोभूषण (शेखर) बनाये हुए—सिर पर पहने हुए—वह राजा, उषाकाल मे चोटियों (शिखरों) पर फैले हुए (दिखायी देते) नक्षत्र समूहों—वाला अस्ताचल पर्वत जैसा दिखायी देता था, (पहने हुए) आभूषणों की चमक से लाल पीले अङ्ग हो जाने के कारण वह उस कामदेव सरीखा लग रहा था जिस (के शरीर को) शिवजी की (उनके तीसरे नेत्र से निकली) आग लग गयी थी, अपने आस पास रहनेवाली वाराङ्गनाओं से घिरा वह राजा मानों सब ओर से सेवा के लिये आयी हुई दिशाओं रूप बधुओं से घिरा हुआ था, उसके सम्पूर्ण शरीर का प्रतिबिम्ब निर्मल—सर्वथा चमकती[1]—मणियों के फर्श में प्रविष्ट हो जाने के कारण वह ऐसा प्रतीत हो रहा था कि मानो उसको पृथ्वी ने (अपने) पति के प्रति स्नेह के कारण अपने हृदय में धारण किया हुआ हो, उसका शरीर उस राज्यश्री से आलिंगित था—

१. अमल का अर्थ 'transparent' पारदर्शक उचित नहीं प्रतीत होता—पारदर्शक वस्तु में स्पष्ट प्रतिबिम्ब नहीं पड सकता।

अपरिमितपरिवारजनमप्यद्वितीयम्, अनन्तगजतुरगसाधनमपि खड्गमात्रसहायम्, एकदेशस्थितमपि व्याप्तभुवनमण्डलम्, आसने स्थितमपि धनुषि निषण्णम्, उत्सादितद्विषदिन्धनमपि ज्वलत्प्रतापानलम्, आयतलोचनमपि सूक्ष्मदर्शनम्, महादोषमपि

---

**मकरेति** । मकरस्य जलजन्तुविशेषस्य ध्वजोऽङ्को यस्य तमिव । मदनसादृश्य प्रदर्शयन्नाह—**आभरणेति** । आभरणाना भूषणाना या प्रभा कान्तिस्तया पिशङ्गित पीतरक्तीकृतमङ्ग यस्य तस्य भावस्तत्ता तया कृत्वा लग्न आसक्तो हरस्येश्वरस्य हुताशोऽग्निर्यस्य स तम् । अत्राभरणदीप्तिहरनेत्रोद्भववह्न्यो राजमकरध्वजयोश्चोपमानोपमेयभावो दर्शित । **आसन्नेति** । आसन्नवर्तिनीभिर्निकटस्थायिनीभि सर्वतो विश्वत सेवार्थं सपर्यार्थमागताभि प्राप्ताभिर्वारविलासिनीभिर्वाराङ्गनाभि । काभिरिव । व्यापकत्वाद्दिश एव वध्व स्त्रियो दिग्वध्वस्ताभिरिव । अत्र दिग्वधूवारविलासिन्यो साम्य सूचितम् । ताभि परिवृत परिवेष्टितम् । **अमलेति** । अमला स्वच्छा ये मणयश्चन्द्रकान्ताद्यास्तेषा कुट्टिम बद्धभूस्तस्मिन्सक्रान्त यत्सकलदेहप्रतिबिम्ब समग्रशरीरप्रतिच्छायस्तस्य भावस्तत्ता तया । हेत्वर्थे तृतीया । पति स्वामी तस्य प्रेम प्रीतिस्तेन च वसुन्धरया पृथिव्या हृदयेनेव स्वान्तेनेवोह्यमान वहमानम् ( धार्यमाणम् ? ) । **अशेषेति** । अशेषा समग्रा ये जना लोकास्तेषा भोग्यता भोगयोग्यतामुपनीतया प्राप्तयापि । सर्वसाधारणयेत्यर्थ । असाधारणया च तथा चान्येषामेतादृशी राजलक्ष्मीर्नास्तीत्यपकर्षोत्कर्षाभ्या साधारणासाधारणया च राजलक्ष्म्या समालिङ्गित उपगूहितो देह शरीर यस्य स तथा तम् । अत्र विरोधाभासोऽलकार । साधारणासाधारणयो (स्त्वयो ?) विरुद्धधर्मत्वात् । तत्परिहारपक्षेऽसाधारणया । सर्वोत्कृष्टयेत्यर्थ । **अपरिमितेति** । अपरिमितोऽसख्येय परिवारजन परिच्छदजनो यस्य स तम् । एव बहुजनत्वेऽप्यद्वितीय न द्वितीयो जनो यस्येति विरोध । तत्परिहारपक्षेऽद्वितीय इत्यस्य सर्वोत्कृष्ट इत्यर्थ । **अनन्तेति** । अनन्तान्यसख्यानि गजा हस्तिनस्तुरगा अश्वास्तेषा साधनान्युपकरणानि सहाया यस्य । 'निर्वर्तनोपकरणानुव्रज्यासु च साधनम्' इत्यमर । एव च बहुसहायत्वेऽपि केवल खड्ग खड्गमात्र सहायो यस्येति विरोध । तत्परिहारपक्षे खड्गमात्रसहायमित्यस्य युद्धे तदन्यानपेक्षत्वमित्यर्थ. । **एकदेशस्थितमिति** । एकदेश सभामण्डपादि,

---

अर्थात् राजकीय यश से व्याप्त दिखायी देता था—जो कि समस्तजनों के उपभोग के लिये प्राप्त होते हुए भी—सामान्यतया अनुपलब्ध ( वस्तुत अनुपम ) थी, ( उसकी सेवा में उपस्थित ) अनगिनत सेवकों के रहते भी वह किसी दूसरे व्यक्ति के बिना ही ( वस्तुत अनुपम ) था, हाथी-घोड़े आदि अनन्त साधनों वाला होते हुए भी ( युद्धों मे ) उसकी सहायिका एकमात्र तलवार ही थी—हाथी-घोड़े उसके लिये अनावश्यक ही रहते थे, एक स्थान पर बैठा हुआ भी वह ( अपने सर्वव्यापक यश अथवा सर्वोपरि शक्ति के द्वारा ) सारे लोकों को व्याप्त किये हुए था, अपने ( सिंह ) आसन पर बैठा हुआ भी वह धनुष पर निषण्ण बैठा-अर्थात् धनुष पर निर्भर था, शत्रुरूप ईंधन को नष्ट किया हुआ होने पर भी उसकी प्रताप रूप अग्नि जाज्वल्यमान थी—उसकी प्रतापाग्नि नहीं बुझी थी । बड़ी बड़ी आँखों वाला तो था, परन्तु उसकी दृष्टि सूक्ष्म ( पैनी ) थी, बड़े-बड़े दोषों वाला ( वस्तुतः

सकलगुणाधिष्ठानम्, कुपतिमपि कलत्रवल्लभम्, अविरतप्रवृत्तदानमप्यमदम्, अत्यन्तशुद्धस्वभावमपि कृष्णचरितम्, अकरमपि हस्तस्थितभुवनतल राजानमद्राक्षीत्।

आलोक्य च सा दूरस्थितैव प्रचलितरत्नवलयेन रक्तकुवलयदलकोमलेन पाणिना जर्जरितमुखभागा वेणुलतामादाय नरपतिप्रतिबोधनार्थं सकृत्सभाकुट्टिम-

---

जनपदो वा। तत्र स्थितमपि निषण्णमपि व्याप्त समाक्रान्त भुवनमण्डल जगन्मण्डल येनेति विरोध। परिहारपक्षे व्याप्त ख्यात भुवनमण्डले यशो यस्येति विग्रह। विशेषेणाप्त व्याप्तमिति वार्थ 'व्याप्तं ख्याते समाक्रान्ते' इति विश्व। आसने स्थितमिति। आसने भद्रासने स्थितमप्युपविष्टमपि धनुषि कार्मुके निषण्णं स्थितमिति विरोध। परिहारपक्षे धनु सज्ञा तस्मिन्स्थितमित्यर्थं। नामश्रवणेन विपक्षाणा साक्षादागत इव इति भयोत्पत्ते'। 'धनु सज्ञा प्रियालद्रौ' इति विश्व। उत्सादितेति। उत्सादितं व्यापादित द्विषन्त एवेन्धनमेधो येन। एवंभूतमपि ज्वलत्प्रतापानलमिति विरोध। परिहारपक्षे ज्वलदित्यस्य दीप्यदित्यर्थं। आयतेति। आयते विस्तीर्णे लोचने यस्यैवभूतमपि सूक्ष्ममविपुल दर्शन लोचनं यस्येति विरोध। परिहारपक्षे सूक्ष्ममध्यात्मविषय दर्शन ज्ञान यस्येत्यर्थं। 'सूक्ष्म स्यात्कैतवेऽध्यात्मेऽप्यणौ' इति विश्व। 'दर्शन नयनस्वप्नबुद्धिधर्मोपलब्धिषु' इति विश्व। महादोषमिति। महान्दोषो यस्मिन्नेवभूतमपि सकलगुणाधिष्ठान समग्रगुणस्थानमिति विरोधः। परिहारपक्षे महती दोषा बाहुर्यस्येत्यर्थं। 'दोषा रात्रौ भुजेऽपि च' इति विश्वलोचन। कुपतिमिति। कुत्सितश्चासौ पतिश्च कुपतिरेवभूतमपि कलत्रवल्लभ स्त्रीजनप्रियमिति विरोध। तत्परिहारपक्षे कु पृथिवी तस्या. पति। स्वामीत्यर्थं। एतादृशस्तत्प्रिय' स्यादिति न विरोध। अविरतमिति। अविरत सतत प्रवृत्त दान यस्यैवभूतमप्यमद दानरहितमिति विरोध। तत्परिहारस्त्वेवम्—अविरत प्रवृत्त दान त्यागो यस्यैवभूतमप्यमदम् गर्वरहितमित्यर्थं। 'दान गजमदे त्यागे पालनच्छेदशुद्धिषु' इति विश्व। अत्यन्तेति। अत्यन्तमतिशयेन शुद्धो निर्मल स्वभाव प्रकृतिर्यस्यैवंभूतमपि कृष्ण श्याम चरितमाचारो यस्येति विरोध। परिहारपक्षे कृष्ण केशवोऽर्जुनो वा तद्वच्चरितं यस्येत्यर्थं। 'कृष्णस्तु केशवे। व्यासेऽर्जुने कोकिले च' इति विश्व।

---

महाबाहु-लम्बी भुजाओं वाला) भी वह सारे गुणों का निवासस्थान था, कुपति—अर्थात् बुरा पति? (नहीं, नहीं, कु—पृथ्वी का पति) होते हुए भी वह पत्नियों का प्यारा था, यद्यपि उसका दान अर्थात् मदरस (वस्तुत दान) निरन्तर चलता रहता था तथापि वह (अमद) अभिमान-रहित था, यद्यपि उसका स्वभाव सर्वथा पवित्र था तो भी उसके कार्य (कारनामे) काले थे? नहीं नहीं, वस्तुत कृष्ण अर्थात् विष्णु के कार्यों के समान (स्तुति-योग्य) थे, यद्यपि वह करों-हाथों से रहित था (वस्तुत 'कर' नहीं लेता था) तो भी सारे लोक उसके हाथ पर स्थित थे—उसके वशवर्त्ती थे।

और राजा को देखकर उसने दूर ही खड़े रहकर, अपने टनटनाते मणिमय कंकणों वाले तथा लाल कमल की पखुडी सदृश कोमल हाथ में, सिरे पर स जर्जर हुई एक बाँस की छड़ी लेकर (उससे) राजा (के ध्यान) को अपनी ओर आकर्षित करने के लिये, एक बार

माजघान, येन सकलमेव तद्राजकमेकपदे वनकरियूथमिव तालशब्देन युगपदावलितवदनमवनिपालमुखादाकृष्य चक्षुस्तदभिमुखमासीत्।

अवनिपतिस्तु 'दूरादालोकय' इत्यभिधाय प्रतीहार्या निर्दिश्यमाना ता वयःपरिणामशुभ्रशिरसा रक्तराजीवनेत्रापाङ्गेनानवरतकृतव्यायामतया यौवनापगमेऽप्यशिथिलशरीरसंधिना सत्यपि मातङ्गत्वे नातिनृशंसाकृतिनानुगृहीतार्यवेषेण शुभ्रवाससा

अकरमिति। न विद्यते करो हस्तो यस्यैवंभूतमपि हस्ते करे स्थित भुवनतल यस्येति विरोध । तत्परिहारपक्षे न विद्यते करो दण्डो यस्येति विग्रह । 'बलि करो भागधेय' इति कोश ।

आलोक्य चेति। राजानमालोक्य वीक्ष्य सा चाण्डालकन्यका सहसैव नृपसंनिधौ गमनमनभिज्ञलक्षणमिति दूरस्थितैव दविष्ठप्रदेशस्थैव वेणुलता वंशयष्टिमादाय गृहीत्वा। नरेति। नरपते राज्ञ प्रतिबोधन संमुखीकरण तदर्थं सभाकुट्टिम परिषद्बद्धभूमिं सकृदेकवार पाणिना हस्तेनाजघान ताडयामास। अथ पाणि विशेषयन्नाह—प्रचलितमिति। प्रचलित प्रकम्पित रत्नवलय मणिखचितकङ्कण यस्मात्स तथा तेन। रक्तमिति। रक्त यत्कुवलय कुवेल तस्य दलानि पत्राणि तद्वत्कोमलेन सुकुमारेण। अनेन लक्षणोपेतत्व हस्तस्य सूचितम्। वेणुयष्टिं विशेषयन्नाह—जर्जरितेति। जर्जरिता जर्जरीभूतो मुखभागोऽग्रभागो यस्या सा तथा ताम्। अग्रभागदलनाच्छब्दविशेषो जायत इति प्रसिद्धं। येनेति। येन ध्वनिना सकलमेव तद्राजक राजसमूह । युगपदिति। युगपत्समकालमावलित परावर्तित वदन मुख येनैवंभूत तदभिमुख तस्या संमुखमासीदभवत्। किं कृत्वा। आकृष्याकर्षण कृत्वा। कस्मात्। अवनिपालमुखाद्राजवदनात्। किम्। चक्षुर्नेत्रम्। तत्रोपमानम्। किमिव। वनकरिणामरण्यहस्तिना यूथमिव समूहमिव। केन। तालशब्देन तालो वाद्यविशेषस्तस्य शब्देन तदुत्थध्वनिना एकपद एककालम्। एकश्रेणीभूतत्वमात्रे दृष्टान्त ।

अवनीति। अवनिपती राजा तु तामनिमिषे निमेषोन्मेषवर्जिते लोचने यस्यैवंभूतो ददर्श-

रत्नजटित फर्श पर आघात किया। जैसे तालवृक्षो के शब्द से जंगली हाथियों का सारा झुण्ड एक साथ अपने मुँह मोड़ लेता है वैसे ही उस (शब्द) को सुनकर उस सारे ही राजसमूह[1] ने एक ही साथ अपने मुँह मोड़ लिये और राजा के मुख पर से अपनी आँखें हटाकर उस चाण्डाल कन्या की ओर अपने मुँह कर लिये।

प्रतिहारी द्वारा 'दूर से देख' यह कही गयी तथा (राजा को) संकेत से बतायी गयी उस चाण्डाल कन्या को राजा ने आँखे झपकाये बिना ही (अर्थात् देरतक स्थिरता से) देखा।

उसके अगले भाग मे (आगे आगे) एक नर (सहचर) था जिसका सिर बुढ़ापे से श्वेत हो गया था, जिसकी आँखों की कोरे (अपाग) लाल कमल सदृश (लाल) थीं, और निरन्तर व्यायाम करते रहने के कारण (युवावस्था के बीत जाने पर भी) उसके शरीर के जोड़ अभी तक ढीले नहीं हुए थे, चाण्डालपना होते हुए भी उसकी आकृति अत्यन्त क्रूर नहीं थी, उसने सज्जनोचित पहरावा पहना हुआ था और उसके वस्त्र श्वेत थे। (चाण्डाल

१. राजकम् = राजसमूह, राजन् + वुञ् 'गोत्रोक्षो'-इत्यादि से समूहार्थ में वुञ्।

**वारयोषितः । ताभिश्च समुन्नतकुचकुम्भमण्डलाभिर्वारिमध्यप्रविष्टः करिणीभिरिव वनकरी परिवृतस्तत्क्षणं रराज राजा । द्रोणीसलिलादुत्थाय च स्नानपीठममलस्फटिकधवलं वरुण इव राजहंसमारुरोह । ततस्ताः काश्चिन्मरकतकलशप्रभाश्यामायमाना नलिन्य इव मूर्तिमत्यः पत्रपुटैः, काश्चिद्रजतकलशहस्ता रजन्य इव पूर्णचन्द्रमण्डलविनिर्गतेन ज्योत्स्नाप्रवाहेण, काश्चित्कलशोत्क्षेपश्रमस्वेदार्द्रशरीरा जलदेवता इव स्फाटिकैः कलशैस्तीर्थजलेन, काश्चिन्मलयसरित इव चन्दनरसमिश्रेण सलिलेन,**

---

ता । **सक्षिप्तेति** । समुत्क्षिप्तमुपरि गृहीत कर्णानामाभरणं भूषण याभिस्तास्तथा । **कर्णेति** । कर्णोत्सङ्गाच्छ्रवणसमीपादुत्सारिता उपरिन्यस्ता अलका कुन्तला याभिस्तास्तथा । अत्र त्रिपदैस्तासा शोभातिशयो व्यज्यते । **गृहीतेति** । गृहीता आत्ता जलकलशा वारिभृतघटा याभिस्ता. । च पुनरर्थे । ताभिस्तत्क्षण तस्मिन्क्षणे परिवृत आवृतो राजा नृपो रराज शुशुभे । कथंभूताभिस्ताभि । समुन्नत कुचकुम्भमण्डल यासा ताभि । कीदृशश्च राजा । वारिमध्यप्रविष्ट । क इव । करिणीभिर्हस्तिनीभि परिवृतो वनकरीव । यथा धेनुकाभि सम मज्जन कुर्वन्वनकरी शोभते तद्वदयमित्यर्थं । ततो द्रोणीसलिलात् । द्रोणीजलादुत्थाय बहिर्निर्गत्य स्नानपीठमारुरोहेत्यन्वय । कीदृशम् । **अमलेति** । अमलो मलवर्जितो य स्फटिको मणिविशेषस्तद्वदुज्ज्वल शुभ्रम् । क इव । वरुण इव । यथा वरुण प्रचेता राजहस कलहसमारोहति । **तत इति** । आरोहणानन्तर ता वारयोषितो यथायथ यथायोग्य राजानमभिषिषिचुरभिषेक चक्रु । इतो वारयोषितो विशेषयन्नाह—**काश्चिदिति** । काश्चित् काश्चन मरकतमणिनिर्मितो य कलश कुम्भस्तस्य प्रभा कान्तिस्तया श्यामायमाना श्यामवदाचरिता नलिन्य इव पद्मिन्य इव मूर्तिमत्यो नीलत्वसाम्यात्तद्रूपधारिण्य पत्रपुटै पर्णसपुटै राजानमभिषिषिचुरिति सर्वत्र । अन्या काश्चन रजतस्य रूप्यस्य कलश कुम्भो हस्ते पाणौ यासा तास्तथा । का इव ।

---

राज्याभिषेक कराने के लिये आई इतनी स्त्री देवताओ ने घेर लिया हो । और उस समय जल के भीतर प्रविष्ट हुआ राजा, उन हाथी की गोल कनपटियों सरीखे उभरे स्तनों वाली, वारवनिताओं से घिरा ऐसा सुन्दर दिखायी दिया जैसा कि हथिनियों से घिरा जगली हाथी होता है । और नॉद के पानी मे से उठकर ( निकलकर ) राजा स्वच्छ स्फटिक-सी श्वेत ( स्फटिक प्रस्तर की बनी होने के कारण ) स्नान शिला पर चढ़ गया—ठीक ऐसे ही जैसे कि वरुण देवता ( जल से निकलकर ) स्वच्छ स्फटिक-से श्वेत हस पर सवार हो जाता है । तब उन वाराङ्गनाओं ने उसको क्रम से एक-एक करके ( पृथक् पृथक् )' स्नान कराया, उनमे से कई तो मरकतमणि ( निर्मित ) घड़ो की चमक से श्याम रग की हुई देह धारिणी नलिनियों सी दिखायी दे रही थीं—उन्होंने दोनो से उसको स्नान कराया, कई हाथों में चॉदी के बने घड़े लिये हुए थीं—उन्होंने ऐसे स्नान कराया कि मानो रात्रियॉ पूर्ण चन्द्रमण्डल से निकलते (तरल) ज्योत्स्ना प्रवाह से स्नान करा रही हों, कुछ घड़ा उठाने ( मे हुई ) थकावट के कारण निकले पसीने से भींगे शरीरवाली थीं, उन्होंने परियों के सदृश स्फटिक के बने घड़ों द्वारा तीर्थजलों से स्नान कराया, कुछ ने मलयपर्वत की नदियों के समान चन्दन रस मिश्रित जल से

काश्चिदुदिक्षप्तकलशपार्श्वविन्यस्तहस्तपल्लवाः प्रकीर्यमाणनखमयूखजालकाः प्रत्यङ्गुलिविवरविनिर्गतजलधाराः सलिलयन्त्रदेवता इव, काश्चिज्जाड्यमपनेतुमाक्षिप्तबालातपेनेव दिवसश्रिय इव कनककलशहस्ताः कुङ्कुमजलेन वाराङ्गना यथायथं राजानमभिषिषिचुः। अनन्तरमुदपादि च स्फोटयन्निव श्रुतिपथमनेकप्रहतपटुपटहझल्लरीमृदङ्गवेणुवीणागीतनिनादानुगम्यमानो बन्दिवृन्दकोलाहलाकुलो भुवनविवरव्यापी स्नानशङ्खानामापूर्यमाणानामतिमुखरो ध्वनिः।

पूर्णचन्द्रमण्डलात्समग्रशशिबिम्बाद्विनिर्गतेन नि सृतेन ज्योत्स्नाप्रवाहेण कौमुदीरयेण शोभमाना रजन्य इव त्रियामा इव। अन्या काश्चन कलशस्य कुम्भस्य चोत्क्षेप उत्थापन तस्माद्य श्रमस्तेन य स्वेदो घर्मजल तेनार्द्र स्विन्न शरीर देहो यासा ता स्फाटिकै स्फटिकसबन्धिभि कलशैस्तीर्थजलेन तीर्थाम्भसा च सहिता जलदेवता जलाधिष्ठात्र्य इव। काश्चिदिति। अन्या काश्चन चन्दनस्य मलयजस्य रसो द्रवस्तेन मिश्रेण सयुक्तेन सलिलेन स्नान चक्रु। का इव। मलयसरित इव मलयाचलनद्य इव। ता अपि चन्दनरसमिश्रसलिला स्यु। काश्चिदिति। अन्या काश्चनोत्क्षिप्त उत्पाटितो य कलशस्तस्य पार्श्वयोर्वामदक्षिणयोर्विन्यस्ता स्थापिता हस्तपल्लवा करकिसलयानि याभिस्ता। प्रकीर्यमाणानीतस्ततो विक्षिप्यमाणानि नखमयूखजालकानि पुनर्भवदीप्तिचया याभिस्ता। प्रत्यङ्गुलि प्रतिकरशाख यानि विवराणि छिद्राणि तेभ्यो विनिर्गता जलधारा पानीयसततिर्यासा ता। का इव। सलिलयन्त्रदेवता इव। ता अप्येवविधा स्युरित्यर्थ.। काश्चिदिति। अन्या काश्चन कनकस्य सुवर्णस्य कलशो हस्ते यासा ता। का इव दिवसश्रिय इव वासरलक्ष्मीरिव। केनेव। जाड्य शीतमपनेतु दूरीकर्तुमाक्षिप्त आकर्षितो यो बालातपो नव्यालोकस्तेनेव कुङ्कुमजलेन केसरवारिणा। अत्र कुङ्कुमजलबालातपयोरुपमानोपमेयभाव। अन्वयस्तु प्रागेवोक्त। अनन्तरमिति। अभिषेकानन्तर स्नानशङ्खाना ध्वनि शब्द उदपाद्युत्पन्नोऽभूत्। 'पद गतौ' इत्यस्य लुङि रूपम्। किं कुर्वन्निव। श्रुतिपथं

स्नान कराया, कुछ, उठाये हुए घड़े के दायें बायें अपने पत्र-सदृश ( कोमल तथा लाल लाल ) हाथो को रखे हुई, नाखूनो की किरणों के समूह को ( घड़ो पर ) बिखेरती हुई, अगुलियो के प्रत्येक अन्तराल ( बीच के खाली स्थान ) से जलधारा को छोड़तीं, जल ( चुवाने के लिये बनायी गई ) यन्त्र ( यान्त्रिक ) देवियों अर्थात् पुतलियों सरीखे थीं, और कइयों ने सुवर्णघट हाथ में लिये हुए उसको केसर जल से स्नान कराया, वे ठढक को दूर करने के लिए ( वहाँ ) लायी गयी प्रात कालीन धूप से स्नान कराती हुई दिन की अधिष्ठात्री देवियाँ सी प्रतीत हो रही थीं। और तब वहाँ, मानो कर्णमार्ग को फोड़ता हुआ सा, बहुत से उस समय ( साथ साथ ) बजाये गये तीखी[1] आवाजवाले नगाड़ो, झाँझ, तबला, बाँसुरी, वीणा और गीतों के शब्दों से अनुगम्यमान और चारणों के दलो ( की उक्तियों ) के कोलाहल से मिश्रित, ( अत एव ) ससार मे सभी रिक्त स्थानों मे व्याप्त, ( राजा के ) स्नान ( के समय ) बजाये जा रहे शखों की अत्यन्त मुखर ध्वनि होने लगी।

१ पटु = तीव्र।

एवं च क्रमेण निर्वर्तिताभिषेको विषधरनिर्मोकपरिलघुनी धवले परिधाय धौतवाससी शरदम्बरैकदेश इव जलक्षालननिर्मलतनुः, अतिधवलजलधरच्छेदशुचिना दुकूलपटपल्लवेन तुहिनगिरिरिव गगनसरित्स्रोतसा कृतशिरोवेष्टनः, संपादितपितृजलक्रियो मन्त्रपूतेन तोयाञ्जलिना दिवसकरमभिप्रणम्य देवगृहमगमत्। उपरचितपशुपतिपूजश्च निष्क्रम्य देवगृहान्निर्वर्तिताग्निकार्यो विलेपनभूमौ झङ्कारि-

---

कर्णमार्गे स्फोटयन्निव द्विधा कुर्वन्निव। पुनः कीदृक्। अतिशयेन मुखरस्तारतरः। किंविशिष्टानां शङ्खानाम्। आपूर्यमाणानां वाद्यमानानाम्। पुनः कीदृशः। अनेकेति। अनेकप्रकारेण प्रहता वादिताः पटवः समर्था ये पटहा दुन्दुभयो, झल्लरी प्रसिद्धा, मृदङ्गो मर्दलो, वेणुर्वंशो, वीणा वल्लकी, गीतानि गानानि चैतेषां यो निनादो ध्वनितः तमनुलक्षीकृत्य गम्यमानः प्रवर्तमानः। पुनः कीदृक्। बन्दिनां वैतालिकानां वृन्दं समुदायस्तस्य कोलाहलः कलकलस्तेनाकुलो मिश्रितः। पुनः कीदृक्। भुवनेति। भुवनानां विष्टपानां विवराणि छिद्राणि व्याप्नोतीत्येवंशीलः स तथा।

एवं च पूर्वोक्तप्रकारेण क्रमेण परिपाट्या निर्वर्तितो विहितोऽभिषेको यस्यैवंभूतो नृपो देवगृहं चैत्यमगमदित्यन्वयः। किं कृत्वा। विषेति। विषधराः सर्पास्तेषां निर्मोकः कञ्चुकस्तद्वत्परिलघुनी अतिहस्वे अत एव धवले शुभ्रे धौतवाससी प्रक्षालितवस्त्रे परिधाय परिधानं कृत्वा। अथ राजानं विशिनष्टि—जलेति। जलेन पानीयेन यत्क्षालनं तेन निर्मलापगतमला तनुः शरीरं यस्य स तथा। किमिव। शरदिति। शरदि घनात्यये यदम्बरं गगनं तस्यैकदेशो भागस्तद्वदिव। शरद्यम्बरं वृष्टेरभावान्निर्मलमेवेति भावः। अतीति। अतिधवलो यो जलधरो मेघस्तस्य यश्छेदः खण्डस्तद्वच्छुचिना निर्मलेन दुकूलपटः क्षीरोदपट्टस्तस्य पल्लवेन प्रान्तेन कृतं विहितं शिरोवेष्टनमुत्तमाङ्गवेष्टनं येन स तथा। कमिव। तुहिनगिरिरिव हिमाचल इव। गिरिं विशिनष्टि—गगनेति। गगनसरित्स्वर्धुनी तस्याः यत्स्रोतः प्रवाहस्तेन कृतशिरोवेष्टनः। सम्पादित इति। सम्पादिता निष्पादिता पितॄणां जलक्रिया येन सः। मन्त्रेति। मन्त्रैर्वेदोक्तैः पूतं पवित्रं यत्तोयं पानीयं तस्याञ्जलिः प्रसृतिस्तेन दिवसकरं सूर्यमभि सम्मुखं प्रणम्य

---

इस प्रकार यथारीति अपना स्नान समाप्त करके साँप की केंचुली से हल्के[1], धुले हुए (स्वच्छ) दो श्वेत वस्त्र पहन कर, वह राजा जल में स्नान करने से निर्मल शरीरवाला होने के कारण शरद् ऋतु में आकाश के एक भाग-सा श्वेत प्रतीत हुआ (शरद् ऋतु में पानी बरस जाने पर उसका एक भाग श्वेत प्रतीत होता है), अत्यन्त श्वेत मेघखण्ड के सदृश (बर्फ से) श्वेत हल्के रेशमी वस्त्रखण्ड को सिर पर (पगड़ी की भाँति) लपेटे हुए वह आकाश-गंगा की धारा से घिरी चोटी वाला हिमालय पर्वत-सरीखा प्रतीत हुआ, (फिर) पितरों को जल (अर्पित करने) की क्रिया को करके, (उस समय पढ़े गये) मन्त्रों द्वारा पवित्र हुए जल की अञ्जलि द्वारा सूर्य को नमस्कार करके (सूर्य को अर्घ्य देकर) वह राजा देवगृह (प्रतिमा गृह) में चला गया। और शिव की पूजा करके देवगृह से निकल कर उसने अग्नि-

---

1 परिलघुनी = बहुत बारीक

भिरलिकदम्बकैरनुबध्यमानपरिमलेन मृगमदकर्पूरकुङ्कुमवाससुरभिणा चन्दनेनानुलिप्तसर्वाङ्गो विरचितामोदिमालतीकुसुमशेखरः कृतवस्त्रपरिवर्तो रत्नकर्णपूरमात्राभरणः समुचितभोजनैः सह भूपतिभिराहारमभिमतरसास्वादजातप्रीतिरवनिपो निर्वर्तयामास ।

परिपीतधूमवर्तिरुपस्पृश्य च गृहीतताम्बूलस्तस्मात्प्रमृष्टमणिकुट्टिमप्रदेशादुत्थाय नातिदूरवर्तिन्या ससम्भ्रमप्रधावितया प्रतीहार्या प्रसारितबाहुमवलम्ब्य

---

नमस्कृत्य । उपेति । उपरचिता निष्पादिता पशुपतेरीश्वरस्य पूजार्चा येनैवभूत सन् तस्माद्देवगृहान्निष्क्रम्य बहिरागत्यावनिपो राजाहारमशनादिक निर्वर्तयामास कृतवानित्यन्वय । निर्वर्तितेति । निर्वर्तित कृतमग्निकार्य होमादि येन स । विलेपनभूमावङ्गरागनिष्पादनस्थले झङ्कारिभिर्झङ्कारशब्द कुर्वाणैरलिकदम्बकैर्भ्रमरसमूहैरनुबध्यमानो नियम्यमान परिमल आमोदो यस्य स तथा तेन । मृगमदेति । मृगमद कस्तूरी, कर्पूरो हिमवालुका, कुङ्कुम केसरमेतेषा यो वास परिमलस्तेन सुरभिणा सुगन्धिनैवभूतेन चन्दनेन मलयजेनानुलिप्त लेपित सर्वाङ्ग समग्रशरीरावयवा येन स तथा । इतो राज्ञो विशेषणानि—विरचितेति । विरचितो रचनाविशेषेण, निर्मित आमोदिमालतीकुसुमानि सुगन्धिजातिपुष्पाणि तेषा शेखर शिरोभूषण येन स तथा । कृतेति । कृतो विहित पूर्वपरिहितवस्त्रस्य परिवर्त परावर्तो येन स तथा । कृत वस्त्रस्य क्षीरोदवस्त्रस्य परिवर्त उपरिवस्त्र येनेति वा । रत्नेति । रत्नखचित कर्णपूर कर्णाभरण तन्मात्रमाभरण यस्य स तथा । ननु नीचजनप्रदर्शनार्थं बहुतरभूषणधारणमिति मात्रपदव्यङ्ग्यम् । एकपक्तौ समुचित योग्य भोजन येषामेवभूतर्भूपतिभिर्नृपतिभि सहेति भिन्नक्रम । अभीति । अभिमता श्रेष्ठा ये रसा मधुरादयस्तेषामास्वादो ग्रहण तेन जातोत्पन्ना प्रीति सतुष्टिर्यस्य स तथा ।

परीति । मुखसौगन्ध्यप्रतिपादनार्थं परि सामस्त्येन पीता गृहीता धूमवर्तिर्द्रव्यविशेषो येन स तथा । किं कृत्वा । उपस्पृश्याचम्य । 'उपस्पर्शस्त्वाचमनम्' इति कोशः । पुन किं कृत्वा । भुक्त्वा भोजन विधाय । आस्थानमण्डप परिषन्मण्डलमयासीज्जगामेत्यन्वय ।

---

पूजा की, ( फिर ) प्रसाधन कक्ष में[1] उसके सारे शरीर पर, कस्तूरी, कपूर और केसर की गन्ध से ( और अधिक ) सुगन्धित हुए तथा गुञ्जन करते भौरों द्वारा अनुगम्यमान सुगन्ध से युक्त चन्दन का लेप किया गया, फिर उसने सुगन्धित मालती के पुष्पों की माला ( सिरपर )[2] धारण की, वस्त्र बदले, और केवल मात्र रत्न-जटित कर्ण-भूषण पहने हुए उसने ( अपने साथ ) भोजन करने के अभ्यासी ( समुचित ) अर्थात् ( उसके साथ भोजन करने वाले ) राजाओं के साथ साथ भोजन किया और अभीष्ट रसवाले भोजन पदार्थों के आस्वाद से प्रसन्न होकर भोजन समाप्त किया।

भोजन करके उसने सुगन्धित औषधियों की बनी चुरुटें[3] पी, आचमन किया, पान

---

१ विलेपनभूमौ । २ शेखर का अर्थ सिर पर पहननेवाली माला है । ३ धूमवर्ति ।

वेत्रलताग्रहणप्रसङ्गादतिजरठकिसलयानुकारिकरतलकरेणाभ्यन्तरसचारसमुचितेन परिजनेनानुगम्यमानो, धवलांशुकपरिगतपर्यन्ततया स्फटिकमणिमयभित्तिनिबद्धमिवोपलक्ष्यमाणम् , अतिसुरभिणा मृगनाभिपरिगतेनामोदिना चन्दनवारिणा सिक्तशिशिरमणिभूमिम् , अविरलविप्रकीर्णेन विमलमणिकुट्टिमगगनतलतारागणेनेव कुसु-

गृहीतमात्त ताम्बूल नागवल्लीदल येन स तथा। तस्मात्माङ्निर्दिष्टात्। प्रमृष्टेति। प्रमृष्ट सातिशय मृष्ट मणिकुट्टिम यस्मिन्नेवभूतात्प्रदेशात्स्थलात् उत्थाय उत्थान कृत्वेत्यर्थ। नातिदूर वर्तते या सा तथा। पुन कीदृश्या। ससम्भ्रम सभय प्रधावितया त्वरित गच्छन्त्या। एवभूतया प्रतीहार्या। 'पुवत्प्रगल्भा या नारी वक्तु या च विचक्षणा। सा प्रतीहारी' इति। तया प्रसारित सनिहित कृतो बाहुर्भुजस्तमवलम्ब्य। तदाश्रयमास्थायेत्यर्थ। परीति। परिजनेन सेवकजनेनानुगम्यमान इति राज्ञो विशेषणम्। अथ सेवकजन विशेषयन्नाह—वेत्रेति। वेत्रस्य वेतसस्य या लता सरलयष्टिस्तस्या ग्रहण धारण तस्य प्रसङ्गोऽभ्यासस्तस्मादतिजरठमतिकठिन यत्किसलयं तदनुकरोति तादृश करतल पाण्यधोभागो यस्यैवविध करो हस्तो यस्य स तथा तेन। अभ्यन्तरेति। अभ्यन्तर बाह्यजनागम्यो यो गृहप्रदेशस्तत्र य सचार. सचरण तत्र समुचितो योग्य स तथा तेन। अथास्थानमण्डप विशिनष्टि—धवलेति। धवल शुभ्र यत् अशुक वस्त्र तेन परिगत सहितो य पर्यन्तः प्रान्तस्तस्य भावस्तत्ता तया। स्फटिकमणिमयी या भित्ति. कुड्य तया निबद्ध निर्मितमिवोपलक्ष्यमाण दृश्यमानम्। अनेनांशुकाना श्वेतत्वसौक्ष्म्यातिशयो व्यज्यते। अतीति। अतिसुरभिणा मृगनाभिपरिगतेनामोदिना चन्दनवारिणा मलयजपानीयेन सिक्ता सिञ्चितात एव शिशिरा शीतला मणिभूमी रत्नबद्धा भूर्यस्मिंस्तत्तथा। अवीति। अविरल घनतर विप्रकीर्णेन पर्यस्तेन। विमलेति। विमलमणीना निर्मलरत्नानां

लिया (चबाया) और उस चमकाये हुए (चमकते) मणि निर्मित फर्श से उठकर खड़ा हो गया, फिर वह बहुत दूर नहीं खड़ी हुई (समीपवर्तिनी) हड़बड़ाकर दौड़ी प्रतिहारी द्वारा फैलायी गयी बाँह का सहारा लिए हुए, बेंत पकड़े रहने की सतत आवश्यकता के कारण[1] अत्यन्त जरठ अर्थात् पूरे बढ़े हुए नए पत्ते सरीखी हथेलीवाले हाथोंवाले[2] भीतरी भागों में आने जाने का विशेष अधिकार प्राप्त, सेवकों द्वारा अनुगम्यमान (दर्शन देने के लिये नियत) सभाभवन में पहुँचा। वह कक्ष शुभ्र वस्त्रों से ढके किनारोंवाला होने के कारण श्वेत सगमर्मर की बनी दीवारों से घिरा प्रतीत होता था, अत्यन्त सुगन्धित कस्तूरी मिश्रित चन्दन जल से सिंचित (अतएव) शीतल मणिमय फर्शवाला था, इसके स्वच्छ मणि (जटित) फर्शरूपी

१ प्रसगात् के अर्थ हैं—व्यस्तता अथवा अभ्यास के कारण।

२ 'वेत्रलता ·· करतलम्'—यह विशेषण दूसरे सेवकों के हाथ में बेंत न रहने के कारण प्रतिहारी के बाहु का ही होना चाहिये। इस अवस्था में इसका अर्थ इस प्रकार होगा—"प्रतिहारी द्वारा फैलायी गयी, बेंत पकड़े रहने के कारण अत्यन्त परिपक्व अत एव कठोर कोमल पत्ते-सरीखी हथेलीवाली भुजा को कम्बे हाथ से पकड़े हुए · "

मोपहारेण निरन्तरनिचितम्, उत्कीर्णशालभञ्जिकानिवहेन संनिहितगृहदेवतेनेव गन्धसलिलक्षालितेन कलधौतमयेन स्तम्भसञ्चयेन विराजमानम्, अतिबहलागुरुधूपपरिमलम्, अखिलविगलितजलनिवहधवलजलधरशकलानुकारिणा कुसुमामोदवासितप्रच्छदपटेन पट्टोपधानाध्यासितशिरोधाम्ना मणिमयप्रतिपादुकाप्रतिष्ठितपादेन पार्श्वस्थरत्नपादपीठेन तुहिनशिलातलसदृशशयनेन सनाथीकृतवेदिक भुक्त्वास्थानमण्डपमयासीत्। तत्र च शयने निषण्णः क्षितितलोपविष्टया शनैः शनैरुत्सङ्गनिहिता-

यत्कुट्टिम तत्र गगनतलतारागणेनेवाकाशस्थितनक्षत्रसमूहेनेव कुसुमोपहारेण पुष्पप्रकरेण निरन्तर सर्वकाल निचित व्याप्तम्। स्तम्भेति। स्तम्भा स्थूणास्तेषा सचयेन समुदायेन विराजमान शोभमानम्। स्तम्भसचय विशेषयन्नाह—गन्धेति। गन्धसलिलै सुगन्धिवारिभि क्षालितेन धौतेन। कलधौत सुवर्ण तन्मयेन। अत्र विकारार्थे मयट्। उत्कीर्णेति। उत्कीर्य कृता शालभञ्जिका पुत्रिकास्तासा निवह. समूहो यस्मिन्स तथा। केनेव। सनिहिता समीपस्था गृहदेवता गृहाधिष्ठाय्यो यस्मिन्नेवभूतेनेव। 'गोस्त्रियो —'इति पुवद्भाव। अतीति। अतिबहलोऽतिप्रचुरो योऽगुरु कृष्णागुरुस्तस्य धूपस्य परिमल सौगन्ध्य यस्मिंस्तत्तथा। तुहिनेति। तुहिन हिम तस्य शिलातल तत्सदृश यच्छयन शय्या तेन सनाथीकृता सहिता वेदिका सस्कृतभूमिर्यस्मिंस्तत्तथा। इत शयन विशेषयन्नाह—अखिलेति। अखिल समग्रो विगलितो जलनिवहो नीरसमूहो यस्मिन्नेवभूतो धवल शुभ्रो जलधरो मेघस्तस्य शकलं खण्डस्तमनुकारिणा तत्सादृश्यकरणशीलेन। कुसुमेति। कुसुमाना पुष्पाणामामोद परिमलस्तेन वासितो भावित प्रच्छदपट उत्तरच्छदो यस्मिंस्तत्तथा तेन। पट्टेति। पट्टस्य पट्टदुकूलस्योपधानमुच्छीर्षक तेनाध्यासितमधिष्ठित शिरोधाम शिर स्थल यस्मिंस्तत्तथा तेन। मणीति। मणिमया मणिप्रचुरा प्रतिपादुका अध.पीठानि तेषु प्रतिष्ठिता स्थिता पादा यस्य तत्तथा तेन। पार्श्वेति। पार्श्वस्थ समीपस्थ रत्नपादपीठं मणिपादासन यस्मिंस्तत्तथा तेन। अन्वयस्तु प्रागेवोक्त। तत्रेति। तत्र शयने निषण्ण उपविष्टो राजा मुहूर्तमिव घटिकाद्वयमात्रमिवासाचक्रे सुष्वाप। इतो राजान विशेषयन्नाह—क्षितीति। क्षितितले भूमितल उपविष्टया स्थितया तथोत्सङ्गे क्रोडे

आकाश पर नक्षत्रो सरीखे बिना अन्तर छोडे (पास-पास) बिखरे हुए पुष्पों के उपहार सर्वत्र बिखरे हुए थे, यह कक्ष खोदकर बनायी गयी बहुत-सी पुतलियो के कारण समीपस्थ गृहदेवताओ वाले से प्रतीत होते सुगन्धित जल से धोये गये सोने के बने थम्भों से सुशोभित था, वहाँ अगर के धुएँ की अटल[1] गन्ध विद्यमान थी, और वहाँ, जिसका सारा जल समूह बह गया हो ऐसे श्वेत मेघखण्ड से मिलते जुलते (अर्थात् श्वेत), फूलो की सुगन्ध से सुगन्धित चादरवाले, सिर (रखने) के स्थान पर रेशमी तकिया लगाये हुए, मणिमय चौकियों[2] (प्रतिपादुकाओं) पर रखे हुए पायोवाले, तथा एक ओर (समीप ही) रखे हुए रत्न जटित पीढ़ेवाले, हिमालय पर्वत पर रखी हुई शिला के सदृश (श्वेत तथा बड़े) पलग से युक्त एक मच बना हुआ था। और वहाँ उस पलग पर बैठ गया—उस समय उसके पाँव भूमि पर बैठी हुई, (उस समय) गोदी

१ बहल–दृढ, अटल, प्रबल अधिक उपयुक्त है। २ आधारों पर।

सिलतया खड्गवाहिन्या नवनलिनदलकोमलेन करसपुटेन संवाह्यमानचरणस्तत्कालोचितदर्शनैरवनिपतिभिरमात्यैर्मित्रैश्च सह तास्ताः कथाः कुर्वन्मुहूर्तमिवासाचक्रे। ततो नातिदूरवर्तिनीम् 'अन्तःपुराद्वैशम्पायनमादायागच्छ' इति समुपजाततद्वृत्तान्तप्रश्नकुतूहलो राजा प्रतीहारीमादिदेश। सा क्षितितलनिहितजानुकरतला 'यथाज्ञापयति देवः' इति शिरसि कृत्वाज्ञा यथादिष्टमकरोत्।

अथ मुहूर्तादिव वैशम्पायनः प्रतिहार्या गृहीतपञ्जरः कनकवेत्रलतावलम्बिना

---

निहिता स्थापितासिलता खड्गलता ययैवभूतया खड्गवाहिन्या। नव नूतन यन्नलिन कमल यस्य दलानि पत्राणि तद्वत्कोमलेन मृदुना करसपुटेन हस्तसपुटेन शनै शनै संवाह्यमानौ सचाल्यमानौ चरणौ पादौ यस्य स तथा तेन। तत्काल इति। तत्काले शयनकाले उचित योग्यं दर्शनमालोकन येषामेतादृशैरवनिपतिभिर्नृपैरमात्यै सचिवैर्मित्रै सुहृद्भिस्तास्ता प्रस्तावोचिता कथा वार्ता कुर्वन्विदधत्। तत कथासमाप्त्यनन्तर पूर्वोक्ता प्रतीहारीमित्यादिदेशाज्ञापयामास। कीदृशीम्। नातिदूर नातिव्यवधानेन वर्तते या सा ताम्। आज्ञाविषयमाह—अन्त इति। अन्तपुरादवरोधात्त वैशम्पायन शुकमादायागच्छेति। समुपेति। समुपजात समुत्पन्न तस्य शुकस्य वृत्तान्तप्रश्ने प्रवृत्तिपृच्छाया कुतूहलमाश्चर्यं यस्य स तथेति राज्ञो विशेषणम्। सा प्रतीहारी क्षितितले निहितौ स्थापितौ जानू नलकीलकौ करतले हस्ततले च यया सा। आसनविशेषेण विनयविशेषो व्यज्जित। आज्ञोत्तर तस्या कर्तव्यमाह—यथेति। येन प्रकारेणाज्ञापयत्याज्ञां धत्ते देवो भवानित्यनूद्य शिरसि मस्तक आज्ञा पूर्वोक्ता कृत्वा स्वशिरसि करतल निधायेति भाव। यथेति। येन प्रकारेण राज्ञादिष्टमाज्ञापित तथाकरोच्चकार।

अथेति। अन्त पुरप्रवेशानन्तर मुहूर्तादिव तावन्मात्रविलम्बादिव वैशम्पायन शुको राजान्तिक नृपसमीपमाजगामाययौ। शुक विशिनष्टि—प्रतीति। प्रतीहार्या पूर्वोक्तया

---

में तलवार को रखे हुई, तलवार उठानेवाली सेविका (अपने) अभिनव कमल पत्र सदृश कोमल दोनो हाथों से धीरे धीरे दबा रही थी, उस पलंग पर वह उस समय प्राय: दर्शन प्राप्त करनेवाले राजाओं, मन्त्रियों तथा मित्रों के साथ विविध बातें करता हुआ लगभग एक मुहूर्त (=४८ मिनट तक) बैठा। फिर उस (वैशम्पायन) के इतिहास को पूछने के उत्सुक उस राजा ने बहुत दूर न विद्यमान (समीप ही स्थित) प्रतिहारी को आदेश दिया—'वैशम्पायन को ले आ।' उसने, पृथ्वी पर अपने घुटनो तथा हथेलियों को रखकर 'आपकी जैसी आज्ञा'—कहते हुए (उसकी आज्ञा को) सिर झुकाये हुए स्वीकार किया और जो कुछ उससे कहा गया था वही उसने किया।

तब क्षण भर म ही प्रतिहारी द्वारा लिये हुए पिंजरे वाला वैशम्पायन, राजा के समीप आ गया। (अर्थात् लाया गया) उसके पीछे पीछे सोने की बेत का सहारा लिये

किञ्चिदवनतपूर्वकायेन सितकञ्चुकावच्छन्नवपुषा जराधवलितमौलिना गद्गदस्वरेण मन्दमन्दसचारिणा विहङ्गजातिप्रीत्या जरत्कलहसेनेव कञ्चुकिनानुगम्यमानो राजान्तिकमाजगाम। क्षितितलनिहितकरतलस्तु कञ्चुकी राजानं व्यज्ञापयत्—'देव, देव्यो विज्ञापयन्ति, देवादेशादेष वैशम्पायनः स्नातः कृताहारश्च देवपादमूल प्रतीहार्यानीतः' इत्यभिधाय गते च तस्मिन्राजा वैशम्पायनमपृच्छत्—'कच्चिदभिमतमास्वादितमभ्यन्तः भवता किञ्चिदशनजातम्' ? इति। स प्रत्युवाच—'देव, किं वा नास्वादितम्। आमत्तकोकिललोचनच्छविर्नीलपाटलः कषायमधुरः प्रकाममापीतो जम्बूफलरसः, हरिनख-

---

गृहीतमात्त पञ्जर यस्य स तथा। कञ्चुकिनेति। कञ्चुकिना सौविदल्लकेनानुगम्यमानोऽनुव्रज्यमान। केन। विहङ्गजातिप्रीत्या पक्षित्वजातिस्नेहेन जरत्कलहसेनेव वृद्धराजहसेनेव। अथ कञ्चुकिन विशेषयन्नाह—कनकेति। कनकस्य सुवर्णस्य या वेत्रलता वेतसयष्टिस्तामवलम्बत इत्येवशील स तथा तेन। किञ्चिदिति। किञ्चिदीषदवनत आनम्र पूर्वकायो यस्य स तथा तेन। सितेति। सित श्वेतो य कञ्चुक कूर्पासस्तेनावच्छन्नमाच्छादित वपु शरीर यस्य स तथा तेन। जरेति। जरा विस्रसा तया धवलित शुभ्रीकृतो मौलिर्यस्य स तथा तेन। गदिति। गद्गद शब्दविशेष स्वरो यस्य स तथा तेन। मन्देति। मन्दमन्द शनै शनै. सचरतीत्येवशील स तथा तेन। क्षितीति। क्षितितले निहित स्थापित करतल येनैवविध कञ्चुकी पूर्वोक्तो राजान नृपं व्यज्ञापयद्विज्ञापनामकरोत्। हे देव हे स्वामिन्, देव्यो राजपत्न्यो विज्ञापयन्ति विज्ञप्ति मन्मुखेन कारयन्ति। किं तदाह—देवेति। देवादेशात्स्वामिनो नियोगादेष दृश्यमानो वैशम्पायन शुक पूर्व स्नात कृतस्नान पश्चात्कृताहारो विहिताशन। अथ च देवस्य राज्ञ पादमूल समीप प्रतिहार्यानयानीत। इत्यभिधायेत्युक्त्वा तस्मिन्कञ्चुकिनि गते निवृत्ते सति राजा वैशम्पायनमपृच्छत्। कच्चिदिष्टप्रश्ने। भवता त्वयाभ्यन्तरेऽभिमतमिष्ट किंचिदशनजात भक्ष्यसमूहमास्वादित जग्धम्। स इति। स शुक प्रत्युवाच प्रत्यब्रवीत्। देवेति। हे नाथ, किंवेत्यत्र नञि काकु। तेन सर्वमास्वादितमित्यर्थं। तदेवोत्कर्षतया निरूपयति—प्रकामेति। प्रकाममतिशयेनातृप्तिमर्यादं पीत' पानविषयीकृतो जम्बू सुरभिपत्रा यस्या फलानि सस्यानि तेषा रसोऽन्तर्भूतद्रव। कीदृश। नीलः सन्पाटलः श्वेतरक्त। अतएव आमत्तेति। आमत्तो

---

हुए अपने शरीर के पूर्वभाग को कुछ झुकाए हुआ, श्वेत बडी से अपने को ढके हुआ, बुढापे के कारण श्वेत हुए सिर वाला, लड़खड़ाती आवाज वाला, धीरे-धीरे चल रहा, पक्षी-जाति से ( अपने ) प्रेम के कारण बूढे कलहस सा प्रतीत होता कञ्चुकी चला आ रहा था। पृथ्वी पर अपनी हथेलियों को रखे हुए कञ्चुकी ने राजा को बतलाया—'देव ! रानियाँ कहती है—स्नान तथा भोजन किये हुआ वैशम्पायन आपकी आज्ञा से प्रतीहारी ने आपके चरणों मे पहुँचा दिया है।' और यह कहकर उसके चले जाने पर राजा ने वैशम्पायन से पूछा—"क्या तुमने अन्त.पुर मे अपना कोई अभीष्ट भोजन कर लिया ?" उसने उत्तर दिया—"महाराज ! मैंने क्या कुछ नहीं खाया ! मैंने कुछ कुछ मस्त कोकिल की आँखों के रग का, नील-सा लाल लाल, कसैला मीठा जामुन का रस मन भर पी लिया है, सिंह के

रभिन्नमत्तमातङ्गकुम्भमुक्तरक्तार्द्रमुक्ताफलत्विषि खण्डितानि दाडिमबीजानि, नलिनी-दलहरिन्ति द्राक्षाफलस्वादूनि च चूर्णितानि स्वेच्छया प्राचीनामलकीफलानि। किं वा प्रलपितेन बहुना। सर्वमेव देवीभिः स्वयं करतलोपनीयमानममृतायते, इति। एवं-वादिनो वचनमाक्षिप्य नरपतिरब्रवीत्—'आस्तां तावत्सर्वम्। अपनयतु नः कुतूहलम्। आवेदयतु भवानादितः प्रभृति कात्स्न्र्येनात्मनो जन्म, कस्मिन्देशे, भवान्कथं जातः, केन वा नाम कृतम्, का ते माता, कस्ते पिता, कथं वेदानामागमः, कथं शास्त्राणां परि-

मदोन्मत्तो यः कोकिलः पिकस्तस्य लोचनच्छविरिव छविर्यस्य स तथा। पुनः कीदृक्। कषायो-ऽम्लो मधुरो मिष्टश्चेति कर्मधारयः। अथ च खण्डितानि शकलीकृतानि। मयेति शेषः। कानि दाडिमबीजानि। अथैतानि विशेषयन्नाह—हरीति। हरिः सिंहस्तस्य नखरा नखास्तैर्भिन्ना ये मत्तानां मातङ्गानां कुम्भा मांसपिण्डास्तेभ्यो मुक्तान्यपगतानि यानि रक्तानि रुधिराणि तैरार्द्राणि क्लिन्नानि यानि मुक्ताफलानि तद्वत्त्विट् कान्तिर्येषु तानि। नलिनीति। नलिनी कमलिनी तस्या दलानि पत्राणि तद्वद्धरिन्ति नीलानि। द्राक्षेति। द्राक्षा गोस्तनी तस्याः फलानि तद्वत्स्वादूनि मिष्टान्येवंविधानि प्राचीनामलकी क्षीरधात्री तस्याः फलानि स्वेच्छया स्वाधीनतया चूर्णितानि मर्दितानि। किंवा नास्वादितानीति पूर्वानुषङ्गः। प्रीत्यतिशयस्यावक्तव्यत्वमाह—किं वेति। बहुना प्रलपितेन कथितेन किं वा न किमपीत्यर्थः। सर्वमेवेति। जम्बूरसादिकं देवीभी राजपत्नीभिः स्वयं न परतः करतलोपनीयमानं हस्ततलेनोपनीयमानं मदर्थमानीयमानममृतायते अमृतवदा-चरति। 'उपमानादाचारे' इति क्यच्प्रत्ययेनात्मनेपदम्। इति वाक्यसमाप्तौ। एवं पूर्वोक्तप्रकारेण वादिनो ब्रुवतः कीरस्य वचनं वाक्यमाक्षिप्य तिरस्कृत्यान्यदेव जिज्ञासितुं प्रष्टुं नरपती राजा-ब्रवीत्। पूर्ववक्तव्यतायामनादरमाह—आस्तां तावदिति। सर्वं पूर्वोक्तं तावदादावास्तां तिष्ठतु। नोऽस्माकं कुतूहलमाश्चर्यं पक्षिणः सर्वशास्त्रविषयकं ज्ञानं स्यादित्येवं रूपमपनयतु दूरीकरोतु। तदेव दर्शयति—आवेदयत्विति। कात्स्न्र्येन समग्रत्वेनादितः प्रभृत्युत्पत्तिसमया-दारभ्यावेदयतु कथयतु भवान्। तदेव दर्शयति—आत्मन इत्यादि। कस्मिन्देशे कुत्र जनपदे आत्मनः स्वकीयस्य जन्मोत्पत्तिः। कथं केन प्रकारेण भवांस्त्वं जात उत्पन्नः। केन वा वैशम्पायन इति नामाभिधानं कृतं विहितम्। ते तव का माता जननी। ते कः पिता जनकः। कथं केन

नखों से विदीर्ण मदमस्त हाथी के मस्तक पर से गिरे खून से गीले मोतियों-से दिखायी देते अनार के बीजों को कुतर लिया है, और कमलपत्र सरीखे हरे, अंगूरों सरीखे स्वादवाले (मीठे) 'प्राचीनामल्की' फलों का इच्छानुसार चूरा बनाया है (अर्थात् उनको खूब खा लिया है)। अथवा (इस प्रकार) बहुत सा प्रलाप (व्यर्थ ही) मैं क्यों करूँ? रानियाँ स्वयं अपने हाथों से जो दे देती हैं, वह सभी कुछ अमृत बन जाता है।"—इस प्रकार (इस लहजे में) बोलते हुए वैशम्पायन की बात को बीच में ही काटकर राजा ने कहा—"यह सब तो अभी रहने दो। (पहले) हमारी उत्सुकता को शांत करो। तुम आरंभ से पूरा पूरा बताओ कि तुम्हारा जन्म किस देश में हुआ, कैसे तुम उत्पन्न हुए, किसने तुम्हारा नाम रखा, तुम्हारी मा कौन है, पिता कौन है, वेदों का ज्ञान तुम्हें कैसे हुआ, शास्त्रों को

१. आक्षिप्य = आ + क्षिप् + ल्यप्, क्षिप् = hit

चयः, कुतः कला आसादिताः, किंहेतुक जन्मान्तरानुस्मरणम्, उत वरप्रदानम्, अथवा विहङ्गवेषधारी कश्चिच्छन्न निवससि, क्व वा पूर्वमुषितम्, कियद्वा वयः, कथ पञ्जरबन्धन, कथ चाण्डालहस्तगमनम्, इह वा कथमागमनम्' इति। वैशम्पायनस्तु स्वयमुपजात-कुतूहलेन सबहुमानमवनिपतिना पृष्टो मुहूर्तमिव ध्यात्वा सादरमब्रवीत्—'देव, महतीय कथा। यदि कौतुकमाकर्ण्यताम्—

अस्ति पूर्वापरजलनिधिवेलावनलग्ना मध्यदेशालकारभूता मेखलेव भुवः,

प्रकारेण वेदानामाम्नायानामागम उपलब्धि। कथ शास्त्राणा न्यायमीमासादीना परिचयोऽव-बोध। कुत कस्मात्कला विज्ञानैकदेशा द्वासप्ततिभेदभिन्ना आसादिता अभ्यस्ता। किंहेतुक किंनिमित्तक जन्मान्तरस्य पूर्वजन्मनोऽनुस्मरणमनुभूतार्थज्ञानम्। उताहोस्विद्वरप्रदानम्। यद्वा। केनचिद्वर प्रदत्तो येन जन्मान्तर जानासीति भाव। अथवेति पक्षान्तरे। सिद्ध एव वा कश्चित् कश्चन त्व विहङ्गाना पक्षिणा वेषधारी छन्न गूढ निवससि निवास करोषि। क्व वा कस्मिन्स्थले ऽत्रागमनात्पूर्वमुषित स्थितम्। ते कियद्वार्षिक वय कौमारादि। कथ तेन प्रकारेण पञ्जर पक्षिणा गृह तत्र बन्धनमवस्थानम्। कथ वा चाण्डालहस्तगमनम्। इहास्मिन्प्रदेशे कथ वागमनमिति। तदनन्तर वैशम्पायन। तु पुनरर्थे। उपजात समुत्पन्न कुतूहल यस्यैवभूतेन अवनिपतिना पृथ्वीपतिना सबहुमान सह बहुमानेनादरेण वर्तमान यथा स्यात्तथेति क्रियाविशेष णम्। स्वय नान्तरा पृष्ट आक्षिप्त सन्प्रश्नानन्तर मुहूर्तमिव घटिकाद्वयमिव ध्यात्वा ध्यान कृत्वा सादर आदरेण सह यथा स्यात्तथाब्रवीदुवाच। तत्किम्। हे देव, यत्पृष्ट तद्विषयिणी महती कथेयम्। यदि च किं तदिति तच्छ्रवणे कौतुक तदाकर्ण्यता श्रूयताम्।

अस्तीति। नामेति प्रसिद्धम्। विन्ध्याटव्यस्तीत्यन्वय। इतोऽटवी विशेष-यन्नाह—पूर्वेति। पूर्वश्चापरश्च पूर्वापरौ यौ जलनिधी समुद्रौ तयोर्यद्वेलावन तटकानन तावत्पर्यन्त लग्ना सबद्धा। मध्येति। सह्यहिमालययोर्मध्य मध्यदेशस्तस्यालकारभूता। भूषणरूपेत्यर्थ। अतएव मध्यभूषणरूपत्वाद्भुव पृथिव्या मेखलेव काञ्चीव। पादपैर्वृक्षै-

तुमने कैसे जाना, कलाएँ किससे सीखी, क्या (इन सबका) स्मरण तुम्हें पूर्वजन्म के स्मरण के कारण है[1] अथवा यह (किसी) वर प्रदान के कारण है, अथवा तुम पक्षी का वेश धारण किये हुए कोई छुपे हुए रहते हो, अबतक तुम कहाँ रहे, तुम्हारी आयु कितने वर्ष की है, पिंजरे में बन्धन क्यों हुआ, फिर चाण्डाल के हाथ में क्यो पड़ गये? और यहाँ कैसे आना हुआ? आदि"—तब स्वय उत्सुक हुए राजा द्वारा बहुत आदर पूर्वक पूछा गया वैशम्पायन कुछ देर तक कुछ सोचता सा प्रतीत हुआ और फिर आदरपूर्वक बोला—महाराज यह कथा तो बहुत लम्बी है। यदि आपको उत्सुकता है तो, सुनिए—

विन्ध्याटवी नाम का (एक जगल) है। वह पूर्वी तथा पश्चिमी, दोनों महासागरों के, तटों के जगलो तक फैला हुआ है। मध्यप्रदेश को सुशोभित करता हुआ वह जगल पृथ्वी

१ अन्य जन्म का स्मरण किस कारण से है? अथवा (यह सब—पूर्व जन्म स्मरण) वर-प्रदान ही है?

वनकरिकुलमदजलसेकसवर्धितैरतिविकचधवलकुसुमनिकरमत्युच्चतया तारकागणमिव शिखरप्रदेशसलग्नमुद्वहद्भिः पादपैरुपशोभिता, मदकलकुररकुलदृश्यमानमरिचपल्लवा, करिकलभकरमृदिततमालकिसलयामोदिनी, मधुमदोपरक्तकेरलीकपोलच्छविना सचरद्वनदेवताचरणालक्तकरसरञ्जितेनेव पल्लवचयेन सच्छादिता, शुककुलदलित-दाडिमीफलद्रवार्द्रीकृततलैरतिचपलकपिकम्पितकक्कोलच्युतपल्लवफलशबलैरनवरतनिप-

रुपशोभिता द्योतमाना । अथ पादपान्विशेषयन्नाह—वनेति । वने कानने करिणो गजास्तेषा कुलानि यूथानि तेषा मदजलस्य दानवारिण सेक सिञ्चन तेन सम्यग्वर्धिता वृद्धिं प्राप्तास्तै । अतीति । अतिविकचान्यत्यन्त विकसितानि यानि धवलानि शुभ्राणि कुसुमानि पुष्पाणि तेषा निकर समूहस्तम् । कीदृशम् । अत्यन्तमुच्चतया शिखरप्रदेश प्रान्तदेशस्तत्र सलग्नमत एवोच्चत्वाच्छुभ्रत्वाच्च तारकाणा गणमिव नक्षत्राणा समूहमिवो द्वहद्भिर्धारयद्भि । पुनरटवी विशिनष्टि—मदेति । मदेन कला मनोज्ञा ये कुररा मत्स्याशनास्तेषा कुलानि तैर्दृश्यमाना आस्वाद्यमाना मरिचवृक्षस्य पल्लवा यस्या सा । करीति । करिणा गजाना कलभास्त्रिशदब्दकास्तेषा करा शुण्डादण्डास्तैर्मृदितानि मर्दितानि यानि तमालवृक्षस्य किसलयानि तेषामामोद परिमलो विद्यते यस्यां सा । मध्विति । मधु कापिशायन तस्य यो मद आवेशस्तेनोपरक्ता लोहितैवभूता या केरली केरलदेशोद्भवा स्त्री तस्या कपोलौ गल्लापरप्रदेशौ तयोश्छविरिव छविर्यस्य स तेन । केरलदेशोद्भवा स्त्री स्वभावतो रक्तवर्णा कोमलाङ्गी । मधुमदात्तु विशेषतो रक्तेति भाव । केनेव । सचरन्त्य इतस्ततो गच्छन्त्यो या वनदेवता अरण्याधिष्ठात्र्यस्तासां चरणानां योऽलक्त-करसो यावकद्रवस्तेन रञ्जितेनेव रक्तीकृतेनेव पल्लवाना किसलयानां चयेन समूहेन सछादिताच्छादिता । विराजितेति । लता वल्लयस्तासा मण्डपैर्जनाश्रयैर्विराजितोपशोभ-माना । अथ मण्डपान्विशेषयन्नाह—शुकेति । शुककुलैर्दलितानि विदारितानि यानि

की मेखला ही प्रतीत होता है। वह जगली हाथियों के तरल मद से सिंचित होकर परिपुष्ट तथा वृक्षों की बहुत अधिक ऊँचाई के कारण ( उनकी ) चोटियों पर लगे हुए तारापुञ्ज से प्रतीत होते, पूर्णतया विकसित श्वेत पुष्पों के समूह को ( चोटियों पर ) धारण किये हुए वृक्षों से सुशोभित है। उसमें लगे मिर्च के पौधों के पत्तों को प्रसन्नता से चह चहाते कुरर पक्षी कुतरते हैं। वह गज शिशुओं की सूडों से कुचले गये तमाखू के कोमल पत्तों की गन्ध से युक्त है। वह मद्य के नशे ( के प्रभाव ) से लाल हुए केरलस्त्रियों के गालों के समान रमणीय वर्ण की, उसमे चलती-फिरती परियों के पाँवों मे लगाए हुए अलक्तकरस से रगी-सी प्रतीत होती घनी पत्रावली से ढका हुआ है। वह वनश्री के वासभवनों सरीखे प्रतीत होते लताकुञ्जों से सुशोभित है, उन लताकुञ्जों की तल भूमि अनेक तोतों द्वारा कुतरे अनारों के रस से गीली है, अत्यन्त चञ्चल वानरों द्वारा हिलाये गये कक्कोल वृक्षों से गिरे पत्ते

१ मदकल ।

तितकुसुमरेणुपांसुलैः पथिकजनरचितलवङ्गपल्लवस्रस्तरैरतिकठोरनालिकेरकेतकीकरीर-बकुलपरिगतप्रान्तैस्ताम्बूलीलतावनद्धपूगखण्डमण्डितैर्वनलक्ष्मीवासभुवनैरिव विराजिता लतामण्डपैः, उन्मदमातङ्गकपोलस्थलगलितसलिलसिक्तेनेवानवरतमेलालतावनेन मदगन्धिनान्धकारिता, सिंहनखमुखलग्नेभकुम्भमुक्ताफललुब्धैः शबरसेनापतिभिरभि-हन्यमानकेसरिशता, प्रेताधिपनगरीव सदासन्निहितमृत्युभीषणा महिषाधिष्ठिता च

दाडिमीफलानि तेषां द्रवो रसस्तेनार्द्रीकृतमार्द्रतामुपनीतं तलं मध्यभागो येषां ते तथा ते । अतीति । अतिचपला अत्यन्तं चञ्चला ये कपयो गोलाङ्गूलास्ते कम्पिता धूनिता ये कक्कोला कोशफलवृक्षास्तेभ्यश्च्युतं पतितं पल्लवफलं शबलाः कर्बुरास्ते । अनवर-तेति । अनवरतं निरन्तरं निपतितानि यानि कुसुमानि पुष्पाणि तेषां रेणवः परागधूल-यस्ते पांसुलाः सरजस्कास्तैः । पथिकेति । पथिकजनैः पान्थलोकैः रचितो निर्मितो लवङ्गपल्लवानां लवङ्गवृक्षविशेषकिसलयानां स्रस्तरः प्रस्तरो येषु तैः । अतीति । अतिकठोरा अत्यन्तकठिना नालिकेरा लाङ्गलीवृक्षाः केतक्यः क्रकचच्छदाः करीराः केसराः बकुलाश्च तैः परिगतो व्याप्तः प्रान्तोऽन्त्यप्रदेशो येषां ते तथा तैः । ताम्बूलीति । ताम्बूली नागवल्ली सा चासौ लता चेति कर्मधारयः । तयावनद्धं बद्धं यत्पूगखण्डं क्रमुकवनं तेन मण्डितैः शोभितैः । कैरिव । वनेति । वनलक्ष्मीररण्यश्रीस्तस्या वासस्य वसतेर्भुवनानि गृहास्तैरिव । उन्मदेति । उन्मदा मत्ता ये मातङ्गा गजास्तेषां कपोलस्थलानि करटप्रदेशास्तेषां गलितं च्युतं यत् सलिलं मदजलं तेन सिक्तेनेव सिञ्चितेनेव । अतएव मदगन्धिना मदस्य गन्ध इव गन्धो यस्मिंस्तेतादृशेन । अनवरतं निरन्तरमेलानां चन्द्रवालानां लता वल्लयस्तासां वनं काननं तेनान्धकारिता श्यामीकृता । एलारजःसम्बधाच्छ्यामता प्रापितेत्यर्थः । नखेति । नखानां मुखान्यग्राणि तेषु लग्नान्यासक्तानि यानीभकुम्भमुक्ताफलानि गजमांस-पिण्डरसोद्भवानि तेषु लुब्धैर्लोलुपैः शबराणां भिल्लानां सेनापतिभिः सैन्यनायकैरभिहन्य-मानं व्यापाद्यमानं केसरिणां नखरायुधानां शतं यस्यां सा तथा । प्रेतेति । प्रेताधिपो यमस्तस्य नगरीव संयमिनीव सदा निरन्तरं सर्वदा सन्निहितो निकटवर्ती मृत्युर्यमस्तेन भीषणा भयकारिणी । पक्षे सदा निकटस्थो यो मृत्युरजगरस्तेन भीषणा भयावहा । यद्वा । कारणे कार्योपचारान्मृत्युर्व्याघ्रादयस्तैर्भीषणेत्यर्थः । महिषेति । महिषैर्गवलैर-

तथा फल उनमें बिखरे हुए हैं[1] । वे कुंज लगातार नीचे गिर रहे पुष्पों के पराग से धूलिभरे हैं (अर्थात् इनके नीचे भी भूमि पुष्पों के पराग से ढकी हुई है, (उनके भीतर) यात्रियों द्वारा (सोने के लिये बना लिये गये) लौंग के पत्तों के बिस्तर लगे हुए हैं, उनके प्रान्त भाग–किनारे–सर्वथा प्रौढ नारियल (नालिकेर) के पेड़, केतकी तथा करीर के पौधे और केसर के वृक्षों से घिरे हुए हैं और वे ताम्बूली लताओं से घिरे सुपारी के वृक्षों से सुशोभित हैं । वह जंगल मदमस्त हाथियों के गण्डस्थलों से गिरे मदरस से ही मानो सींचे गये बिना अन्तर छोड़े (उगे हुए), मद की गन्धवाले इलायची के पौधों से अन्धेरा बना रहता है ।

१ शबल —रंगबिरंगे पत्तों और फलों के बिखरे होने के कारण ही लताकुंज रंग बिरंगे थे ।

समरोद्यतपताकिनीव बाणसमारोपितशिलीमुखा विमुक्तसिंहनादा च, कात्यायनीव प्रचलितखड्गभीषणा रक्तचन्दनालङ्कृता च, कर्णीसुतकथेव सन्निहितविपुलाचला शशोपगता च, कल्पान्तप्रदोषसन्ध्येव प्रनृत्तनीलकण्ठा पल्लवारुणा च, अमृतमथनवेलेव

---

धिष्ठिता व्याप्ता च । अथ च यमपुरीपक्षे यमस्य वाहन महिषस्तेनाधिष्ठिता सहिता । समरेति । समरे सग्राम उद्यता या पताकिनी सेना तद्वदिव । उभयो साम्यमाह—बाणेति । बाणाख्ये वृक्षविशेषे समारोपिता स्थापिता शिलीमुखा भ्रमरा यया सा तथा । पक्षे बाणे शरे सम्यक्प्रकारेणारोपिता शिलीमुखा लोहखण्डा यस्यामिति विग्रह । विमुक्तेति । विमुक्तस्त्यक्त अर्थात्केसरिभि सिंहनाद केसरिध्वनिर्यस्या सा तथा । पक्षे सुभटैर्विहित सिंहनाद इव नादो यस्यामिति विग्रह । पुन कीदृशी । कात्यायनी । सिंहयाना तद्वदिव । उभयो साम्यमाह—प्रचलितेति । सेनाप्रकर्षेण प्रचलितो य खड्गो गण्डकस्तेन भीषणा भयावहा । रक्तचन्दन रक्ताङ्ग वृक्षविशेषस्तेनालङ्कृता च भूषिता च । पक्षे प्रचलितो य खड्ग कौक्षेयकस्तेन भीषणा भयजनिका, रक्तमेव चन्दन तेनालङ्कृता च । चर्चितेत्यर्थ । कर्णीसुत कश्चित्क्षत्रियविशेष तस्य कथा वृत्तान्तस्तद्वदिव । उभयोस्तुल्यतामाह—सन्निहितेति । सन्निहितौ समीपवर्तिनौ विपुलाचलौ विपुलाचलसज्ञकौ सखायौ यस्या सा तथा । शशस्तस्य मन्त्रिमुख्यस्ते-नोपगता सहिता च । अतएव कर्णीसुत करटक स्तेयशास्त्रप्रवर्तक । ख्यातो तस्य सखायौ द्वौ विपुलाचलसज्ञकौ । शशो मन्त्रिवरस्तस्य' इति बृहत्कथाया कथा निबद्धा । पक्षे सन्निहिता समीपवर्तिनो विपुला पृथुला अचला पर्वता यस्या सा तथा । शशो मृदुलोमको लोध्रवृक्षो वा । तेनोपगता सहिता च । 'शशो लोध्रे नृभेदे च पशौ' इत्यनेकार्थ । कल्पान्तेति । कल्पान्तस्य

---

उस जगल मे (शेरों के) नाखूनों तथा मुखों मे लगे हस्ति मस्तकों पर के मोतियों के लोभी शबर सेनापतियो द्वारा सैकड़ों शेर मारे जाते है । सदा समीपस्थ मृत्यु के कारण भयङ्कर तथा (जगली) भैंसो के वहाँ रहने से वह जगल सदा समीपस्थ (मृत्यु) यमराज से भीषण बनी हुई तथा यमराज के वाहन, भैंसे, से युक्त प्रेत राजा यमराज की नगरी सा प्रतीत होता है । धनुषों पर बाणों को चढाये हुए एव युद्ध घोष करती हुई युद्ध के लिए तय्यार सेना की भाँति वह जगल बाण (नील झिण्टी) तथा असन नाम के वृक्षो के फूलो की गन्ध से आकृष्ट भौंरो वाला तथा सिंहो की गर्जनाओ से भरा हुआ है । विचरते गैंड़ों से भयानक हुआ तथा लालवृक्षों से सुशोभित वह जगल, चमकती तलवार से भयङ्कर और लालचन्दन से चर्चित पार्वती सा बना हुआ था । (कथा मे वर्णित) 'विपुल' तथा 'अचल' (उसके दो मित्रो के नाम) तथा (उसके मुख्य मत्री) 'शश' के नामो से युक्त 'कर्णीसुत' (एक क्षत्रिय) की कथा की भाँति उस जगल के समीप बडे-बड़े पर्वत होने से तथा खरगोशो से युक्त होने के कारण सनिहित विपुल अचल तथा 'शशोपगत' है । वह जगल नाचते मोरों वाला तथा (लाल) पत्तो से लाल हुआ होने के कारण नाचते महादेव से युक्त तथा (व्यापक अग्निदाह की चमक के कारण लाल हुई) पत्रावली से लाल हुए प्रलयकालीन सन्ध्या के सदृश है । अमृत जिससे मथकर निकाला गया वह अमृत मथन—क्षीर समुद्र—का तट जैसे श्री अर्थात् लक्ष्मी से

श्रीद्रुमोपशोभिता वारुणपरिगता च, प्रावृडिव घनश्यामलानेकशतह्रदालङ्कृता च, चन्द्रमूर्तिरिव सततमृक्षसार्थानुगता हरिणाध्यासिता च, राज्यस्थितिरिव चमरमृग-बालव्यजनोपशोभिता समदगजघटापरिपालिता च, गिरितनयेव स्थाणुसङ्गता मृग-

युगान्तस्य प्रदोषो रजनीमुख तस्य या सन्ध्या सायकालस्तद्वदिव । उभयो सादृश्यमाह—प्रनृत्ता नीलकण्ठा मयूरा यस्या सा तथा । सस्तै पल्लवै किसलयैररुणा चेति । पक्षे प्रनृत्तो नीलकण्ठो महादेवो यस्याम् । पल्लववदरुणा रक्ता चेत्यर्थ । अमृतेति । अमृताय सुधायै यन्मथन विलोडनम् । क्षीरसमुद्रस्येति शेष । तत्र वेलाम्भसो वृद्धि समयो वा । तद्वदिव । उभयो सादृश्यमाह—श्रीति । श्रीद्रुमा श्रीवृक्षास्तैरुपशोभिता वरणाना वृक्षविशेषाणा समूहो वारण तेन परि सामस्त्येन गता प्राप्ता चेत्यर्थ । पक्षे श्रीद्रुमौ लक्ष्मीकल्पद्रुमो ताभ्यामुपशोभिता, वरणस्येद वारण मद्य तेन परिगता सहिता च । समुद्रप्रभवत्वात्तस्येति भाव । प्रावृड्वर्षास्तद्वदिव । उभयो सादृश्यमाह—घनेति । घन निबिड श्यामला । अत्यन्तकृष्णेत्यर्थ । अनेक सख्याका ये ह्रदा ग्रहा (?) तैरलङ्कृता च । पक्षे घनैर्मेघै श्यामला अनेका भिन्नाभिन्नस्वरूपा शतह्रदा जलबालिकास्ताभिरलङ्कृता चेति विग्रह । चन्द्रस्य कुमुदबान्धवस्य मूर्तिरिव । शरीरमिव उभयो साम्यमाह—सततेति । ऋक्षा भल्लूकास्तेषा सार्थ समुदायस्तेनानुगता तथा हरिणैर्मृगैरध्यासिताश्रिता च । पक्षे सतत निरन्तरमृक्षाणि नक्षत्राणि तेषा सार्थ समुदायस्तेनानु गता सहानुयाता हरिणेन मृगेणाध्यासिता च राज्यस्थिती राज्यमर्यादा सेव । उभयो साम्यमाह-चमरेति । चमराश्चमर्य, मृगा हरिणा, बालव्यजनानि चामराणि, तैरुपशोभिता सह मदेन वर्तमाना समदा ये गजा हस्तिनस्तेषा घटा समुदायास्ते परिपालिता यया सा । अथ च तादृशी राज्यस्थितिरित्युभयो साम्यम् । गिरीति । गिरेर्हिमाचलस्य तनया पार्वती तद्वदिव । उभयो सादृश्यमाह—स्थाण्विति । स्थाणव कीलका सङ्गता प्राप्ता यया सा, मृगपतय सिहास्ते

तथा ( पारिजात ) वृक्ष से सुशोभित और वारुणी अर्थात् शराब से युक्त होता है वह जगल भी पत्ती अर्थात् बिल्व तथा अश्वत्थ वृक्षों से और वारुणी[1] अर्थात् दूब से घिरा हुआ है। बादलों से अन्धकारयुक्त बनी हुई तथा बहुत सी विद्युत् दीप्तियों ( काधो ) से सुशोभित वर्षाऋतु की भाति वह जगल भी अत्यन्त काला ( अथवा बादलों से अन्धकारयुक्त ) तथा कई सौ गहरे तालाबों से युक्त है। निरन्तर नक्षत्रो के पुजों ( ऋक्षसार्थ ) से अनुपम तथा हरिण से बसे हुए ( हरिण के चिन्ह से युक्त ) चन्द्रमडल की भाति वह जगल भी निरन्तर ऋक्ष अर्थात् भालुओं की टोलिया मे अनुगम्यमान तथा हरिणो से बसा हुआ है। चमर हरिण के बालो से निर्मित पखे से युक्त अर्थात् चॅवर जिसके एक अग होते हैं ऐसे तथा मदयुक्त हाथियों के समूह से परिरक्षित राजसी ठाटबाट की भाति वह जगल भी चमर हरिण की पखे जैसी बालों वाली पूछो से सुशोभित तथा मदमस्त हाथियो के खेड़ो से भरा हुआ है। स्थाणु अर्थात् महादेव से सयुक्त तथा सिंह द्वारा सेवित पार्वती की भाति वह जगल

१ वारुणी का अर्थ पश्चिम दिशा भी है—जंगल भारत की पश्चिम दिशा तक फैला हुआ था इस कारण पश्चिम दिशा से परिगत था।

पतिसेविता च, जानकीव प्रसूतकुशलवा निशाचरपरिगृहीता च, कामिनीव चन्दन-मृगमदपरिमलवाहिनी रुचिरागुरुतिलकभूषिता च, सोत्कण्ठेव विविधपल्लवानिल-वीजिता समदना च, बालग्रीवेव व्याघ्रनखपङ्क्तिमण्डिता गण्डकाभरणा च,

---

सेविता आश्रिता यया सेति। विग्रहपक्षे स्थाणुर्महादेवस्तेन सङ्गता मिलिता तथा मूर्तिमान्सिहो मृगपतिस्तेन सेविता। सिंहवाहनत्वादिति भाव। **जानकीति**। जानकी सीता तद्वदिव। उभयो साम्यमाह—**प्रसूतेति**। प्रसूता कुशाना दर्भाणा लवा यया सा निशाचरैरुलूकादिभि परिगृहीता स्वीकृता। पक्षे प्रसूतौ जनितौ कुशलवाभिधानौ सुतौ यया सा, निशाचरेण रावणेन परिगृहीता। स्वस्थानं नीतेत्यर्थं। **कामिनीति**। कामिनी श्रृङ्गारनायिका सेव। उभयो सादृश्यमाह—**चन्दनमिति**। चन्दन वृक्षो, मृगमदो गन्धधूली तयो ससर्गाद्य परिमलस्त वहतीति सा तथा रुचिरो योऽगुरुवृक्षस्तथा तिलकवृक्षश्च ताभ्या भूषिता शोभिता चेति। पक्षे चन्दन च मृगमदश्च तयोरनुलेपनवशात्परिमलस्त वहतीत्येवशीला। रुचिरस्य शोभनस्यागुरो काकतुण्डस्य तिलकेन पुड्रेण भूषिता शोभिता चेति विग्रह। **सेति**। प्रियोत्कण्ठया व्रजति या नारी सोत्कण्ठिता तद्वदिव। उभयो सादृश्यमाह—**विविधेति**। विविधा अनेकप्रकारा ये पल्लवास्तेषामनिलो वायुस्तेन वीजिता तथा मदनेन मदनद्रुमेण सह वर्तमाना। सयुक्तेत्यर्थं। पक्षे सह मदनेन कन्दर्पेण वर्तमाना समदना सा। उत्कण्ठिता स्त्र्यपि तथा। **बालेति**। बाला स्तनन्धयास्तेषा ग्रीवा कन्धरा तद्वदिव। उभयोरेकधर्मतामाह—**व्याघ्रेति**। व्याघ्रा शार्दूला नखा सुरभिनख-प्राणिनस्तेषा पङ्क्ति श्रेणी तया मण्डिता शोभिता तथा गण्डका वार्ध्रीणसास्त एवाभरणं यस्या सेति। पक्षे व्याघ्रनखपङ्क्तया मण्डिता। अतएव 'शार्दूलदिव्यनखभूषणभूषिताय नन्दात्मजाय' इति। बालरक्षार्थं व्याघ्रनखा बध्यन्त इति प्रसिद्धि। गण्डस्थलपर्यन्तवर्ति यत्तादृश ग्रीवास्थ भूषण

---

भी वृक्षों के ठूठों (स्थाणुओ) से युक्त और सिंहों से भरा हुआ है। जिसने कुश तथा लव (नाम के अपने दो पुत्रो) को जन्म दिया था तथा जो राक्षस (रावण) द्वारा पकड़ी गयी थी, उस सीता की भाति उस जगल ने भी कुशा काश की मात्राओं को उत्पन्न किया हुआ है तथा रात्रि में विचरण करने वाले पशुओं द्वारा पद दलित रहता है। चन्दन तथा कस्तूरी की सुगन्ध को धारण किये हुई और (मस्तक पर लगाये हुए) आकर्षक अगरू के तिलक से अलकृत सुन्दर स्त्री की भाति वह जगल भी चन्दन तथा केसर की सुगन्ध से सुगन्धित तथा उत्तम अगरू और चन्दन के वृक्षों से शोभायमान रहता है। (असन्तुष्ट) लालसा से परिपूर्ण नारी पर विविध प्रकार के (परो की भाति प्रयुक्त) पत्तों से पखा झल जाता है और वह प्रेम से युक्त होती है—उसी नारी की भाति उस जगल मे भी विविध प्रकार के पत्तों से बहती वायु द्वारा पखा झला जाता है। और वह 'मदन' नाम के वृक्षों से युक्त है। व्याघ्र के नखो के (बने) आभूषणों की पक्ति से सुशोभित और 'गण्डक' आभूषण से युक्त बालक की गर्दन के समान वह जगल भी व्याघ्र क पजो की छाप से मडित और

पानभूमिरिव प्रकटितमधुकोशकशता प्रकीर्णविविधकुसुमा च, क्वचित्प्रलयवेलेव महावराहदंष्ट्रासमुत्खातधरणिमण्डला, क्वचिद्दशमुखनगरीव चटुलवानरवृन्दभज्यमानतुङ्गशालाकुला, क्वचिदचिरनिर्वृत्तविवाहभूमिरिव हरितकुशसमित्कुसुमशमीपलाशशोभिता, क्वचिदुद्वृत्तमृगपतिनादभीतेव कण्टकिता, क्वचिन्मत्तेव कोकिलकुलकल-

---

देशविशेषे गण्डकमिति प्रसिद्धं तदाभरणं यस्यां सा। पानेति। मद्यपानार्थं या भूमि सा पानभूमिस्तद्वदिव। उभयत्र साम्यमाह—प्रकटितेति। प्रकटितमाविष्कृत यन्मधु माक्षिक कोशा एव कोशका पट्टसूत्रस्थानानि तेषा शत यस्या सा। पक्षे प्रकटित मधु मद्य तस्य कोशकानि पानपात्राणि तेषां शत ययेति विग्रह। प्रकीर्णानि पर्यस्तानि विविधानि विचित्राणि कुसुमानि यस्यामित्युभयत्र समानम्। क्वचिदिति। क्वचित्प्रदेशे यदा सर्वं जलमय तदा प्रलयस्तस्य वेलावसरस्तद्वदिव। 'वेला वारादवसर' इति कोश। उभयो सादृश्यमाह—महेति। महावराहा क्रोडास्तेषा दंष्ट्रा दाढास्ताभि समुत्खात सम्यक्प्रकारेण खनित धरणिमण्डल पृथ्वीप्रदेशो यस्या सा तथा। पक्षे महावराहस्य परमेश्वरतृतीयावताररूपस्य दंष्ट्रया समुत्खातमूर्ध्वमानीत धरणिमण्डल यस्यामिति विग्रह। क्वचिदिति। क्वचित्प्रदेशे दशमुखस्य रावणस्य नगरी लङ्का तद्वदिव। उभयत्र साम्यमाह—चटुलेति। चटुलाश्चञ्चला ये वानरा कपयस्तेषा वृन्द समूहस्तेन भज्यमानास्त्रोट्यमानास्तुङ्गा उच्चा शाला शालवृक्षास्तैराकुला व्याकुला। पक्षे कपिवृन्देन भज्यमानास्तुङ्गा या शाला गृहैकदेशास्ताभिराकुला व्यग्रेति विग्रह। क्वचिदिति। क्वचित्प्रदेशेऽचिर तत्काल निर्वृत्तो निष्पन्नो विवाह पाणिपीडन यस्यामेवविधा भूमिस्तद्वदिव। उभयोस्तुल्यतामाह—हरितेति। यथायोग्यमन्वय। हरिता नीला ये कुशा

---

गेड़ों से आभूषित है सैकड़ों मधुपान पात्र जिसमें प्रदर्शित रहते हैं तथा विविध प्रकार के फूल जिससे फैले रहते हैं उस मधुशाला की भाति उस जगल में भी सैकड़ों मधु छत्ते प्रदर्शित रहते हैं तथा नाना प्रकार के फूल बिखरे रहते हैं। कहीं तो वह जगल बड़े बड़े सूअरो द्वारा अपनी दाढ़ों से खोदी हुई भूमि वाला होने से उस प्रलयकाल सा प्रतीत होता है जिसमे (अवतारी) महावराह अपनी दाढ से भूमण्डल को ऊपर उठा लेता है। कहीं-कहीं चञ्चल बन्दरों की भीड़ द्वारा तोड़ी जाती हुई शाखाओं वाले ऊँचे शाल वृक्षों से युक्त वह जगल दसमुँहे रावण की लका नगरी सरीखा दिखायी देता है, लका नगरी भी चञ्चल बन्दरों द्वारा नष्ट किये जाते ऊँचे भवनों के कारण आपत्तिग्रस्त हो गयी थी। उस जगल का कोई-कोई भाग हरी दूब, (होमार्थ) समिधाओं, फूलों और शमीपत्रोसे सुशोभित रहा है—कारण अभी-अभी सम्पन्न हुए विवाह की ऐसी ही वेदी-सा प्रतीत होता है। वह जगल कहीं-कहीं काटों से युक्त होने के कारण ऐसा प्रतीत होता है जैसे कि उद्धत सिंह की गर्जना से डर कर उसके रोंगटे खड़े हो गये हों। कहीं कहीं वह कोयलो की झुडों की कूकू ध्वनि से कोलाहलयुक्त है। अथवा कोयलों की सी मधुर ध्वनि से युक्त हुआ मदमस्त सा प्रतीत

प्रलापिनी, क्वचिदुन्मत्तेव वायुवेगकृततालशब्दा, क्वचिद्विधवेवोन्मुक्ततालपत्रा, क्वचित्समरभूमिरिव शरशतनिचिता, क्वचिदमरपतितनुरिव नेत्रसहस्रसङ्कुला, क्वचिन्नारायणमूर्तिरिव तमालनीला, क्वचित्पार्थरथपताकेव कप्याक्रान्ता, क्वचिदवनिपतिद्वारभूमिरिव वेत्रलताशतदुःप्रवेशा, क्वचिद्विराटनगरीव कीचकशताकुला, क्वचिदम्बर-

---

दर्भा, समिध एधासि, कुसुमानि पुष्पाणि, शमी शिवा, पलाशा ब्रह्मपादपास्तै शोभिता विराजमाना। उद्वाहभूमिरप्येतादृशी स्यादित्युभयो साम्यम्। क्वचिदिति। उद्वृत्तो निर्मर्यादो यो मृगपति सिहस्तस्य नादो गर्जित तेन भीतेव। कण्टको रोमाञ्च सञ्जातोऽस्या इति कण्टकिता। द्वितीयपक्षे कण्टकिता कण्टकयुक्ता। क्वचिदिति। क्वेति पूर्ववत्। मधुना मत्तेव कोकिलाना परभृताना कुलानि तेषा कलशब्दरूप प्रलापो यस्याम्। अथ च 'प्रलापोऽनर्थक वच' क्वचिदिति। उन्मत्तेवोन्मादवातयुक्तेव वायुवेगेन पवनाधिक्येन कृतो विहितस्तालवृक्षै शब्दो यस्या सा। उन्मादवातवानपि ताल शब्द करोतीति लोकप्रसिद्धम्। क्वचिदिति। विधवेव मृतभर्तृकेव। उभयो शब्दसाम्यमाह—उन्मुक्तेति। उन्मुक्तानि त्यक्तानि तालपत्राणि तालदलानि यस्या सा। पक्ष उन्मुक्तानि तालपत्राणि ताडङ्का ययेति विग्रह। क्वचिदिति। समर सङ्ग्रामस्तस्य भूमिरिव। उभयोस्तुल्यतामाह—शरेति। शरा मुञ्जदण्डास्तेषा शत तेन निचिता व्याप्ता पक्षे शरा बाणास्तेषा शतैर्निचितेति विग्रह। क्वचिदिति। अमराणा देवाना पति प्रभुरिन्द्रस्तस्य तनुरिव शरीरमिव। उभयो साम्यमाह—नेत्रेति। नेत्राणा वृक्षविशेषाणा सहस्र तेन सङ्कुला। यद्वा। नेत्राणा जटाना सहस्र तेन सङ्कुला। 'जटाशुकयोर्नेत्रम्' इत्यमर। पक्षे नेत्राणा चक्षुषा सहस्र तेन सङ्कुलेति विग्रह। क्वचिदिति। नारायणस्य कृष्णस्य मूर्तिरिव शरीरमिव। उभयो साम्यमाह—तमालेति। तमालैर्वृक्षविशेषैर्नीला। पक्षे तमालवन्नीला। क्वचिदिति। पार्थोऽर्जुनस्तस्य रथ स्यन्दनस्तस्य पताका

---

होता है। कहीं कहीं इसमें वायु के वेग द्वारा तालवृक्षों का शब्द होता रहता है, इस कारण वह उस पागल सरीखा प्रतीत होता है कि जो वायुवेग अर्थात् उन्माद के वशीभूत होकर (हाथों द्वारा) ताल (दे-देकर) शब्द कर रहा हो। कहीं कहीं वह जगल बिखरे हुए ताल के पत्तोंवाला हुआ उस विधवा सा लगता है जिसने 'तालपत्र' नाम के आभूषण को छोड़ रखा हो। कहीं वह जगल सैकड़ों बाणो से पटी युद्धभूमि है कहीं कहीं वह जगल हजारो 'नेत्र' नाम के वृक्षों से भरा ऐसा प्रतीत होता था कि मानो सहस्रो नेत्रों से युक्त इन्द्र का शरीर हो। कहीं कहीं वह जगल तमालवृक्षों से काला हुआ तमाल वृक्ष सरीखे दरसने मे श्याम रग विष्णु-शरीर के समान दिखायी देता है। वह जगल कहीं कहीं बन्दरों से भरा रहने के कारण कपि (हनुमान) से अधिष्ठित अर्जुनरथ के ध्वज सा प्रतीत होता है। कहीं कहीं (वहाँ उगी हुई) बेंत की सैकड़ों लताओं द्वारा अगम्य बना हुआ वह जगल (अवाछित व्यक्तियों के प्रवेश को रोकने के लिये द्वारपालो द्वारा उठायी हुई) सैकड़ों बेतों द्वारा अगम्य बने हुए राजभवन के आगन के सदृश है। कहीं सैकड़ों बाँसो से भरा वह जगल, सैकड़ों

श्रीरिव व्याधानुगम्यमानतरलतारकमृगा, क्वचिद् गृहीतव्रतेव दर्भचीरजटावल्कलधारिणी, अपरिमितबहलपत्रसञ्चयापि सप्तपर्णोपशोभिता, क्रूरसत्त्वापि मुनिजनसेविता, पुष्पवत्यपि पवित्रा विन्ध्याटवी नाम ।

---

वैजयन्ती सेव । उभयोस्तुल्यतामाह—कपीति । कपिभिर्गोलाङ्गूलैराक्रान्ता । पक्षे कपिचिह्नोपयुक्तेत्यर्थं । क्वचिदिति । अवनिपती राजा तस्य द्वारभूमिरिव । उभयो सादृश्यमाह—वेत्रेति । वेत्राणि वृक्षविशेषा लता वल्लयश्च तासा शत तेन दु प्रवेशा दु खेन प्रवेष्टु शक्या । पक्षे वेत्रलता वेत्रयष्टि सरलत्वाल्लतोपमानम् । ताभिर्दु प्रवेशेत्यर्थं । क्वचिदिति । क्वचित्प्रदेशे विराटराजनगरी तद्वदिव । उभयो साम्यमाह—कीचकेति । कीचका सच्छिद्रवेणवस्तैराकुला । पक्षे कीचकाना स्वप्रियाबान्धवाना शत तेनाकुला व्यग्रा । क्वचिदिति । अम्बरमाकाश तस्य श्रीरिव । उभयसादृश्यमाह—व्याधेति । व्याधैरनुगम्यमानास्तरला भयविह्वलास्तारकमृगा विचित्रमृगा यस्या सा । पक्षे व्याधेनानुगम्यमानस्तरलतारकामृगश्चन्द्रनक्षत्र यस्यामिति विग्रह । महादेवेन व्याघ्ररूपधारिणा हत तस्यार्ध मृगनक्षत्रमिति प्रसिद्धम् । क्वचिदिति । गृहीतेति । गृहीतमात्त व्रत नियमो यया सैरंध्रीव । उभयतुल्यतामाह—दर्भेति । दर्भा कुशा , चीराणि तृणविशेषाणि, जटा शिफा, वल्कलानि चोचानि, एतानि धर्तु शीलमस्या सा तथा । पक्षे दर्भचीराणि पूर्वोक्तानि, जटा सहता कचा । 'शिफाजटे सहतै कचौ' इत्यनेकार्थं । वल्कलानि प्रतीतानि तेषा धारण विद्यते यस्या इति विग्रह । अपरीति । अपरिमितान्यगणितानि बहलानि निबिडानि पत्राणि पर्णानि धारण तेषा सञ्चय समूहो यस्यामेवभूतापि सप्तपर्णोपशोभितेति विरोध । तत्परिहारपक्षे सप्तपर्णोऽयुक्छदस्तेन शोभायमानेत्यर्थं । क्रूरेति । क्रूर सत्त्व मनो यस्या सैवविधापि मुनिजनसेवितेति विरोध । 'सत्त्व द्रव्ये गुणे चित्ते व्यवसायस्वभावयो ' इत्यनेकार्थ. । तत्परिहारपक्षे क्रूरा हिस्रा सत्त्वा प्राणिनो यस्यामिति विग्रह । मुनिजनतपोमाहात्म्यात्क्रूरा अक्रूरता गता इत्यत्र व्यङ्ग्यम् । पुष्पवतीति । पुष्पवत्यार्तववत्यपि पवित्रेति विरोध । तत्परिहारपक्षे पुष्प सून विद्यते यस्यामिति विग्रह ।

---

कीचको ( अर्थात् योद्धाओ ) से भरी विराट नगरी सा प्रतीत होता है। कहीं कहीं वह जगल आकाश की शोभा अथवा सुन्दर आकाश सरीखा है, आकाश मे व्याध नाम के नक्षत्र से अनुगम्यमान टिमटिमाते तारों से युक्त मृगशिरा नाम का नक्षत्र मडल रहता है तो इस जगल मे व्याधों अर्थात् शिकारियों द्वारा पीछे किये गये, तथा इसीलिये ( भय से ) कापती पुतलियों वाले हिरण रहते है। उस जगल में कहीं कहीं कुशा, चीर, रेशेदार जडे तथा छाले हैं—इस कारण वह कुशा घास के बुने हुए चिथड़ो जटाओ तथा छाल के वस्त्रों को पहने हुई तपस्विनी स्त्री सा प्रतीत होता है। वहाँ उस जगल मे यद्यपि अपरिमित घने पत्ते एकत्रित थे, तथा वह सातपत्तो से ही, नहीं नहीं सप्तपद नाम के वृक्षों से सुशोभित था। वह अटवी पुष्पवती-ऋतुमती ( ? ) नहीं नहीं, फूलों से युक्त—थी तो भी पवित्र थी।

तस्यां च दण्डकारण्यान्तःपाति, सकलभुवनविख्यातम्, उत्पत्तिक्षेत्रमिव भगवतो धर्मस्य सुरपतिप्रार्थनापीतसकलसागरजलस्य, मेरुमत्सराद्गगनतलप्रसारितविकटशिरःसहस्रेण दिवसकररथगमनपथमपनेतुमभ्युद्यतेनावगणितसकलसुरवचसा विन्ध्यगिरिणाप्यनुल्लङ्घिताज्ञस्य, जठरानलजीर्णवातापिदानवस्य, सुरासुरमुकुटमकरपत्रकोटिचुम्बितचरणरजसो दक्षिणामुखविशेषकस्य, सुरलोकादेकहुंकारनिपातितनहुषप्रकटप्रभावस्य भगवतो महामुनेरगस्त्यस्य भार्यया लोपामुद्रया स्वयमुपरचितालवालकैः

तस्यां चेति। तस्यां विन्ध्याटव्यामगस्त्यस्य मुनेर्वातापिद्विष आश्रमपदं मुनिस्थानमासीदित्यन्वयः। इत आश्रमविशेषणानि। दण्डकेति। दण्डकारण्यं सह्याद्रिसम्बन्धि काननं तदन्तःपाति। तदन्तर्वर्तीत्यर्थः। सकलेति। सकलानि समग्राणि यानि भुवनानि विष्टपानि तेषु विख्यातं प्रसिद्धम्। उदिति। भगवतो माहात्म्यवतो धर्मस्य श्रेयस उत्पत्तिक्षेत्रमिव प्रभवस्थानमिव। इतो मुनिं विशिनष्टि—सुरेति। सुरपतिरिन्द्रस्तस्य प्रार्थना याचना तया पीतं चुलुकीकृतं सकलसागरस्य समग्रसमुद्रस्य जलं पानीयं येन स तथा तस्य। विन्ध्येति। विन्ध्यगिरिणापि जलबालकाद्रिणाप्यनुल्लङ्घिता नातिक्रान्ताज्ञा शिष्टिर्यस्य स तथा तस्य। अथ विन्ध्यगिरिं विशिनष्टि—मेरुमत्सरादिति। मेरोः सुवर्णाद्रेर्मत्सरान्मात्सर्याद्गगनतलं आकाशतले प्रसारितानि विस्तारितानि विकटानि विपुलानि यानि शिरांसि तेषां सहस्रं येन स तथा तेन। दिवसेति। दिवसकरः सूर्यस्तस्य रथः स्यन्दनस्तस्य या गतिर्गमनं तस्याः पन्थाः। 'ऋक्पूरब्धूः—' इत्यच्। तमपनेतुं दूरीकर्तुमभ्युद्यतेन प्रयतमानेन। अवेति। अवगणितान्यनादृतानि सकलानि समग्राणि सुराणां देवानां वचांसि वाक्यानि येन स तथा तेन। अथ मुनिं विशेषयन्नाह—जठरेति। जठरानलेनोदराग्निना जीर्णोऽन्तस्तिरोहितो वातापिदानवो तेन स तथा तस्य। सुराः देवा असुरा दानवास्तेषां मुकुटाः किरीटानि तेषु मकरपत्रं मकराकारः पक्षः। 'पत्रं वाहनपक्षयोः' इत्यमरः। तस्य कोटिरग्रं तया चुम्बितं गृहीतं चरणरजोऽङ्घ्रिरेणुर्यस्य स तथा तस्य। दक्षिणेति। दक्षिणा अवाची तस्या मुखमाननं तस्मिन्विशेषकस्तिलकं तस्य। 'चित्रपुण्ड्रविशेषकाः'

इस विन्ध्य नाम के जंगल में, दण्डक नामक वन की सीमाओं के भीतर विद्यमान, महर्षि अगस्त्य का आश्रम था। वह आश्रम सारे संसार में प्रसिद्ध था, भगवान् धर्म का तो मानो जन्मस्थान ही था, देवताधिपति इन्द्र की प्रार्थना से समुद्र के सारे जल को पी जाने वाले, मेरु की ईर्ष्या से सारे आकाश में अपनी सहस्रों चोटियों को फैलाये हुए और इस प्रकार सूर्य के रथ के मार्ग को रोक खड़े हुए-से, (ऐसा न करने के) देवताओं के अनुरोध को भी टाल देने वाले विन्ध्य पर्वत द्वारा भी जिसके आदेश का उल्लंघन नहीं किया था, जिसने अपने उदर में स्थित अग्निद्वारा वातापि नाम के राक्षस को पचा लिया था, देवताओं तथा राक्षसों के मुकुटों पर खुदी मत्स्याकृतियों के धातुपत्रों के किनारों द्वारा जिसके पाँवों की धूलि छूई जाती थी, जो दक्षिण प्रदेश (की किसी महिला के) चेहरे का तिलक ही था; और (उसद्वारा) देवलोक से (केवल) एक ही हुंकार में गिराये गये नहुषद्वारा जिसका प्रताप प्रकट हो गया था उस भगवान् महामुनि अगस्त्य की पत्नी लोपामुद्रा ने अपने आप

करवारणस्यावचूलचामरकलाप इवोपलक्ष्यमाणे मञ्जिष्ठारागलोहिते किरणजाले, शनैः-शनैरुदिते भगवति सवितरि पम्पासरःपर्यन्ततरुशिखरसचारिण्यध्यासितगिरिशिखरे दिवसकरजन्मनि हृततारे पुनरिव कपीश्वरे वनमभिपतति बालातपे, स्पष्टे जाते प्रत्यूषसि नचिरादिव दिवसाष्टमभागभाजि स्पष्टभासि भास्वति भूते, प्रयातेषु च यथाभिमतानि दिगन्तराणि शुककुलेषु, कुलायनिलीननिभृतशुकशावकसनाथेऽपि

---

**विजृम्भेति**। श्रोत्रहारिणि कर्णमनोहरे पम्पानाम्न सरस. कलहंसकोलाहले कादम्बकलकले विजृम्भमाणे प्रसृते सति। पुन केषु सत्सु। **समुल्लसतीति**। नर्तिता शिखण्डिनो मयूरा येन तस्मिन्मनोहरे रुचिरे वनगजानामरण्यकरिणा कर्णा एव ताला वाद्यविशेषास्तेषा शब्दो ध्वनिस्तस्मिन्समुल्लसति सति सम्यक्प्रकारेण प्रसरति सति। **क्रमेणेति**। क्रमेण परिपाट्या गगनतलमाकाशमार्गमवतरतोऽधिरोहतो दिवसकरवारणस्य सूर्यगजस्य। **अवचूलेति**। अव-चूलोऽधोमुखकूर्चको यश्चामरकलापस्तस्मिन्निवोपलक्ष्यमाणे दृश्यमाने मञ्जिष्ठस्य वस्तुविशेषस्य रागो रक्तिमा तेन लोहिते रक्तीभूते किरणजाले रश्मिसमूहे सति शनै शनैर्नातिशीघ्रं भगवति माहात्म्यवति सवितरि श्रीसूर्ये उदिते उदय प्राप्ते सति। कीदृशे। **पम्पेति**। पम्पासर पर्यन्तानि यानि तरुशिखराणि तेषु सचारो विद्यते यस्य स तथा तस्मिन्। **अध्येति**। अध्यासितान्या-श्रितानि गिरिशिखराणि पर्वतशृङ्गाणि येन स तस्मिन्। अथ बालातपं विशेषयन्नाह—**दिवसेति**। दिवसकरात्सूर्याज्जन्म यस्य स तथा तस्मिन्। हृता दूरीकृता तारा येन स तथा तस्मिन्। पुनस्तद-नन्तर कपीश्वरे सुग्रीव इव। तरुशिखरचारित्वात्तद्धृततारत्वाच्च तदुपमानम्। त वृक्ष पूर्वोक्तम-भिपतति व्याप्नुवति बालातपे नवीनालोके सति। तथा प्रत्यूषसि प्रभाते स्पष्टे व्यक्ते जाते सति नचिरादिव स्तोककालेनेव दिवसस्याष्टमो भागश्चतुर्घटिकात्मकस्त भजतीति भाक्। ण्विप्रत्ययान्त। तस्मिन्स्पष्टा भा कान्तिर्यस्य स तथा तस्मिन्भास्वति श्रीसूर्ये भूते जाते सति। पुन केषु। शुककुलेषु कीरव्रजेषु यथाभिमतानि यथेप्सितानि दिगन्तराणि दिग्विभागानि प्रयातेषु गतेषु सत्सु। **कुलायेति**। कुलाया नीडानि तेषु निलीना सुप्ता निभृतमत्यन्त शुकशावका.

---

वह क्रमश आकाशस्थ अपने मार्ग पर आगे बढ़ते सूर्यरूपी हस्ती की ( अवचूल अर्थात् ) झूल[1] के काम में आने वाला चँवरियों का समूह हो, जब सूर्य भगवान् धीरे धीरे उदित हो गये, जब पम्पासर के तटवर्ती वृक्षों के शिखरों पर फैली हुई, पर्वतों की चोटियों पर अधिकार जमाये हुई, सूर्य से उत्पन्न तथा नक्षत्रों को अदृश्य किये हुई, प्रातःकालीन धूप वन में आती हुई फिर ऐसी प्रतीत होने लगी कि वृक्षों की चोटियों पर रहने वाला, पर्वत की चोटियों पर बैठा, सूर्य का पुत्र ( बालिद्वारा ) अपहृत तारा ( वधू ) वाला, वानरपति ( सुग्रीव ) ही फिर से वन में आ रहा हो, जब प्रभात और अधिक स्पष्ट हो गया, जब मानों शीघ्र ही दिन के आठवें भाग को पार करके सूर्य चमक उठा, जब तोतों के झुण्ड अपनी अभीष्ट दिशाओं में चले गये, जब घोंसलों में छिपे मौन शुक शावकों वाला भी वह वृक्ष

---

१ अवचूल, ( अवचूड ), सजाने के लिए उठाया हुआ लटकता ढीला कपड़ा।

निःशब्दतया शून्य इव तस्मिन्वनस्पतौ, स्वनीडावस्थित एव ताते मयि च शैशवाद-सजातबलसमुद्भिद्यमानपक्षपुटे पितुः समीपवर्तिनि कोटरगते, सहसैव तस्मिन्महावने सन्त्रासितसकलवनचरः सरभसमुत्पतत्पतत्रिपक्षपुटशब्दसततः भीतकरिपोतचीत्कार-पीवरः प्रचलितलताकुलमत्तालिकुलक्वणितमासलः परिभ्रमदुद्घोणवनवराहरवघर्घरो गिरिगुहासुप्तप्रबुद्धसिंहनिनादोपबृंहितः कम्पयन्निव तरून्भगीरथावतार्यमाणगङ्गाप्रवाह-कलकलबहलो भीतवनदेवताकर्णितो मृगयाकोलाहलध्वनिरुदचरत् । आकर्ण्य च

---

कीरशिशवस्ते सनाथेऽपि सयुक्तेऽपि बालकानामेकाकित्वेन भयवशान्नि शब्दतया तस्मिन्वनस्पतौ शाल्मलीवृक्षे शून्य इव सति । स्वेति । स्वस्य नीड कुलायस्तत्रावस्थित एव ताते पितरि मयि चेति । च पुनरर्थे । मयि पितुर्जनकस्य समीपवर्तिनि निकटवर्तिनि सति । अथ शिशु विशेष-यन्नाह—कोटरेति । कोटरगते निष्कुहस्थिते । शैशवादिति । शैशवाद्बाल्यादसजातमनुत्पन्न यद्बल तेन समुद्भिद्यमान विलीयमान पक्षपुट यस्य स तथा तस्मिन् । विधेयमाह—सह-सैवेति । तस्मिन्पूर्वोक्ते महावने सहसैवाकस्मादेव मृगयाखेटकस्तस्या कोलाहलध्वनि कल-कललक्षण शब्द उदचरदुदतिष्ठत् । अथ ध्वनिं विशेषयन्नाह—संत्रासितेति । सत्रासिता भय प्रापिता सकलवनचरा समग्रारण्यचारिणो येन स तथा । सरभसेति । सरभसेन वेगेन समुत्पतन्तो ये पतत्रिण पक्षिणस्तेषा पक्षपुटानि छदपुटानि तेषा शब्दो निनादस्तेन सम्यक्प्रकारेण ततो विस्तीर्ण । भीतेति । भीतास्त्रस्ता ये करिपोता कलभास्तेषा चीत्कारा शब्दविशेषास्तै पीवर पुष्ट । प्रचलितेति । प्रचलिता कम्पिता या लता वल्लयस्ताभ्याकुला व्याकुला ये मत्तालयो मत्तभ्रमरास्तेषा कुलानि तेषा क्वणितेन शब्दितेन मांसल पुष्ट । परीति । परिभ्रमन्त इतस्तत सचरन्त उद्घोणा उन्नतनासा ये वनवराहा अरण्यशूकरास्तेषा रव शब्दस्तेन घर्घर कठोर । गिरीति । गिरिगुहासु शैलकन्दरासु पूर्वं सुप्ता पश्चात्प्रबुद्धा उत्थिता ये सिंहाः केसरिणस्तेषा यो निनाद शब्दस्तेनोपबृंहितो वृद्धि प्राप्त । पुन किं कुर्वन्निव । तरून्वृक्षान्कम्प-

---

स्तब्धता छा जाने के कारण रिक्त सा ही हो गया, और जब मेरा पिता तो अपने घोसले में ही स्थित था और मैं, जिसमे अत्यन्त शैशव के कारण अभी बल उत्पन्न नहीं हुआ था तथा जिसके पख अभी आ ही रहे थे, अपने पिता के समीप ही, खोह में पड़ा था, तब वहाँ उस बडे जगल मे अचानक ही पशुओं के शिकार का शोर मच गया,—इस शोर ने सभी जगल निवासी जीवों को डरा दिया, शीघ्रता मे उड़े पक्षियों के पखों की फड़फड़ाहट से वह अधिक लम्बा हो गया, डरे हुए हस्ति शावकों की चिंघाड़ों से भारी (अक्षरार्थ मोटा) हो गया, हिली हुई बेलों से क्षुब्ध भौरों की गुजार से बढ गया (अक्षरार्थ मासयुक्त), चक्कर काटते, थूथनियों को ऊपर उठाये जगली सूअरों की घुर घुराहट से कर्णकटु हो गया, पर्वतों की गुफाओं में सोकर जागे हुए शेरों की दहाड़ों से घना हो गया, वृक्षों को मानो हिला ही दिया, वह भगीरथ द्वारा नीचे उतारी जाती हुई गगा की धारा की कलकल ध्वनि के समान शक्तिशाली था और उसको डरी हुई वन देवताओं ने सुना । और उस पहले कभी न सुने—अश्रुतपूर्व—शब्द

तमहमश्रुतपूर्वमुपजातवेपथुरर्भकतया जर्जरितकर्णविवरो भयविह्वलः समीपवर्तिनः पितुः प्रतीकारबुद्धया जराशिथिलपक्षपुटान्तरमविशम् ।

अनन्तरं च सरभसमितो गजयूथपतिलुलितकमलिनीपरिमलः, इतः क्रोडकुलदश्यमानभद्रमुस्तारसामोदः, इतः करिकलभभज्यमानसल्लकीकषायगन्धः, इतो निपतितशुष्कपत्रमर्मरध्वनिः, इतो वनमहिषविषाणकोटिकुलिशभिद्यमानवल्मीकधूलिः,

यन्निव चालयन्निव । भगीति । भगीरथेन राज्ञावतार्यमाणोऽधस्तादानीयमानो यो गङ्गाप्रवाह स्वर्धुनीस्रोतस्तस्य य कलकलस्तद्वद्बहल. प्रभूतः । भीतेति । भीता भय प्राप्ता या वनदेवतास्ताभिराकर्णित श्रवणविषयीकृत । आकर्ण्य चेति । अहमश्रुतपूर्वं त शब्दमाकर्ण्य प्रतीकारबुद्ध्या भयनिवृत्त्युपायधिया समीपवर्तिनो निकटस्थस्य पितुर्जनकस्य जरया विस्रसया यच्छिथिल श्लथ पक्षपुटं तस्यान्तर मध्यमविश प्रविष्टोऽभवम् । कीदृशोऽहम् । उपेति । उपजातवेपथु सजातकम्पोऽर्भकतया बालतया तादृशशब्दश्रवणादेव जर्जरित प्रतिरुद्ध कर्णयो श्रवणयोर्विवरं छिद्र यस्य स तथा ।

अनन्तर चेति । पितु पक्षपुटान्तरप्रवेशानन्तरम् । चकार पूर्वसमुच्चये । कोलाहलमश्रृणवमित्यग्रेतनेन सबन्ध । तदेव दर्शयति—सरभसमित्यादि । इतोऽस्मिन्प्रदेशे सरभस वेगवत्तर गजयूथपतिना लुलिता मर्दिता या कमलिनी तस्या परिमल आमोद. । इत इति पूर्ववत् । क्रोडकुलैररण्यशूकरसमुदायैर्दश्यमाना भक्ष्यमाणा या भद्रमुस्ता गुन्द्रास्तासा रसो द्रवस्तस्यामोद परिमल । इत इति प्राग्वत् । करिणा कलभास्त्रिंशदब्दकास्तैर्भज्यमाना आमर्द्यमाना या सल्लक्यो गजप्रियास्तासा कषाय तुवरो गन्ध । इत इति प्राग्वत् । इत प्रदेशे निपतितानि पर्यस्तानि यानि शुष्कपत्राणि तेषा मर्मरध्वनिर्मर्मर इति शब्द । 'मर्मरी वस्त्रपत्रादे' इति कोश । इत इति । वनमहिषा गवलास्तेषा विषाणानि शृङ्गाणि तेषा कोटिरग्र तदेव कुलिश वज्रम् । अभेद्यत्वात्तदुपमानम् । तेन भिद्यमान छिद्यमान यद्वल्मीक शक्रशिरस्तस्य धूलिः पांसु । इत इति ।

को सुन कर मैं काप गया, अत्यन्त शिशु होने के कारण मेरे कान बहरे हो गये, डर से दु खी हुआ मैं, उस शब्द से अपना बचाव करने के विचार से, अपने समीपस्थ पिता के, बुढापे के कारण ढीले, पखों के भीतर घुस गया।

और इसके पश्चात् वृक्ष-कुञ्जों से अन्तरित शरीर वाले शिकार मे आसक्त हुए मनुष्यों की एक भारी भीड़ द्वारा किया गया वन को कम्पाता हुआ शोर सुना—वे आपस में चिल्लाकर नीचे लिखे शब्द कह रहे थे—"यह देखो, यहाँ[1] किसी गजयूथ के नेता द्वारा रौदे गये कमलों की गन्ध है । यहाँ शूकर यूथों द्वारा चबायी जाती हुई मुस्ता घास के रस की मधुर गन्ध है। यहाँ गज शिशुओं द्वारा तोड़े जाते हुए सल्लकी पौधों के रस की गन्ध आ रही है, यहाँ (पृथ्वी पर) गिरे सूखे पत्तों की सरसराहट (सुनायी देती) है। यहाँ जगली भैंसों के सींगों के अग्रभाग रूपी वज्र (वज्र के समान कठोर विषाण कोटियों) से तोड़ी जा रही

1 इत, 'अस्मिन् प्रदेशे'—इस अर्थ में अव्यय ।

इतो मृगकदम्बकम्, इतो वनगजकुलम्, इतो वनवराहयूथम्, इतो वनमहिषवृन्दम्, इतः शिखण्डिमण्डलविरुतम्, इतः कपिञ्जलकुलकलकूजितम्, इतः कुररकुलक्वणितम्, इतो मृगपतिनखभिद्यमानकुम्भकुञ्जररसितम्, इयमार्द्रपङ्कमलिना वराहपद्धतिः, इयमभिनवशष्पकवलरसश्यामला हरिणरोमन्थफेनसहतिः, इयमुन्मदगन्धगजगण्ड-कण्डूयनपरिमलनिलीनमुखरमधुकरविरुतिः, एषा निपतितरुधिरबिन्दुसिक्तशुष्कपत्र-पाटला रुरुपदवी, एतद्द्विरदचरणमृदितविटपपल्लवपटलम्, एतत्खड्गिकुलक्रीडितम्,

मृगाणा हरिणाना कदम्बक समुदाय । इत इति । वनगजानामरण्यहस्तिना कुल समुदाय । इत इति । वनवराहा वनक्रोडास्तेषा यूथ वृन्दम् । इत इति । वनमहिषाणा वृन्द कुलम् । इत इति । शिखण्डिना मयूराणा मण्डल समूहस्तस्य विरुत कूजितम् । इत इति । कपिञ्जलाना गौरतित्तिराणां कुल समुदायस्तस्य कल मधुर कूजित शब्दितम् । इत इति । कुररो मत्स्यनाशनस्तस्य कुल पुत्रपौत्रादि तस्य क्वणित शब्दितम् । इत इति । मृगपति सिंहस्तस्य नखा पुनर्भवास्तैर्भिद्यमानो विदार्यमाण कुम्भ शिर पिण्डो येषामेवभूता कुञ्जरा हस्तिनस्तेषा रसितमाक्रन्दितम् । इयमिति । इय प्रत्यक्षाद्रोऽशुष्को य पङ्क कर्दमस्तेन मलिना मलीमसा वराहपद्धतिर्वनक्रोडमार्गः । इयमिति । इयमिति पूर्ववत् । अभिनवान्यचिरोत्पन्नानि यानि शष्पाणि बालतृणानि तेषा कवलो गुडस्तस्य रसस्तेन श्यामला मलिनैवविधा हरिणाना मृगाणा यो रोमन्थश्चर्वितचर्वण तस्य फेन कफस्तस्य सहति समूह । इयमिति । उन्मदा मदोन्मत्ता ये गन्धगजा गन्धेभा । सुरभिमदयुक्ता इत्यर्थ । तेषा गण्ड करटस्तस्य कण्डूयनेन कण्डूत्या य परिमल आमोदस्तस्मिन्निलीना आसक्ता मुखरा वाचाला ये मधुकरा भ्रमरास्तेषा विरुति-झंकार । एषा दृश्यमानेत्यर्थ । निपतितेति । निपतिता भूमौ स्रस्ता ये रुधिरबिन्दवो रक्तपृषतास्तै सिक्तानि सिञ्चितानि यानि शुष्कपत्राणि तै पाटला श्वेतरक्ता रुरुपदवी मृगविशेषमार्ग ।

बाम्भियों की धूल ( उड़ रही ) है। यहाँ हिरणों का एक झुण्ड है। यहाँ जगली हाथियों का खेड़ ( परिवार ? ) हैं, यहाँ जगली सूअरों का झुड है। यहाँ जगली भैंसों का समूह है। यहाँ मयूरों के झु ड की केकाध्वनि ( सुन पड़ती ) है। यहाँ कबूतरों के एक झुण्ड की मधुर ध्वनि ( सुन पड़ती ) है। यहाँ कुररीपरिवार की चीत्कार ( सुन पड़ती ) है। यहाँ सिंह के पजे से विदीर्यमाण मस्तक वाले ( किसी ) हाथी की चिंघाड़ ( सुनायी देती ) है। यह गीले कीचड़ से सनी सूअरों की पगडडी है। यह नई नई तथा हरी हरी[1] घास के कौर के रस से काली हुई, हरिणों की जुगाली की झाग का ढेर है। यहाँ यह मदोन्मत्त गन्धगज[2] के कपोलों को खुजाने से उठी गन्ध में ससक्त तथा गु जारते भौरों की 'हुम् हुम्' ध्वनि ( सुनायी देती ) है। यह ( घायल मृग से ) गिरे रक्त की बिन्दुओं से सिंचे ( सने ) सूखे पत्तों के कारण लाल हुई मृगविशेष—रुरु-की पगडंडी है। यह हाथी के पाँवों से रौंदे गये वृक्ष तथा उसके पत्तों का ढेर ( पड़ा ) है। यह वह स्थान है कि जहाँ

१ अभिनव।

२ एक विशेष जाति का गज, जिसकी गन्ध से दूसरे गज भागते हैं।

एष नखकोटिविकटविलिखितपत्रलेखो रुधिरपाटलः करिमौक्तिकदलदन्तुरो मृगपतिमार्गः, एषा प्रत्यग्रप्रसूतवनमृगीगर्भरुधिरलोहिनी भूमिः, इयमटवीवेणिकानुकारिणी पक्षचरस्य यूथपतेर्मदजलमलिना, सचारवीथीचमरीपङ्क्तिरियमनुगम्यताम्, उच्छुष्कमृगकरीषपांसुला त्वरिततरमध्यास्यतामियं वनस्थली, तरुशिखरमारुह्यताम्, आलोक्यतां दिगियम्, आकर्ण्यतामयं शब्दः, गृह्यतां धनुः, अवहितैः स्थीयताम्, विमुच्यन्तां श्वान इत्यन्योन्यमभिवदतो मृगयासक्तस्य महतो जनसमूहस्य तरुगहनान्तरितविग्रहस्य क्षोभितकाननं कोलाहलमश्रृणवम्।

---

एतदिति। एतत्समीपतरवर्ति द्विरदा हस्तिनस्तेषां चरणा पादास्तैर्मृदितं मर्दितं विटपानां वृक्षाणां पल्लवपटलं किसलयसमूहो यस्मिन्नेतादृशं स्थलमित्यर्थः। एतदिति। एतद्दृश्यमानं खड्गिनां वार्ध्रीणसानां कुलं पौत्रादि तस्य क्रीडितं चेष्टितम्। एष इति। एष प्रत्यक्षोपलक्ष्यमाणो मृगपतिमार्गो नखरायुधपन्था। कीदृक्। नखकोटिभिर्नखराग्रैर्विकटा विपुला विलिखिता निर्मिता पत्रलेखा पर्णपङ्क्तिर्यस्मिन्स तथा रुधिरै रक्तैः पाटलः श्वेतरक्तः करिणां गजानां मौक्तिकानि मुक्ताफलानि तेषां दलानि खण्डानि तेन दन्तुरः स्थपुटः। एषेति। प्रत्यग्रप्रसूता नवप्रसविनी या नवमृग्यरण्यहरिणी तस्या गर्भो भ्रूणस्तस्य रुधिरं रक्तं तेन लोहिनी रक्तैषा भूमिः पृथ्वी। इयमिति। इयमटव्यरण्यभूमिर्वेणिकामलकपङ्क्तिमनुकरोतीत्येवंशीला सा तथा। कीदृशी। पक्षचरस्य समुदायचारिणो यूथपतेर्यूथनाथस्य मदजलेन दानवारिणा मलिना श्यामा। अनेन वेण्या साम्यमरण्यस्य सूचितम्। सचारेति। सचारवीथ्या गोचरमार्गे चमर्या गोविशेषस्य पङ्क्तिः परंपरा सा अनुगम्यतामनुव्रज्यताम्। युष्माभिरिति शेषः। उच्छुष्केति। इयं वनस्थली त्वरिततरं वेगवत्तरमध्यास्यतामधिश्रियताम्। कीदृशी। उत्प्राबल्येन शुष्कं वानं यन्मृगकरीषं हरिणच्छगणं तेन पांसुला निन्दिता। तर्विति। तरुशिखरं वृक्षाग्रमारुह्यतामारोहविषयीक्रियताम्। इयमभिमुखा दिगालोक्यतामालोकविषयीक्रियताम्। अयं शब्द आकर्ण्यतां श्रूयताम्। धनुश्चापो गृह्यतां स्वीक्रियताम्। अवहितैः सावधानैः स्थीयतामुपविश्यताम्। श्वानः कौलेयका विमुच्यन्तां प्रस्थाप्यन्तामित्यन्योन्यमिति पूर्वोक्तप्रकारेणान्योन्यं परस्परमभिवदतो

---

गैंडों का कोई दल खेलता रहा था। यह पैने नखाग्र से खिंची पत्रमयी रेखाओं वाला, रक्त से लाल, हाथियों के मोतियों के समूह से ऊँचा नीचा बना[1] शेर का रास्ता है। यह किसी अभी-अभी प्रसूता जगली हरिणी के गर्भ से लाल हुई भूमि है। यह किसी अपने झुंड से भटके (पक्षचरस्य) यूथाधिप हाथी के (बहते) मद रस से काला हुआ उसका वह मार्ग है जो अरण्यानी (रूपा महिला) की वेणी के सदृश है। चमरियों के झुंड का पीछा करो। हरिणों के सूखे गोबर से धूसरित हुए इस वन प्रदेश पर शीघ्र ही अधिकार कर लो, वृक्षों की चोटियों पर चढ जाओ। इस दिशा में देखो। यह शब्द सुनो। अपने धनुष पकड़ लो। सावधान हो जाओ। कुत्तों को खोल दो।"

---

१. जिस पर मोती बिखरे पड़े हैं ऐसा।

अथ नातिचिरादेवानुलेपनार्द्रमृदङ्गध्वनिधीरेण, गिरिविवरविजृम्भितप्रतिनाद-गम्भीरेण शबरशरताडितानां केसरिणां निनादेन सत्रस्तयूथमुक्तानामेकाकिनां च सचरतामनवरतकरास्फोटमिश्रेण जलधररसितानुकारिणा गजयूथपतीनां कण्ठगर्जितेन, सरभससारमेयविलुप्यमानावयवानामालोलतरलतारकाणामेणकानां च करुणकूजितेन, निहतयूथपतीनां वियोगिनीनामनुगतकलभानां च स्थित्वा स्थित्वा समाकर्ण्य कलकल-मुत्कर्णपल्लवानामितस्ततः परिभ्रमन्तीनां प्रत्यग्रपतिविनाशशोकदीर्घेण करिणीनां

---

जल्पतो मृगयासक्तस्याखेटकासक्तस्य महतो महीयसो जनसमूहस्य जनवृन्दस्य तरूणां वृक्षाणां गहन निकुञ्जस्तेनान्तरितो व्यवधानीकृतो विग्रह शरीर यस्य स तथा तस्य क्षोभितकाननमा-न्दोलितारण्य यथा स्यात्तथा कोलाहलं कलकलमश्रृणवमश्रौषम् ।

अथेति । अथेत्यानन्तर्ये । नातिचिरादेव स्वल्पकालेनैव सर्वतोऽभित प्रचलितमिव कम्पितमिव तदरण्यमभवत् । केन । अन्विति । अनुलेपन द्रवद्रव्य तेनार्द्र क्लिन्नो यो मृदङ्गो मुरजस्तस्य ध्वनि शब्दस्तद्वद्धीरेण गम्भीरेण । गिरीति । गिरिविवरेषु पर्वतच्छिद्रेषु विजृम्भित प्रसृतो य प्रतिनाद प्रतिच्छन्दस्तेन गम्भीरेण मन्द्रेण । पुन केन । शबरेति । शबरा भिल्लास्तेषा शरा बाणास्तैस्ताडिताना व्यथिताना केसरिणा सिहाना निनादेन शब्देन । पुन केन । सत्रस्तेति । सत्रस्त चकित यद्यूथ तेन मुक्तानामेकाकिना च सचरता गच्छतामनवरत निरन्तर य करास्फोट. शुण्डाघातस्तेन मिश्र सवलितो जलधरो मेघस्तस्य रसित गर्जित तदनुकारिणा गजयूथपतीना हस्तिसमुदायनाथाना कण्ठगर्जितेन निगरणरसितेन । पुन केन । सरभसेति । सरभस वेगवत्तर सारमेयै श्वभिर्विलुप्यमाना दूरीक्रियमाणा अवयवा अपघना येषा ते तथा तेषामालोलाश्चञ्चला अत एव तरला स्फुटिता तारका कनीनिका येषामेवविधाना-मेणकाणा हरिणाना करुण करुणरसोत्पादक यत्कूजित शब्दित तेन । पुन केन । करिणीना हस्तिनीना चीत्कृतेन चीत्कारशब्देन । कीदृशेन । प्रत्यग्रेति । प्रत्यग्रस्तत्कालीनो य पति विनाशशोकस्तेन दीर्घेणायतेन । हस्तिनी विशेषयन्नाह—इतस्तत इति । इतस्तत समन्तत परिभ्रमन्तीना परिभ्रमण कुर्वन्तीनाम् । उत्कर्णेति । उदूर्ध्वं कर्णपल्लवा यासा तास्तासाम् ।

---

और फिर कुछ ही समय मे वह सारा जगल,—( खाल पर किये गये आटे के ) लेप से गीले तबले की ध्वनि के सदृश गम्भीर, तथा पर्वतों की कन्दराओं में से बढकर आयी प्रतिध्वनि द्वारा और अधिक गम्भीर हुई शबरों के बाणों से बिन्धे शेरों की गर्जना से, डरे हुए ( अपने ) झुण्ड से पृथक् हुए और अकेले भटकते गजयूथो के नेताओं की निरन्तर सूड़ों को फटकारने से मिली मेघगर्जन के समान प्रतीत होती चिंघाड़ से और—बलपूर्वक शिकारी कुत्तों द्वारा काटे जाते अगोंवाले तथा ( परिणामत ) चचल एव सहमी हुई पुत लियों वाले हरिणों के करुण क्रन्दन से, मारे गये अपने स्वामियों वाली वियोगिनी, तथा ( अपने ) किशोर शिशुओं द्वारा अनुगम्यमान, ठहर ठहर कर और शब्द सुनकर ( अपने ) फड़फड़ाते कानो को ऊपर उठातीं, इधर-उधर भटकती हुई हथनियों की ताजे पति विनाश

चीत्कृतेन, कतिपयदिवसप्रसूताना च खड्गिधेनुकाना त्रासपरिभ्रष्टपोतकान्वेषिणीनामुन्मुक्तकण्ठमारसन्तीनामाक्रन्दितेन, तरुशिखरसमुत्पतितानामाकुलाकुलचारिणा च पत्ररथाना कोलाहलेन, रूपानुसारप्रधाविताना च मृगयूथाना युगपदतिरभसपादपाताभिहताया भुवः कम्पमिव जनयता चरणशब्देन, कर्णान्ताकृष्टज्याना च मदकलकुररकामिनीकण्ठकूजितकलशबलितेन शरनिकरवर्षिणा धनुषा निनादेन, पवनाहतिक्वणितधाराणामसीना च कठिनमहिषस्कन्धपीठपातिना

---

किं कृत्वा। स्थित्वा स्थित्वा पूर्वोक्त कलकल समाकर्ण्य श्रुत्वा। **अन्विति**। अनुगताः पश्चाल्लग्ना कलभा यासा तास्तथा तासा वियोगिनीना विप्रलम्भयुक्तानाम्। **निहतेति**। निहता व्यापादिता यूथपतयो यासा तास्तथा तासाम्। पुन केन। आक्रन्दितेन रुदितेन। कासाम्। खड्गिधेनुकाना गण्डकस्त्रीणाम्। किं कुर्वतीनाम्। उन्मुक्तकण्ठ यथा स्यात्तथातिकरुणशब्दमारसन्तीनामारटन्तीनाम्। पुन कीदृशीनाम्। **त्रासेति**। त्रासेन भयेन परिभ्रष्टो नष्टो य पोतक स्तनन्धयस्तदन्वेषिणीना तद्विलोकनशीलानाम्। कतिपयेति। कतिपये कियन्तो ये दिवसा वासरास्तत्र प्रसूत याभिस्तासाम्। पुन केन। पत्रेति। पत्ररथाना पक्षिणा कोलाहलेन कलकलशब्देन। पक्षिणो विशेषयन्नाह—तर्विति। तरुशिखराणि वृक्षप्रान्तानि तेभ्य समुत्पतितानामुड्डीनानाम्। आकुलेति। आकुलाकुल यथा स्यात्तथा चारिणा गामिनाम्। पुन केन। **मृगेति**। मृगा हरिणास्तेषा यूथानि वृन्दानि तेषा चरणशब्देन क्रमणोत्थरवेण। कीदृशानाम्। रूपेति। रूप शक्तिस्तदनुसारेण प्रधाविताना प्रचलितानाम्। कीदृशेन चरणशब्देन। **युगपदिति**। युगपत् एकदैवातिरभस वेगवत्तर पादाना चरणाना पात पतन तेनाभिहताया भुव पृथिव्या। बलवद्द्रव्याघाताभावेन

---

के कारण हुए शोक के कारण लम्बी निकली चीत्कार से, और कुछ ही दिन (पूर्व) प्रसूता, आतक के कारण खोये गये अपने शिशुओ को खोजती फिरती, तथा ऊँचे ऊँचे[1] विलाप करतीं मादा गेंडाओं की करुण पुकार से, वृक्षों की चोटियों पर से उड़े, भारी व्याकुलता में इधर-उधर उड़ते फिरते पक्षियों की चीं चीं से, और पशुओं[2] के पीछे पीछे दौडे शिकारियों के, अत्यन्त वेग (युक्त) पॉवों से ताडित पृथ्वी को कम्पाते हुए शब्द से, कानों तक खींची गयी डोरियों वाले, बाणो की वर्षा करने वाले, नशे में चूर कुररियों के गलों से निकली मधुर ध्वनि से मिश्रित धनुषों की टङ्कार से और भैसे के कठोर कन्धे पर गिरने वाली और वायु की

---

१ उन्मुक्तकण्ठम् अर्थात् गला फाड़-फाडकर।

२ 'रूप मृगेऽपि ज्ञेयम्' इति हलायुध। रूप का अधिक कोई दृश्य आकृति अथवा वस्तु तथा शब्द भी है। ये सभी अर्थ यहाँ लग सकते हैं।

रणितेन, शुनां च सरभसविमुक्तघर्घरध्वनीना वनान्तरव्यापिना ध्वानेन सर्वतः प्रचलितमिव तदरण्यमभवत्। अचिराच्च प्रशान्ते तस्मिन्मृगयाकलकले निर्वृष्टमूकजलधरवृन्दानुकारिणि मथनावसानोपशान्तवारिणि सागर इव स्तिमिततामुपगते कानने मन्दीभूतभयोऽहमुपजातकुतूहलः पितुरुत्सङ्गादीषदिव निष्क्रम्य कोटरस्थ एव शिरोधरा प्रसार्य सत्रासतरलतारकः शैशवात्किमिदमित्युपजातदिदृक्षस्तामेव दिश चक्षुः प्राहिणवम्।

---

कम्पाभावेऽपि कम्पभ्रम इत्याह—**कम्पमिवेति**। जनयतोत्पादयता। पुन केन। धनुषा निनादेन चापशब्देन। धनूषि विशेषयन्नाह—**कर्णेति**। कर्णान्त श्रोत्रपर्यन्तमाकृष्टाकर्षिता ज्या गुणो येषा तानि तथा तेषाम्। **शरेति**। शराणा बाणाना निकर समूहस्त वर्षन्तीत्येवशीलानि यानि धनूषि तेषाम्। चापध्वनि विशेषयन्नाह—**मदेति**। मदेन कला मनोज्ञा या कुररस्य मत्स्यनाशस्य कामिनी स्त्री तस्या कण्ठकूजित तस्य कलो मधुरो ध्वनिस्तेन शबलितेन मिश्रितेन। पुन केन। **असीति**। असीना खड्गाना रणितेन शब्दितेन। असीन्विशेषयन्नाह—**पवनेति**। पवनस्य समीरणस्याहत्याहननेन क्वणिता. शब्दिता धारा येषा ते तथा तेषाम्। **कठिनेति**। कठिन कठोरो यो महिषस्कन्धो लुलायभुजशिर स एव पीठ स्थल तत्र पातिना पतनशीलानाम्। पुन केन। शुना सारमेयाणा वनान्तरव्यापिनारण्यमध्यप्रसरणशीलेन ध्वानेन शब्देन। शुनो विशिनष्टि—**सरभसेति**। सरभस सवेग विमुक्ता घर्घरध्वनयो येस्ते तथा तेषाम्। **अचिराच्चेति**। अचिरात् बहुकालेन प्रशान्ते शान्तिमुपगते मृगयाकलकलशब्दे सागर इव समुद्र इव स्तिमितता निश्चलतामुपगते प्राप्ते काननेऽरण्ये सति। सागर विशेषयन्नाह—**मथनेति**। मथनस्य विलोडनस्यावसान पर्यन्तस्तेनोपशान्त स्वस्वरूपेणावस्थित वारि जल यस्मिन्। **निर्वृष्टेति**। निर्वृष्टा कृतवर्षा मूका स्तनितशून्या ये जलधरा मेघास्तेषा वृन्द तदनुकर्तुं शील यस्य स तस्मिन्। **मन्दीति**। मन्दीभूत मन्दता प्राप्त भय भीतिर्यस्य स तथा। **उपेति**। उपजातमुत्पन्न कुतूहलमाश्चर्यं यस्य सोऽह पितुर्जनकस्योत्सङ्गात्क्रोडादीषदिव निष्क्रम्य किंचिदिवोन्नतो भूत्वा कोटरस्थ एव शिरोधरा ग्रीवा प्रसार्य विस्तार्य सत्रासेन भयेन तरला चञ्चला तारका कनीनिका यस्य स तथा शैशवाद्बाल्यात्किमिदमिति हेतो। तामेव दिश ककुभ प्रति चक्षुर्नेत्र प्राहिणवमप्रैषम्। किमिदमदृष्टपूर्वमित्युपजाता समुत्पन्ना दिदृक्षा द्रष्टु-

---

टकर से बजती धार वाली तलवारो की झणझणाहट से और जोर से घुरघुराते शिकारी कुत्तों के वन के भीतर सभी स्थानो मे व्याप्त शब्द से, वह जगल चारो ओर से मानो हिल ही गया था। शीघ्र ही जब शिकार की वह कल्कल समाप्त हो गयी, और वह जगल, जल बरसाये हुए तथा मौन हुए बादलो के समूह सा तथा मन्थन की समाप्ति पर शान्तजल वाले समुद्र की भाँति प्रशान्त—स्थिर हो गया तब मैंने, जिसका भय तो कम हो गया था और उत्सुकता उत्पन्न हो गयी थी, पिता की गोद से कुछ ही निकल कर, खोह मे बैठे ही बैठे (अपनी) गर्दन को फैलाकर, भय से कापती (अपनी) ऑखों की पुतलियों वाले तथा बचपन के कारण—यह सब क्या है, यह देखना चाहते हुए उस ही ओर दृष्टि पहुँचा दी।

अभिमुखमापतच्च तस्माद्वनान्तरादर्जुनभुजदण्डसहस्रविप्रकीर्णमिव नर्मदाप्रवाहम्, अनिलचलितमिव तमालकाननम्, एकीभूतमिव कालरात्रीणा यामसघातम्, अञ्जनशिलास्तम्भसंभारमिव क्षितिकम्पविघूर्णितम, अन्धकारपुञ्जमिव रविकिरणाकुलितम्, अन्तकपरिवारमिव परिभ्रमन्तम्, अवदारितरसातलोद्भूतमिव दानवलोकम्, अशुभकर्मसमूहमिवैकत्र समागतम्, अनेकदण्डकारण्यवासिमुनिजनशापसार्थमिव सचरन्तम्, अनवरतशरनिकरवर्षिरामनिहतखरदूषणबलनिवहमिव

---

मिच्छा यस्य स ।

अभीति। तस्माद्वनान्तरान्ममाभिमुख समुखमापतदागच्छच्छबरसैन्य भिल्लानीकम्। तदहमद्राक्षमित्यग्रिमेणान्वय । तत्सैन्यं विशेषयन्नाह—अर्जुनेति। सहस्रार्जुनस्य राज्ञो भुजदण्डसहस्र बाहुसहस्र तेन विप्रकीर्णमितस्तत पर्यस्त नर्मदाप्रवाहमिव मेकलाद्रिजास्रोत इव। अनिलवशाद्वायुवशाच्चलितमितस्तत पर्यस्त तमालाना तापिच्छाना कानन वनमिव। एकीभूत मिश्रीभूत कालरात्रीणा तमस्विनीना यामसघातमिव। अञ्जनशिलाना श्यामशिलाना ये स्तम्भा स्थूणास्तेषा सभारमिव व्रातमिव। क्षितीति। क्षितिकम्पेन पृथ्वीप्रचलितेन विघूर्णित मूर्च्छितम्। अन्धकारपुञ्जमिव ध्वान्तपटलमिव। रवीति। रविकिरण सूर्यरश्मिभिराकुलित व्याकुलीभूतम्। अन्तकस्य यमस्य परिवारमिव परिच्छदमिव। किं कुर्वन्तम्। परिभ्रमन्तमितस्तत पर्यटन्तम्। अवेति। अवदारिताद्विदीर्णाद्रसातलादुद्भूतलादुद्भूत प्रकटीभूत दानवलोकमिव दैत्यलोकमिव। अशुभेति। एकत्र समागत मिलितमशुभकर्मण पापप्रकृते समूहमिव सघातमिव। अनेकेति। अनेके च ये दण्डकारण्यवासिमुनिजनास्तेषा शापाना सार्थं समूहमिव। कि कुर्वन्तम्। सचरन्त व्रजन्तम्। अनवरतेति। अनवरत निरन्तर शरनिकर बाणसमूहं वर्षतात्येवशीलो यो रामो दशरथात्मजस्तेन निहतो व्यापादित खरदूषणस्य

---

और मैंने उस वन प्रदेश से अपनी ओर आते हुए एक शबर सैन्य को देखा। यह शबर सैन्य (कृतवीर्य के पुत्र) अर्जुन की सहस्र भुजाओं द्वारा (सहस्रों छोटी छोटी नदियों में) प्रवाहित नर्मदानदी की धारा सरीखा था मानो वायु के बल से हिलाया हुआ तमाल (वृक्षों) का जगल था, मानो प्रलय कालीन रात्रियों का एक स्थान पर ढेर किया हुआ प्रहरों का समूह था, मानो भूकम्प से चक्कर दिलाया हुआ अञ्जन की ईंटों के (बने) थम्भों का एक ढेर था[1] मानो सूर्य की किरणो से सक्षुब्ध (सारे) अन्धकार का पुञ्ज था। वह घूमता फिरता यम (मृत्यु) का परिवार था। मानो पाताल लोक को फोड़कर निकला हुआ दानव ससार था। मानो सारे अशुभ कर्मों का समूह एक स्थान पर आ गया था। मानो दण्डकवन के निवासी अनेक मुनियों के शापों का समूह था जो इधर-उधर घूम रहा था। या रामद्वारा मारी गयी खर एव दूषण की सेना का समूह ही मानो (राम के प्रति)

---

१ 'सम्भार' का अर्थ 'एकत्रित समूह' होना चाहिए। अथवा (पक्तिबद्ध) समूह था।

तदपध्यानात्पिशाचतामुपगतम्, कलिकालबन्धुवर्गमिवैकत्र सगतम्, अवगाहप्रस्थितमिव वनमहिषयूथम्, अचलशिखरस्थितकेसरिकराकृष्टिपतनविशीर्णमिव कालाभ्रपटलम्, अखिलरूपविनाशाय धूमकेतुजालमिव समुद्गतम्, अन्धकारितकाननम्, अनेकसहस्रसख्यम्, अतिभयजनकमुत्पातवेतालव्रातमिव शबरसैन्यमद्राक्षम्।

मध्ये च तस्य महतः शबरसैन्यस्य प्रथमे वयसि वर्तमानम्, अतिकर्कशत्वादायसमयमिव निर्मितम्, एकलव्यमिव जन्मान्तरगतम्, उद्भिद्यमानश्मश्रुराजितया

---

षाताऽलङ्काधिपतेर्बलनिवह सैन्यसमूहस्तमिव। कीदृशम्। तस्मिन्रामचन्द्रेऽपध्यान दुश्चिन्तन तस्मात्पिशाचता भूततामुपगत प्राप्तम्। कलीति। कलिकाल कलियुगस्तस्य बन्धुवर्ग सहचरसमुदायमिव। एकत्रेति। एकत्र एकस्मिन्नेव स्थले सगत मिलितम्। अवेति। अवगाहो मज्जन तदर्थं प्रस्थित वनमहिषयूथमिव गवलवृन्दमिव। अचलेति। अचल पर्वतस्तस्य शिखर शृङ्ग तत्र स्थितो य केसरी महानागस्तस्य करौ हस्तौ ताभ्यामाकृष्टिराकर्षण तस्माद् यत्पतन अधःस्तेन विशीर्ण विशरारुता प्राप्त कालाभ्रपटलमिव मेघमालामिव। अखिलेति। अखिलानां समग्राणा यद्रूप तस्य विनाशाय नाशनाय समुद्गतमुदय प्राप्त धूमकेतुजालमिव केतुसमूहमिव। अन्धेति। अन्धकारित सजातान्धकार कानन येन तादृशम्। अनेकेति। अनेकानि सहस्राणि सख्या यस्य तत्तथा। अतीति। अतिभयमुत्कृष्टभीतिस्तस्य जनकमुत्पादकम्। किमिव। उत्पातोऽजन्यं तस्य वेतालव्रात देवविशेषसमूहमिव। भयोत्पादकमित्यर्थं। अन्वयस्तु प्रागेवोक्त।

मध्ये चेति। तस्य पूर्वव्यावर्णितस्य महत शबरसैन्यस्य भिल्लबलस्य मध्ये मातङ्गनामान शबरसेनापतिमपश्यमद्राक्षमित्यन्वय। तमेव विशेषयन्नाह—प्रथमे इति। अत्र प्राथम्यमापेक्षि

---

दुर्भावना के कारण अब पिशाचों का समूह बनकर वहाँ आ गया था मानो कलियुग के सारे सम्बन्धी ही वहाँ एक स्थान पर इकट्ठे हो गये थे। मानो किसी पर्वत की चोटी पर बैठे हुए सिंह के हाथ की खींच द्वारा गिरने से छिन्न भिन्न हुए काले[1] बादलों का ढेर था। मानो सभी (वन्य) पशुओं के विनाश (की भविष्यवाणी करने) के लिये धूमकेतुओं का समूह प्रकट (उदित) हो गया था। उसने जगल को अन्धेरे से ढक दिया था। उसमें अनेक सहस्र सेनिक थे। वह अत्यन्त भयानक था। और यह अमगल की सूचना देने के लिये आए हुए वेताल समूह के सदृश था।

और उस बहुत बड़ी शबरसेना के बीच में मैंने शबर सेनापति को देखा। वह नवयुवक[2] ही था। उसका शरीर अत्यन्त कठोर होने के कारण मानो फौलाद का बना हुआ था, मानो नये (दूसरे) जन्म मे आया एकलव्य था, उसकी मूछों की रोम पक्ति अभी निकल

---

१ 'काल' शब्द का अर्थ 'काला' किया गया है। प्रलयकालीन अर्थ भी समुचित है।

२ 'प्रथमे वयसि' यहाँ प्राथमिकता वृद्धावस्था की अपेक्षा है अथवा प्रथम का अर्थ प्रमुख भी किया जा सकता है। मनुष्य की प्रथम अवस्था उसकी युवावस्था ही है।

प्रथममदलेखामण्ड्यमानगण्डभित्तिमिव गजयूथपतिकुमारकम्, असितकुवलयश्यामलेन देहप्रभाप्रवाहेण कालिन्दीजलेनेव पूरितारण्यम्, आकुटिलाग्रेण स्कन्धावलम्बिना कुन्तलभारेण केसरिणमिव गजमदमलिनीकृतेन केसरकलापेनोपेतम्, आयतललाटम्, अतितुङ्गघोरघोणम्, उपनीतस्यैककर्णाभरणता भुजगफणमणेरापाटलैरंशुभिरालोहितीकृतेन पर्णशयनाभ्यासाल्लग्नपल्लवरागेणेव, वामपार्श्वेन विराजमानम्, अचिरप्रहतगजकपोलगृहीतेन सप्तच्छदपरिमलवाहिना कृष्णागरुपङ्केनेव सुरभिणा मदेन कृताङ्ग-

---

कम्। तेन वार्धकापेक्षया प्रथम वयस्तत्र वर्तमानम्। अतिकर्कशत्वादतिकठिनत्वादायसमयमिव लोहमयमिव निर्मित रचितम्। कमिव। **एकेति**। एकलव्यो द्रोणाचार्यशिष्य शबरस्तमिव। कीदृशम्। **जन्मेति**। एकस्माज्जन्मनोऽन्यजन्मान्तर तत्र गत प्राप्तम्। **उद्भिति**। उद्भिद्यमानान्युत्पद्यमानानि यानि श्मश्रूणि तेषा राजि पङ्क्तिस्तस्या भावस्तत्ता तया प्रथमाद्या या मदलेखा तया मण्ड्यमानालक्रियमाणा गण्डभित्ति कपोलभित्तिर्यस्यैवभूतो यो गजयूथपतिर्गजनायकस्तस्य कुमारक कलभस्तमिव। **असितेति**। पूरित भृतमरण्य कानन येन स तथा तम्। केन। देहस्य शरीरस्य या प्रभा कान्तिस्तस्य प्रवाहेणौघेन। तमेव विशेषयन्नाह— **असितेति**। असित कृष्ण यत्कुवलय कुवेल तद्वत् श्यामलेन श्यामेन। केनेव। कालिन्दीजलेनेव यमुनाम्भसेव। यमुनाजल नीलम्, शबरदेहप्रभापि तादृशी, अतस्तयो साम्यम्। कमिव। **आकुटिलेति**। आ ईषत्कुटिलमग्र यस्यैवभूतेन स्कन्धावलम्बिना कुन्तलभारेण केशकलापेनोपेत सहित गजाना व्यापादनलक्षणेन तन्मदेन दानवारिणा मलिनीकृतेन केसराणा कलापेन सटाना कलापेनोपेत सहित केसरिणमिव सिंहमिव। **आयतेति**। आयत विस्तीर्ण ललाटमलिकं यस्य स तम्। **अतीति**। अतितुङ्गात्युच्चा घोरा रौद्रा घोणा नासिका यस्य स तम्। **वामेति**। वामपार्श्वेन सव्यपार्श्वेन विराजमान शोभमानम्। तदेव विशेषयन्नाह— **पर्णेष्विति**। पर्णेषु पत्रेषु यच्छयन स्वापस्तत्र योऽभ्यास परिचयस्तेन लग्न पल्लवाना राग आरुण्य यस्मिंस्तथा तेन। अत्रोत्प्रेक्षा—नाय पल्लवैररुण किंस्वेकस्मिन्कर्णे आभरणता

---

ही रही थी, इस कारण वह उस हस्तिराज कुमार सरीखा प्रतीत हो रहा था जिसके (भित्तिसदृश) अर्थात् चौड़े कपोल प्रथम बार ही मदरेखाओं से भूषित किये जा रहे हों नीलकमल के सदृश—श्यामल शरीर काति के प्रभाव से वह मानो जगल को यमुना के जल से भर रहा था। कुछ कुछ टेढ़ हुए सिरो (अग्रभागों) वाले, कन्धे पर लटकते बालो के भार के कारण वह उस सिंह के सदृश प्रतीत होता था जो हाथी के मद से मैली हुई जटाओं के समूह से युक्त हो, उसका मस्तक चौड़ा था, उसकी बहुत ऊँची (उठी हुई) तथा भयानक नाक थी, एक कान का आभूषण बनाये हुई, एक कान पर आभूषण रूप मे पहनी हुई, साँप के फण से ली गयी मणि की लाल लाल सी किरणो से कुछ कुछ लाल रग के हुए अपने वामपार्श्व से सुशोभित वह ऐसा प्रतीत हो रहा था कि मानो पत्तों पर सोने के अभ्यास के कारण ही उस पर (उसके वाम पार्श्व पर) पत्तों का रग लग गया था अभी-अभी मारे गये हाथी के कपोल से लिये गये गेंदे की सुगन्धवाले काले अगरु लेप की भाति सुगन्धित, मद का वह अपने अगों

रागम्, उपरि तत्परिमलान्धेन भ्रमता मायूरातपत्रानुकारिणा मधुकरकुलेन तमालपल्लवेनेव निवारितातपम्, आलोलपल्लवव्याजेन भुजबलनिर्जितया भयप्रयुक्तसेवया विन्ध्याटव्येव करतलेनापमृज्यमानगण्डस्थलस्वेदलेखमापाटलया मृगकुलक्षयरात्रिसंध्यायमानया शोणितार्द्रयेव दृष्ट्या रञ्जयन्तमिवाशाविभागानाम्, जानुलम्बेन, कुञ्जरकरप्रमाणमिव गृहीत्वा निर्मितेन चण्डिकारुधिरबलिप्रदानायासकृन्निशितश-

---

भूषणता उपनीतस्य प्रासस्य भुजगफणमणेरापाटलै श्वेतरक्तै अंशुभि किरणै आलोहितीकृतेन अरुणीकृतेनेव। इव भिन्नक्रम । **अचिरेति**। अचिर तत्काल प्रहतो यो गजस्तस्य कपोलाभ्या गृहीतेन सप्तच्छदानामयुक्छदाना य परिमलो गन्धस्त वहतीत्येवशील स तथा तेन। केनेव। कृष्णागरु काकतुण्डस्तस्य पङ्केनेव कर्दमेनेव सुरभिणा सुगन्धिना मदेन कृतोऽङ्गरागो विलेपन येन स तथा तेन। **उपरीति**। तस्य मदस्य य परिमलो गन्धस्तेनान्धेन विह्वलेनेति हेतु । उपर्युपरिष्टाद्भ्रमता भ्रमण कुर्वता। **मायूरेति**। मायूर मयूरसबन्धि यदातपत्र तदनुकारिणा मधुकरकुलेन भ्रमरसमुदायेन। केनेव। तमालपल्लवेनेव तापिच्छकिसलयेनेव निवारितो दूरीकृत आतप सूर्यालोको यस्य स तथा तम्। **आलोलेति**। आपाटलयेषच्छ्वेतरक्तया दृष्ट्या विन्ध्याटव्या विन्ध्यवनस्थल्या लोलाश्चञ्चला ये पल्लवा किसलयानि तेषा व्याजेन छलेन करतलेन हस्तेनेवापमृज्यमाना गण्डस्थलस्वेदलेखा यस्य तम्। विन्ध्याटवीं विशिनष्टि—**भुजेति**। भुजयोर्यद्बल वीर्यं तेन निर्जितया पराजितया। **भयेति**। भयमातङ्कस्तेन प्रयुक्तारब्धा सेवा यया। दृष्ट्या चक्षुषा। कीदृश्या। **मृगेति**। मृगकुलाना हरिणव्रजाना या क्षयरात्रिर्विनाशयामिनी तस्या सध्यायमानया सायकालवदाचरितया शोणितार्द्रयेव रक्तलिप्तयेव रञ्जयन्त शोभयन्तम्। केषाम्। आशाविभागाना दिग्विभागानाम्। अत्र कर्मणि षष्ठी। **जान्विति**। भुजयोर्युगल बाहुद्वन्द्व तेनोपशोभित विराजमानम्। भुजयुग्म विशेषयन्नाह—**जान्विति**। जानुर्नलकीलस्तत्पर्यन्त यावल्लम्बेनायतेन। महापुरुषलक्षणम्। **कुञ्जरेति**। कुञ्जरो गजस्तस्य करप्रमाण शुण्डापरिमाण गृहीत्वेव निर्मितेन कृतेन। **चण्डिकेति**। चण्डिका काली तस्या रुधिरबलिप्रदानायासकृन्निरन्तर निशितानि तेजितानि यानि शस्त्राणि तेषामुल्लेखो घर्षण तेन

---

पर लेप किये था, कारण कि उसके (मदलिप्त शरीर के) ऊपर, उसकी गन्धसे पागल हुआ मोर पखों की छतरी-सरीखा बना काले भौंरों का समूह मडरा रहा था, इसलिये वह ऐसा प्रतीत हो रहा था कि मानो तमाल के (काले) छतरी बनाये हुए पत्ते से (अपने ऊपर पड़ने वाली) धूप को हटा रहा हो। कान पर लगाये हुए पत्ते के बहाने बाहुबल द्वारा विजित, डर कर सेवा कर रही विन्ध्याटवी ही मानो अपनी हथेली से उसके कपोलों पर की स्वेद पक्ति को पोंछ रही थी। हरिणों के लिये कालरात्रि के सन्ध्या काल-सी बनी, कुछ कुछ लाल (अपनी) दृष्टि से वह मानो रक्त से ही लाल रग में रगी हुई दृष्टि से ही दिशाओं के प्रदेशो को रग रहा था। घुटनों तक लटकतीं, मानो हाथी के सूँड के माप से बनायी गयीं तथा चण्डी देवी को बलि देने के लिये तेज किये गये शस्त्रो द्वारा प्राय पड़ती खरोचों से

स्त्रोल्लेखविषमितशिखरेण भुजयुगलेनोपशोभितम्, अन्तरालग्नाश्यानहरिणरुधिर-विन्दुना स्वेदजलकणिकाचितेन गुञ्जाफलमिश्रैः करिकुम्भमुक्ताफलैरिव रचिताभरणेन विन्ध्यशिलाविशालेन चक्षुःस्थलेनोद्भासमानम्, अविरतश्रमाभ्यासादुल्लिखितोदरम्, इभमदमलिनमालानस्तम्भयुगलमुपहसन्तमिवोरुदण्डद्वयेन, लाक्षालोहितकौशेय-परिधानम्, अकारणेऽपि क्रूरतया बद्धत्रिपताकाभ्रुकुटिकराले ललाटफलके प्रबल-

विषमित स्थपुट शिखर भुजाग्र यस्य स तथा तेन। चक्षुरिति। चक्षु स्थलेन नेत्रस्थानेनोत्प्रा-बल्येन भासमान शोभमानम्। चक्षु स्थल विशिनष्टि—लग्नेति। अन्तरा मध्ये लग्नाश्याना शुष्का हरिणस्य मृगस्य यद्रुधिर रक्त तस्य बिन्दवो यस्मिन् तेन। स्वेदेति। स्वेदजल प्रस्वेद-वारि तस्य कणिका क्षुद्ररज कणिकास्ताभिराचितेन व्याप्तेन। रक्तश्वेतद्वयोपमानमाह—गुञ्जेति। रचित विरचितमाभरण भूषण यस्य तत्तथा तेन। कै। करिकुम्भमुक्ताफलैरिव हस्तिशिर पिण्डरसोद्भवैरिव। कीदृशै। गुञ्जाफलानि प्रसिद्धानि तैर्मिश्रै. सयुक्तै। विन्ध्येति। विन्ध्यपर्वतस्य जलबालकाद्रेर्वा शिला तद्वद्विशालेन विस्तीर्णेन। अविरतेति। अविरत निरन्तर शक्त्यतिशयार्थं श्रमस्तत्राभ्यास पुन पुन करण तस्मादुल्लिखित चिह्नितमुदर यस्य स तम्। इभेति। ऊर्वोर्यद्दण्डद्वयं तेनेभो गजस्तस्य मदो दानवारि तेन मलिन श्याममालान गजबन्धन स्तम्भस्तयोर्युगल द्वन्द्वमुपहसन्तमिव तिरस्कुर्वन्तमिव। लाक्षेति। लाक्षया जतुना लोहित रक्तीकृत यत्कौशेय कृमिकोशोत्थ तदेव परिधानमधोंशुक यस्य स तथा तम्। अकारणेति। अकारणेऽपि क्रोधाभावेऽपि क्रूरतया दुष्टतया बद्धा त्रिपताका त्रिवलिर्ययवभूता या भ्रुकुटि भ्रूकुटिस्तया कृत्वा कराले विकराले ललाटफलकेऽलिकपट्टे प्रबलभक्त्याराधितयोत्कृष्टभक्तिवशी-कृतया कात्यायन्या भवान्या मत्परिग्रहोऽयमिति मदीयोऽमिति त्रिशूलेन शस्त्रविशेषेणाङ्कितमिव चिह्नितमिव। श्वभिरिति। श्वभि. श्वानैरनुगम्यमानमनुव्रज्यमानम्। शुनो विशेषयन्नाह—

खुरदरे हुए अग्रभागों वाली दो बाहुओं से वह भव्य प्रतीत हो रहा था। विंध्य पर्वत शिला के तल के समान सुविस्तृत, जहाँ-तहाँ[1] (अर्थात् स्थान स्थान पर) लगे (और अब) थक्का बने हुए हरिणरक्त की बिन्दुओं से युक्त तथा पसीने की बूंदों से ढके (अपने) वक्षस्थल द्वारा वह ऐसा आकर्षक लग रहा था कि मानो उसने (बीच बीच में) रत्तियाँ मिले हुए, हस्तिमस्तक पर के मोतियों को अपना आभूषण बनाया हुआ था। निरन्तर किये गये (शारीरिक) श्रम द्वारा उसका मध्यभाग पतला हो गया था। वह अपनी दो लम्बी जघाओं से, मद से मलिन स्तम्भों का मानो उपहास कर रहा था, लाख से रंगी लाल पोशाक पहने हुआ था। किसी विशेष कारण के न होने पर भी, केवल अपने स्वभाव की क्रूरता ही के कारण, एक त्रिशाखी (पताका-जैसी) आकृति को धारण किये हुई ऊपर की चढ़ी हुई भौहों की कुटिलतासे भयङ्कर दिखायी देते उस के विशाल मस्तक पर मानो दुर्गा ने यह दिखाने के लिये कि यह मेरी सम्पत्ति है, त्रिशूल का चिन्ह बना दिया था। विविधरंगों के, उससे

१. बीच बीच में।

भक्त्याराधितया मत्परिग्रहोऽयमिति कात्यायन्या त्रिशूलेनेवाङ्कितम्, उपजातपरिचयैरनुगच्छद्भिः, श्रमवशाद्दूरविनिर्गताभिः स्वभावपाटलतया शुष्काभिरपि हरिणशोणितमिव क्षरन्तीभिर्जिह्वाभिरावेद्यमानखेदैर्विवृतमुखतया स्पष्टदृष्टदन्तांशुन्दंष्ट्रान्तरालल्नकेसरिसटानिव सृक्कभागानुद्वहद्भिः स्थूलवराटकमालिकापरिगतकण्ठैर्महावराहदंष्ट्राप्रहारजर्जरैरल्पकायैरपि महाशक्तित्वादनुपजातकेसरैरिव केसरिकिशोरकैर्मृगवधूवैधव्यदीक्षादानदक्षैरनेकवर्णैः अभिरतिप्रमाणाभिश्च केसरिणामभयप्रदान-

---

उपेति। उपजात समुत्पन्न परिचय सागत्य यैस्ते तथा तै। अन्विति। अनु पश्चात् गच्छद्भि गामिभि। आवेद्येति। आवेद्यमानोऽन्येभ्यो ज्ञाप्यमान खेदो विषण्णता यै। काभि जिह्वाभी रसनाभि। एता विशिनष्टि—श्रमेति। श्रमवशात्खेदमाहात्म्यान्मुखाद्दूर विनिर्गताभिर्नि सृताभि। स्वभावेति। स्वभावो जातिस्वभावस्तेन पाटलतया श्वेतरक्ततया शुष्काभिरपि निर्लेपाभिरपि हरिणशोणित मृगरुधिर क्षरन्तीभिरिव स्रवन्तीभिरिव। किं कुर्वद्भिस्तै। विवृतेति। विवृत विदीर्णं यन्मुख तस्य भावस्तत्ता तया सृक्कभागानोष्ठप्रान्तदेशान्। 'दन्तवस्त्र च तत्प्रान्तौ सृक्कणी' इति कोश.। उद्वहद्भिरुत्प्राबल्येन वहमानै। तान्विशेषयन्नाह—स्पष्टमिति। स्पष्ट प्रकट दृष्टा अवलोकिता दन्तांशवो दशनत्विषो येषु ते तथा तान्। कामिव। दंष्ट्रान्तराले दाढामध्ये लग्ना या केसरिसटा सिंहस्कन्धकेसरा तामिव। स्थूलेति। स्थूला स्थविष्ठा ये वराटका कपर्दकास्तेषा मालिका मालास्ताभि परिगत सहित कण्ठो येषा ते तथा तै। महेति। महावराहा वनक्रोडास्तेषा दंष्ट्रा दाढास्तासा प्रहारा अभिघातास्तर्जर्जरै शिथिलाङ्गै। अल्पेति। अल्पकायैः स्वल्पशरीरैरपि महाशक्तित्वात्प्रौढपराक्रमत्वादनुपजात केसरैरनुत्पन्नसटै केसरिकिशोरकैरिव सिंहशावकैरिव। मृगेति। मृगवधूना हरिणपत्नीना यद्वैधव्यदीक्षादान विगतभर्तृकात्वव्रतदान तत्र दक्षैर्निपुणै। अनेकेति। अनेके बहवो वर्णा रक्तपीतादयो येषु ते तथा तै। पुन काभि। अतीति। अतिप्रमाणाभि प्रचण्डाभि केसरिणा सिंहानामभयप्रदान जीवरक्षण तस्य याचना प्रार्थना तदर्थमागताभि प्राप्ताभि

---

सर्वथा परिचित ( हिले हुए ), और उसके ठीक पीछे-पीछे लगे हुए कुत्ते उसके पीछे चले आ रहे थे, उन कुत्तों की थकावट के कारण दूर तक ( लम्बी ) निकली हुई तथा सूखी परन्तु ( अपनी ) प्राकृतिक लालिमा के कारण हरिण रक्त को चुवाती सी प्रतीत होतीं उनकी जिह्वाओं से खेद प्रकट हो रहा था, उन कुत्तों के मुख पूरे खुले हुए होने के कारण उनके दान्तों की किरणें उनके होठों के कानों पर पड़ी स्पष्ट दिखायी देतीं ऐसी लग रही थीं कि मानो वे दाढ़ो की दरारों मे फँसे सिंह के अयालो के बाल हों, उन कुत्तों की गर्दनें मोटी मोटी कौड़ियों की मालाओं से घिरी हुई थीं, वे बड़े सूअरों के दान्तों की मार से जर्जर हो गये थे, वे अल्प काय थे तो भी अपने भारी बल के कारण अनुत्पन्न जटाओं वाले सिंह-शावकों-सरीखे लग रहे थे, वे हरिणों की वधुओं को वैधव्य प्रदान करने मे चतुर थे, उस शबर सेनापति के पीछे, बहुत अधिक बड़ी बड़ी और ( इस कारण अपने पतियों ) सिंहों के लिये अभय

याचनार्थमागताभि' सिंहीभिरिव कौलेयककुटुम्बिनीभिरनुगम्यमानम्, कैश्चिद् गृहीतचमरबालगजदन्तभारैः कैश्चिदच्छिद्रपर्णबद्धमधुपुटैः कैश्चिन्मृगपतिभिरिव गजकुम्भमुक्ताफलनिकरसनाथपाणिभिः कैश्चिद्यातुधानैरिव गृहीतपिशितभारैः कैश्चित्प्रमथैरिव केसरिकृत्तिधारिभिः कैश्चित्क्षपणकैरिव मयूरपिच्छधारिभिः कैश्चिच्छिशुभिरिव काकपक्षधरैः कैश्चित्कृष्णचरितमिव दर्शयद्भिः समुत्खातविधृतगजदन्तैः

---

सिंहीभिरिव कौलेयककुटुम्बिनीभि श्वानपत्नीभिश्च सहेति भाव'। शबरेति। शबरवृन्दैभिल्लसमूहै परिवृतमावेष्टितम्। कीदृशै। कैश्चिदिति। गृहीता स्वीकृताश्चमराणा गवयानां बाला केशा गजाना दन्ताश्च तेषा भार समूहो यैस्ते तथा तै। कैश्चिदिति। अच्छिद्रपर्णैर्निबिडपत्रैर्बद्धानि मधुन पुटानि यैस्ते तथा तै.। कैश्चिदिति। मृगपतिभिरिव सिंहैरिव गजाना हस्तिना कुम्भा शिर'पिण्डा तेषा मुक्ताफलानि मौक्तिकानि तेषा निकर समूहस्तेन सनाथ सहित पाणिर्येषा ते तथा तैरित्यभङ्गश्लेष। कैश्चिदिति। यातुधानैरिव राक्षसैरिव गृहीत पिशितस्य मासस्य भारो यैस्ते तथा तै। अत्राप्यभङ्गश्लेष। कैश्चिदिति। प्रमथैरिव पार्षदैरिव केसरिणा सिंहाना कृत्तयश्चर्माणि धरन्तीत्येवशीलैस्तद्धारिभि। कैश्चिदिति। क्षपणकैरिव दिगम्बरैरिव मयूराणा बर्हिणा पिच्छानि छदानि धरन्तीत्येवशीला धारिणस्तै। भिल्ला अपि हतमयूरपिच्छधारिणो भवन्तीति श्लेष। कैश्चिदिति। शिशुभिरिव बालकैरिव काकपक्ष शिखण्डकस्तद्धारिभि। भिल्लपक्षे काकाना नक्तप्रजाना पक्षाश्छदास्तद्धारिभि। कैश्चिदिति। कृष्णचरित विष्णुविजृम्भित दर्शयद्भि प्रकाशयद्भिरिव पूर्वं समुत्खाता सम्यक्प्रकारेणोत्पाटिता पश्चाद्विशेषेण धृता गजदन्ता यैस्ते तथा ते। कृष्णेनापि बाल्ये गजहननक्षण इत्थमेवाचरितमिति साम्यम्। कैश्चिदिति। जलदस्य मेघस्यागमो येष्वेत्वंविधैर्दिवसैर्वासरैरिव जलधरो मेघस्तस्य छायातपाभावस्तद्वन्मलिनानि कश्मलान्यम्बराणि वस्त्राणि येषा ते तथा तै। पक्षे जलधरच्छायया मलिनमम्बर व्योम येष्विति विग्रह। अनेकेति। अनेके बहवो वृत्तान्ता

---

अर्थात् दया की प्रार्थना करने आयीं सिंहनियाँ सरीखी प्रतीत होती कुतियाँ, आ रही थीं। वह शबर समूहों (शबर सैनिकों) से घिरा हुआ था—जो विविध कार्यों मे व्यस्त थे, किन्हीं ने चमर (हरिण) के बालों और हाथियों के दान्तों के भार उठाये हुए थे; कुछ ने छिद्र रहित पत्तों मे मधु के छत्ते बाधे हुए थे, कुछ के हाथ हस्तियों के मस्तक पर के मोतियों के गुच्छों से युक्त थे—इस कारण वे मानो सिंह ही थे, कुछ ने राक्षसो की भाँति मास के भारी बोझ उठाये हुए थे, कुछ ने शेरों की खालें धारण की हुई थीं, मानो कि वे शिवजी के गण ही हों, कुछ मोर पख धारण किये हुए थे—मानो कि वे क्षपणक सन्यासी ही हों, कुछ कौओं के पख उठाये हुए थे—मानो कि वे कौओं के परों की आकृति के बाल बनाये बालक थे, कुछ (हाथियों के) दान्त उखाड़ कर धारण किये हुए थे और इस प्रकार वे मानो कृष्णजी के व्यवहार को प्रदर्शित कर रहे थे—(कृष्ण जी ने अपने शत्रु कस द्वारा बन्धनमुक्त कुवलयपीड नाम के हस्ती का दाँत उखाड़ कर एक शस्त्र की भाँति उसको

कैश्चिज्जलदागमदिवसैरिव जलधरच्छायामलिनाम्बरैरनेकवृत्तान्तैः शबरवृन्दैः परिवृतम्, अरण्यमिव सखड्गधेनुकम्, अभिनवजलधरमिव मयूरपिच्छचित्रचापधारिणम्, बकराक्षसमिव गृहीतैकचक्रम्, अरुणानुजमिवोद्धृतानेकमहानागदशनम्, भीष्ममिव शिखण्डिशत्रुम्, निदाघदिवसमिव सततार्विर्भूतमृगतृष्णम्, विद्याधरमिव मानसवेगम्, पाराशरमिव योजनगन्धानुसारिणम्, घटोत्कचमिव

---

अरित्राणि येषा ते तथा तै । अरण्येति । अरण्य वन तद्वदिव । उभयो सादृश्यमाह—सखड्गेति । खड्ग कौक्षेयको धेनुका कृपाणिका ताभ्या सह वर्तमानम् । पक्षे खड्गो वार्ध्रीणसो धेनुका वशा ताभ्या युक्तमित्यर्थं । अभीति । अभिनव प्रत्यग्रो यो जलधरो मेघस्तमिव मयूराणा पिच्छानि तद्वच्चित्र विविधवर्णधारि यच्चाप धनुस्तद्धत्त इत्येवशील स तथा तम् । पक्षे मयूरपिच्छवच्चित्र चापमिन्द्रधनुस्तद्धारिणम् । बकेति । बकाभिधानो राक्षसो यातुधानस्तद्वदिव । उभयो साम्यमाह—गृहीतेति । गृहीत धृतमेकमद्वितीय चक्र येन स तम् । पक्षे गृहीता स्वायत्तीकृतैकचक्राभिधाना पुरी येनेति विग्रह । अरुणेति । अरुणानुजो गरुडस्तद्वदिव । उभयोरैक्य प्रदर्शयन्नाह—उद्धृतेति । उद्धृता उत्पाटिता अनेकेषा महानागाना बहुमहाहस्तिना दशना दन्ता येन स तथा तम् । पक्ष उद्धृता मुखान्निष्कासिता अनेकमहानागानां दशना दन्ता येनेति विग्रह । भीष्मेति । भीष्मो गाङ्गेयस्तमिव । उभयो सादृश्यमाह—शिखण्डीति । शिखण्डिनो बर्हिणस्तेषा शत्रुम् । तद्वधकारित्वात् । पक्षे शिखण्डी पाण्डवपक्षीयो वर्षवरस्तस्य शत्रु विपक्षम् । निदाघेति । निदाघो ग्रीष्मकालस्तस्य दिवसमिव

---

धारण किया था ), कुछ ने बादलों के रग-सरीखी काली पोशाकें पहनी हुई थी और उसमे वे वर्षा ऋतु के उन दिवसों की भाँति लग रहे थे कि जिनमे आकाश बादलों के रग से काला हो जाता है। खड्गधेनुका—एक छोटी तलवार सहित वह शबर सेनापति, खड्गधेनुका अर्थात् मादा गैडों से भरे अरण्य के समान था, मयूर की पूँछसे युक्त धनुष को धारण किये हुए वह मयूरपिच्छ की भाँति बहुरगी तथा इन्द्रधनुष को धारण ( प्रदर्शित ) करते नये बादल सरीखा था। ( शस्त्ररूप मे ) एक चक्र को लिये हुआ वह, एकचक्र नाम के नगर के विजेता बकराक्षस सरीखा था। अनेक बड़े-बड़े हाथियों के दाँतों को उखाड़े हुआ वह, बहुत से बड़े सर्पों के ( विष ) दन्तों को उखाड़ने वाले अरुण के कनिष्ठ भ्राता गरुड़-सरीखा था। 'शिखण्डी' के शत्रु भीष्म की भाँति वह भी मोरों ( शिखण्डियों ) का शत्रु था। निरन्तर आविष्कृत की हुई मृगों ( के शिकार ) की प्यास वाला वह सेनापति उस ग्रीष्म ऋतु के दिन-सरीखा था जिसमे 'मृगतृष्णा' की घटना सदा दिखायी देती है। मानसवेग—मानस झील की ओर उत्सुकता से जाने वाले—विद्याधर की भाँति वह भी मानसवेग था अर्थात् उसकी चाल मन जितनी द्रुत थी ( अथवा वह अभिमान सहित सक्रिय था )। योजनगन्धा अर्थात् सत्यवती का अनुगमन करने वाले, उससे प्रेम करने वाले, पाराशर की भाँति वह एक योजन दूर से भी गन्ध का पीछा कर सकता था। भीम का पुत्र होने के कारण घटोत्कच ने जैसे भीम का रूप धारण किया था—

भीमरूपधारिणम्, अचलराजकन्यकाकेशपाशमिव नीलकण्ठचन्द्रकाभरणम्, हिरण्याख्यदानवमिव महावराहदंष्ट्राविभिन्नवक्षःस्थलम्, अतिरागिणमिव कृतबहुबन्दीपरिग्रहम्, पिशिताशनमिव रक्तलुब्धकम्, गीतकलाविन्यासमिव निषादानुगतम्,

दिनमिव। उभयो साम्यमाह—सततेति। सतत निरन्तर वनादाविर्भूता प्रकटीभूता ये मृगा हरिणास्तेषु तृष्णा हननेच्छा यस्य स तम्। पक्ष आविर्भूता प्रकटिता मृगतृष्णा मरीचिका येष्विति विग्रह। विद्येति। विद्याधरो व्योमगस्तद्वदिव। उभयो साम्यार्थमाह—मानसेति। मानेनाहकारेण सवेग सर्वदा तीव्रगति। पक्षे मानसे मानसाभिधाने सरसि गतिर्गमन यस्येति विग्रह। पारेति। पाराशरो व्यासस्तमिव। उभयो सादृश्यमाह—योजनेति। योजन गन्धो विद्यते यस्मिन्नित्यर्शआदित्वादच्प्रत्यय। योजनगन्ध कस्तूरीमृगस्तमनुसरतीत्येवशील, स तम्। योजनगन्धा शीत तमनुसारिणमिति वा। पक्षे 'व्यासमातरि। कस्तूरीशीतयोश्च' इति कोश। घटेति। घटोत्कचो हिडिम्बासुतस्तमिव। उभयो सादृश्यमाह—भीमेति। भीम भयकारि यद्रूप तद्धारिणम्। पक्षे भीमस्य वृकोदरस्य रूपमाकृतिस्तद्धारिणम्। तत्पुत्रत्वात्। अचलेति। अचलराजो हिमाचलस्तस्य कन्यका पार्वती तस्या केशपाश केशकलापस्तमिव। उभयोस्तुल्यतामाह—नीलेति। नीलकण्ठो मयूरस्तस्य चन्द्रका मेचकास्तेषामा समन्ताद्भरण धारण यस्मिन्स तथा तम्। पक्षे नीलकण्ठो महादेवस्तस्य यश्चन्द्र एव चन्द्रकस्तदेवाभरण यस्मिन्। अर्धनारीत्वादिति भाव। हिरण्येति। हिरण्याख्यो हिरण्यकशिपु दानव, दैत्यस्तमिव। उभयो साम्य दर्शयन्नाह—महेति। महावराहा वनसूकरास्तेषा दंष्ट्रा दाढास्ताभिर्विभिन्न विहितक्षत वक्ष स्थल भुजान्तर यस्य स तथा तम्। द्वितीयपक्षे भगवता कृष्णेन महावराहरूपमाधाय हिरण्याक्षस्य वक्ष स्थल विदारितमिति प्रसिद्धि। अतीति। अतिरागिणमतिरागाभिभूतमतियशोभिलाषुकं तमिव। उभयोस्तुल्यतामाह—कृतेति। कृतो विहितो बहुवन्दीना प्रहाणा परि सामस्त्येन ग्रहो येन स तम्। पक्षे कृतो बहुवन्दिना वैतालिकाना परिग्रह, स्वीकारो येनेति विग्रह। 'श्लेषे स्वरो

उसने एक भयानक रूप धारण किया हुआ था। अचलराज अर्थात् हिमालय की कन्या पार्वती के सुप्रचुर (घने) बाल, नीलकण्ठ शिवजी के चन्द्र से आभूषित रहने के कारण 'नीलकण्ठ चन्द्रकाभरण' हैं वैसे वह भी मयूरो की पुच्छों पर के चन्द्राकार शिखण्डकों से आभूषित था, अतएव 'नीलकण्ठचन्द्रकाभरण' था। हिरण्याक्ष दानव के वक्षस्थल को महावराह—वाराहावताररूपी विष्णु ने फाड़ा था इस कारण वह 'महावराहदंष्ट्राविभिन्नवक्षःस्थल' था। इसी प्रकार वह शबर सेनापति भी बड़े सुअरों के दाँतों से (बनाये गये घावों से) दाग लगे विशाल वक्षःस्थल वाला था। अत्यन्त विषयासक्त व्यक्ति बन्दी बनायी गयीं—बलात् छीनकर बन्दी बनाई गयीं स्त्रियो का परिग्रह कर लेता है, उन्हें अपनी पत्नी बना लेता है, उसने भी बहुत-से दासों को अपनी सेवा में रखा हुआ था अथवा बाह्य दिखावा करनेवाले प्रेमी व्यक्ति की भाँति उसने भी अपनी सेवा मे बहुत से भाट रखे हुए थे। मांसभोजी राक्षस रक्तपायी होता है उसके साथ शिकारी सम्बद्ध थे। संगीत कला में (स्वरों की) व्यवस्था के अन्त मे निषाद स्वर आता है। वह 'निषादों' से अनुगत

अम्बिकात्रिशूलमिव महिषरुधिरार्द्रकायम्, अभिनवयौवनमपि क्षपितबहुवयसम्, कृतसारमेयसग्रहमपि फलमूलाशनम्, कृष्णमप्यसुदर्शनम्, स्वच्छन्दचारमपि दुर्गैकशरणम्, क्षितिभृत्पादानुवर्तिनमपि राजसेवानभिज्ञम्, अपत्यमिव विन्ध्याचलस्य,

---

न गण्यते' इति ह्रस्वदीर्घार्थं श्लेष । **पिशितेति** । पिशिताशनो मासभक्षकस्तद्वदिव । उभयोस्तुल्यत्वमाह—**रक्तेति** । रक्ता अनुरक्ता लुब्धका व्याधा यस्मिन्स तथा तम् । पक्षे रक्ते रुधिरे लुब्ध एव लुब्धक । सस्पृह इत्यर्थ । **गीतेति** । गीतकला गेयविज्ञान तस्या विन्यासो रचना तमिव । उभयो साम्यमाह—**निषादेति** । निषादा भिल्लास्तैरनुगत पश्चाद्गतम् । पक्षे निषादस्तन्त्रीकण्ठोद्भव स्वर । 'निषादर्षभगान्धार—'इति कोश । तेनानुगत सहितम् । **अम्बिकेति** । अम्बिका भवानी तस्यास्त्रिशूल शस्त्रविशेषस्तद्वदिव । उभयो सादृश्यमाह—**महिषेति** । महिषो रक्ताक्षस्तस्य रुधिर रक्त तेनार्द्र स्विन्न कायो देहो यस्य स तम् । तदपि तादृशमित्यभङ्गश्लेष । **अभिनवेति** । अभिनव मनोहारि प्रत्यग्र वा यौवन तारुण्य यस्यैवभूत मपि क्षपितानि बहूनि वयासि येनेति विरोध । परिहारपक्षे क्षपिता बहवो वयस पक्षिणो येनेति विग्रह । **कृतेति** । कृतो विहित सारस्य धनस्य मेयस्य मातु योग्यस्यान्नादे सग्रह स्वीकारो येनैवभूतमपि फलमूलान्येवाशन भक्षण यस्येति विरोध । परिहारपक्षे कृत सारमेयाणा कुक्कुराणा सग्रहो येनैवभूतम् । **कृष्णेति** । कृष्ण विष्णुमपि सुदर्शनेन रहितमिति विरोध । परिहारपक्षे कृष्ण श्यामवर्णमत एवासुदर्शन भीमदर्शनम् । भयोत्पादकत्वादिति भाव । **स्वच्छन्देति** । स्वच्छन्देन स्वेच्छतया चारश्चरण यस्यैवभूतमपि दुर्गकोट्टमेकमद्वितीय शरणमाश्रयो यस्येति विरोध । परिहारपक्षे दुर्गा भवान्येक शरण यस्येति विग्रह । **क्षितिभृदिति** । क्षितिभृद्राजा तस्य पादाश्चरणास्तदनुवर्तिनमपि तत्समीपस्थायिनमपि राजसेवा नृपसपर्या तस्या अनभिज्ञमकुशलमिति विरोध । तत्परिहारपक्षे क्षितिभृत्पर्वतस्तस्य पादा पर्यन्तपर्वतास्तदनुवर्तिन तत्र स्थायिनमिति विग्रह । **अपत्येति** । विन्ध्याचलस्य जलबालकाद्रेरपत्यमिव प्रसूतिमिव ।

---

था । दुर्गा का त्रिशूल महिषासुर के रुधिर से गीले तल वाला है—उसने अपने शरीर को भैसो के रक्त से गीला कर रखा था । वह नवयुवक था तो भी उसने अपने जीवन का बहुत सा भाग व्यतीत कर लिया था ( अर्थात् वृद्ध था ) ? नहीं नहीं, वह बहुत से पक्षियों को मार चुका था । कृष्ण था फिर भी सुदर्शन चक्र रहित था ? नहीं नहीं उसकी चमड़ी काली थी और दखने मे आकर्षक नहीं था । यद्यपि उसने धन ( सार ) और अन्न ( मेय ) का सग्रह किया हुआ था तो भी फलमूल ही उसका भोजन था ? नहीं नहीं, उसने बहुत से कुत्ते एकत्रित कर रखे थे । यद्यपि वह अपनी इच्छानुसार जिधर चाहता उधर फिरता था तो भी वह ( रक्षा के लिये ) एक दुर्ग का ही आश्रय लिये हुआ था ? नहीं नहीं, अकेली दुर्गादेवी ही उसका आश्रय थीं । यद्यपि वह राजा के चरणों का अनुगामी ( राजा पर निर्भर ) था, तो भी उसको किसी राजा की सेवा का ज्ञान नहीं था ? नहीं नहीं, वह किसी पर्वत के समीपस्थ किसी पहाड़ी पर रहता था । ( उत्पन्न होने तथा उसीमे पलने के कारण ) वह मानो विन्ध्य पर्वत का

अंशकावतारमिव कृतान्तस्य, सहोदरमिव पापस्य, ³सारमिव कलिकालस्य, भीषणमपि महासत्त्वतया गम्भीरमिवोपलक्ष्यमाणम्, अभिभवनीयाकृतिं मातङ्गनामान शबरसेनापतिमपश्यम्। अभिधान तु पश्चात्तस्याहमश्रौषम्।

आसीच्च मे मनसि—'अहो, मोहप्रायमेतेषा जीवित साधुजनगर्हित च चरितम्। तथा हि। पुरुषपिशितोपहारे धर्मबुद्धिः, आहारः साधुजनगर्हितो मधुमासादिः, श्रमो मृगया, शास्त्र शिवारुतम्, समुपदेष्टारः सदसता कौशिकाः, प्रज्ञा

---

अंशेति। कृतान्तस्य यमस्याशकावतारमिवैकदेशावतारमिव। सहोदरेति। पापस्यैनस सहोदरमिव सोदर्यमिव। सारेति। कलिकालस्य कलियुगस्य सारमिव सर्वस्वमिव। भीषणेति। भीषणमपि भयजनकमपि महच्च तत्सत्त्व च महासत्त्व तस्य भावस्तत्ता तया गम्भीरमिव गाम्भीर्यगुणयुक्तमिवोपलक्ष्यमाण परिदृश्यमानम्। परैरिति शेष। अभीति। अभिभवनीया तिरस्करणीयाकृतिराकारो यस्येति स तम्। अन्वयस्तु प्रागेवोक्त। अभिधान तु पश्चात्तस्याहमश्रौष तस्य सेनापतेरभिधान नामाहं पश्चात्तद्दर्शनानन्तरमश्रौषमाकर्णयम्। अनुचरमुखादिति शेष।

आसीच्चेति। मे मम मनसि चित्त आसीद् बभूव। खेद इति शेष। तदेव दर्शयति—अहो इत्यादिना। अहो इत्याश्चर्ये। एतेषा भिल्लाना जीवित प्राणित मोहोऽज्ञान प्राय प्रचुर यत्र तादृशम्। च पुनरर्थे। चरितमाचरण साधुजनै सज्जनजनैर्गर्हित निन्दितम्। तदेव विशेषतो दर्शयति—तथा हीति। पुरुषेति। पुरुषस्य पुसो यत्पिशित मास तस्य य उपहारो भगवत्यै नैवेद्यदर्शन तस्मिन्धर्मबुद्धि. श्रेयोधी। आहार इति। आहार प्रत्यवसान साधुजनैर्गर्हितो निन्दितो मधुमासादिर्मधु मद्य माक्षिक वा। मास प्रतीतम्। ते आदौ यस्येति बहुव्रीहि। आदिशब्दात्कन्दादिपरिग्रह। श्रम इति। श्रम शक्तिसाधनायास मृगयाखेटक। शास्त्रमिति। शिवा शृगाली तस्या रुत शब्दित शास्त्रमुच्चस्वरवेदपाठ। प्रबोधजनकत्वसाम्यात्तदुपमानम्। सदिति। सदसता शुभाशुभाना समुपदेष्टारो बोधका कौशिका उलूका।

---

पुत्र था, मानो वह यमदेवता का आंशिक अवतार था, मानो पाप का सगा भाई था, मानो कलियुग का निचोड़ था। यद्यपि वह भयानक था तो भी अपने अत्यन्त बल के कारण वह गम्भीर सा दिखायी देता था। उसका शरीर अनादृत नहीं किया जा सकता था (अनादर करनेवाला चैन से नहीं रह सकता था।) उसका नाम मातङ्ग था। किन्तु उसका यह नाम मुझे पीछे से ज्ञात हुआ था।

और मेरे मन में हुआ (मैंने मन ही मन सोचा)—"आश्चर्य है कि कितना मूर्खता-भरा (अज्ञानपूर्ण) जीवन है इनका! और उनके कार्य सज्जनों द्वारा कितने निन्दित हैं। उदाहरण के लिये, नरमास की बलि देना वे अपना धार्मिक कर्त्तव्य समझते हैं। भोजन इनका सज्जनों द्वारा निन्दित शराब मास आदि है। इनका शारीरिक व्यायाम शिकार खेलना है। इनका शास्त्र (निर्देशक सिद्धान्तों का विधान) शृगालों की 'हुवा हुवा' है। इनको अच्छे-बुरे (कर्मों) का उपदेश देने वाले उल्लू हैं। इनकी बुद्धि (मुख्यतया) पक्षियों (की रीतियों)

शकुनिज्ञानम्, परिचिताः श्वानः, राज्यं शून्यास्वटवीषु, आपानकमुत्सवः, मित्राणि क्रूरकर्मसाधनानि धनूंषि, सहाया विषदिग्धमुखा भुजगा इव सायकाः, गीतमुत्साहकारि मुग्धमृगाणाम्, कलत्राणि बन्दीगृहीताः परयोषितः, क्रूरात्मभिः शार्दूलैः सह सवासः पशुरुधिरेण, देवतार्चनम्, मांसेन बलिकर्म, चौर्येण जीवनम्, भूषणानि भुजंगमणयः, वनकरिमदैरङ्गरागः, यस्मिन्नेव कानने निवसन्ति तदेवोत्खातमूलमशेषतः कुर्वते' इति चिन्तयत्येव मयि शबरसेनापतिरटवीभ्रमणसमुद्भव श्रममपनिनीषुरागत्य

---

प्रज्ञेति। शकुनय पतत्रिणस्तेषा स्थूलमहत्त्वादिना ज्ञान तदेव प्रज्ञा विवेकबुद्धि । परीति। श्वान सारमेया॰ परिचिता विश्वासपात्राणि। राज्यमिति। शून्यासु जनरहितासु अटवीषु विन्ध्याटवीषु राज्य स्वामित्वम्। आपानकेति। उत्सव॰ सतुष्टिकार्यं तदेवापानमेवापानकम्। स्वार्थे क । पानगोष्ठिका। मित्राणीति। क्रूर यत्कर्म तत्साधनानि तद्धेतुभूतानि धनूष्येव चापान्येव मित्राणि सुहृद । हितचिन्तकानीति यावत्। सहाया इति। विषेण दिग्ध निन्दित मुखमानन येषामेवविधा सायका बाणास्त एव सहाया इष्टकार्यकर्तृत्वात्साहाय्यकारिण। क इव। भुजगा सर्पा इव। एतेषा विषदिग्धमुखत्व स्वाभाविकम्। तेषामौपाधिकमिति भाव । गीतमिति। मुग्धा अनभिज्ञा ये मृगा हरिणास्तेषामुत्साहकारि स्तब्धताविधायि गीत गानम्। कलत्रेति। परयोषितोऽन्यस्त्रिय एव बन्दी प्रहस्तद्रूपत्वेन गृहीता स्वीकृता कलत्राणि स्वपत्न्य । क्रूरेति। क्रूरात्मभिर्दुष्टात्मभि॰ शार्दूलैश्चित्रके सम सवास सहावस्थानम्। पश्विति। पशवो महिषास्तेषा रुधिरेण रक्तेन देवतार्चन देवपूजनम्। मांसेनेति। मासेन पिशितेन बलिर्हन्तकारस्तत्कर्म तत्कृत्यम्। चौर्येणेति। चौर्येण परद्रव्यापहारेण जीवन प्राणधारणम्। भूषणानीति। भूषणान्याभरणानि भुजगमणय सर्परत्नानि। पर्वतवासित्वात्तेषा ते सुलभा इति भाव । वनेति। वनकरिणामरण्यहस्तिना मदैर्दानवारिभिरङ्गरागो विलेपनम्। यस्मिन्निति। यस्मिन् अनिर्दिष्टनामनि कानने वने निवसन्ति निवास कुर्वन्ति तदेव काननमशेषत समग्रत उत्खातमुत्पाटित मूल मध्यभागो यस्यैवभूत कुर्वते विदधत इति पूर्वोक्तप्रकारेण

---

को जान लेने मे चलती है। इनके परिचित कुत्ते हैं। इनका शासन ( राज्य ) निर्जन जगलों पर है। पानगोष्ठी अथवा मदिरा पान का दौर ही इनका ( मुख्य ) उत्सव है। क्रूर कर्मों के साधनभूत धनुष ही इनके मित्र हैं। इनके सहायक विष लिप्त सिरों वाले तथा ( विष भरे दाँतों वाले ) सर्पों के सदृश बाण हैं। इनका सगीत सीधे सादे हरिणों का उत्सादकारी—विनाश करने वाला है। इनकी पत्नियाँ ( इनके द्वारा ) बन्दी बनायी गयी दूसरों की स्त्रियाँ हैं। क्रूर प्रकृति चीतों के साथ इनका निवास है। इनकी देवपूजा पशुओं के रक्त से ( की जाती ) है। ( देवताओं को ) बलि देने का कर्म वे मास से करते हैं। उनका निर्वाह लूट खसोट से ( होता ) है। उनके आभूषण सर्पों की मणियाँ हैं। उनके शरीर का उबटन जगली हाथियों के मदरस से ( किया जाता ) है। वे जिस किसी भी वन मे जा बसते हैं उसको पूर्णतया जड़ें उखाड़ कर नष्ट कर डालते हैं।"—जब मैं इस प्रकार सोच ही रहा था तो वह शबर सेनापति जगल में घूमने-

तस्यैव शाल्मलीतरोरधश्छायायामवतारितकोदण्डस्त्वरितपरिजनोपनीतपल्लवासने समुपाविशत्। अन्यतरस्तु शबरयुवा ससम्भ्रममवतीर्य तस्मात्करयुगलपरिक्षोभिताम्भसः सरसो वैडूर्यद्रवानुकारि प्रलयदिवसकरकिरणोपतापादम्बरैकदेशमिव विलीनम्, इन्दुमण्डलादिव प्रस्यन्दितम्, द्रुतमिव मुक्ताफलनिकरम्, अत्यच्छतया स्पर्शानुमेयं हिमजडम्, अरविन्दकोशरजःकषायमम्भः कमलिनीपत्रपुटेन प्रत्यग्रोद्धृतांश्च

---

मयि चिन्तयति ध्यायति सत्येव स शबरसेनापतिस्तस्यैव शाल्मलीतरोरधश्छायायामागत्य। त्वरितेति। त्वरित शीघ्र परिजनेन परिच्छदेनोपनीतमानीत यत्पल्लवासन किसलयासन तस्मिन्समुपाविशत्तस्थिवान्। किं कर्तुमिच्छु। अपनिनीषु अपनेतु दूरीकर्तुमिच्छु। कम्। श्रम खेदम्। एतदेव विशेषयन्नाह—अटवीति। अटव्या भ्रमणमितस्तत पर्यटन तस्मात्समुद्भव समुत्पन्नम्। सेनापतिं विशेषयन्नाह—अवेति। अवतारितम् अनधिज्य कृत कोदण्ड धनुर्येन स तथा। तु पुनरर्थे। अन्यतर कश्चिदनिर्दिष्टनामा। शबरश्चासौ युवा चेति कर्मधारयः। न तु शबराणां युवेति निर्धारणे षष्ठ्या समास। 'न निर्धारणे' इति षष्ठ्या सह समासनिषेधात्। ससम्भ्रम सवेगमवतीर्य तदन्त प्रविश्य तस्मात्पम्पाभिधानात्सरस कासारात्कमलिनी नलिनी तस्या पत्रपुटेनाम्भ पानीय तथा धौत क्षालित पङ्कः कर्दमो यासा ता अतएव निर्मला विशदा या मृणालिका कमलिन्यस्ताश्च समुपाहरदानीतवानित्यन्वय। सरो विशिनष्टि—करेति। करयुगलेन हस्तद्वयेन परिक्षोभित विलोडितमम्भ पानीय यस्य तत्तथा तस्मात्। अथाम्भो विशेषयन्नाह—वैडूर्येति। वैडूर्यं बालवायज तस्य द्रव कल्कस्तदनुकारि तत्सदृशम्। अत्युज्ज्वलवर्णत्वात्तदुपमानम्। प्रलयेति। प्रलयस्य कल्पान्तस्य यो दिवसकर सूर्यस्तस्य किरणा दीधितयस्तेषामुपतापादुष्णाद्विलीन क्षरितमम्बरस्याकाशस्यैकदेशमिवैकप्रविभागमिव। इन्दुमण्डलाच्चन्द्रबिम्बात्प्रस्यन्दितं क्षरितमिव। तथा मुक्ताफलस्य रसोद्भवस्य निकर समूह द्रुतमिव द्रवोपयुक्तमिव। अत्यच्छतया अतिस्वच्छतया तादृशभ्रमेऽपि शीतस्पर्शेनानुमेयमनुमातुं योग्य हिमेन

---

फिरने से हुई थकावट को मिटाने के लिये आकर उस ही शाल्मली वृक्ष के नीचे, छाया में धनुष उतार जल्दी जल्दी सेवकों द्वारा लाये गये पत्तों के आसन पर बैठ गया। उनमें से कोई दूसरा शबर युवा जल्दी-जल्दी (उस झील मे) उतर कर, (काई आदि हटाने के लिये) दोनों हाथों से हिलाये जलों वाली उस झील मे से कमलिनी के पत्ते से बनाये दोनो मे जल और ताजे तोड़े हुए (उनपर लगे हुए) कीचड़ को धोकर साफ किये हुए बिसतन्तु भी ले आया। वह (चमकीला) जल वैडूर्यमणि के द्रव (द्रवीकृत वैडूर्यमणि) के सदृश था, ऐसा प्रतीत होता था कि मानो वह जल प्रलयकालीन सूर्य की किरणों की ऊष्मा से पिघला आकाश का एक भाग ही हो, मानो कि वह जल चन्द्रमण्डल से चूकर (रिस कर) आया हो, मानो कि वह द्रव हुआ मोतियों का समूह हो, वह इतना अधिक (पूर्णतया) स्वच्छ था कि उस (उसकी उपस्थिति) का ज्ञान (अनुमान) केवल स्पर्श से ही किया जा सकता था, बर्फ जितना ठंढा था, उसमे कमल-कलिकाओं का पराग मिला हुआ था। पराग की गन्ध अथवा

धौतपङ्कनिर्मला मृणालिकाः समुपाहरत्। आपीतसलिलश्च सेनापतिस्ता मृणालिकाः शशिकला इव सैंहिकेयः क्रमेणादशत्। अपगतश्रमश्चोत्थाय परिपीताम्भसा सकलेन तेन शबरसैन्येनानुगम्यमानः शनैःशनैरभिमत दिगन्तरमयासीत्।

एकतमस्तु जरच्छबरस्तस्मात्पुलिन्दवृन्दादनासादितहरिणपिशितः पिशिताशन इव विकृतदर्शनः पिशितार्थी तस्मिन्नेव तरुतले मुहूर्तमिव व्यलम्बत। अन्तरिते च शबरसेनापतौ स जीर्णशबरः पिबन्निवास्माकमायूंषि रुधिरबिन्दुपाटलया कपिलभ्रूल-

---

तुहिनेन जड स्तब्धता प्रापितम्। अरविन्दस्य कमलस्य य कोश कर्णिकाधारस्तस्य रज परागस्तेन कषाय तुवरम्। कमलिनीर्विशेषयन्नाह—प्रत्यग्रेति। प्रत्यग्र तत्कालमुद्धृता उत्खाता। आपीतेति। आपीत पानविषयीकृत सलिल येनैवंभूत सेनापति सैन्यनायक। क्रमेण जल पानानन्तर ता मृणालिका अदशदभक्षयत्। क कामिव? सैंहिकेयो राहु स यथा शशिकला श्चन्द्रकला अश्नाति। अपेति। अपगतो दूरीभूत श्रम खेदो यस्य स उत्थायोत्थान कृत्वा परि पीताम्भसा कृतजलपानेन सकलेन समग्रेण तेन पूर्वोक्तेन शबरसैन्येन भिल्लबलेनानुगम्यमान शनै शनै कृताखेटकवृत्तित्वेन त्वराभावादभिमत समीहितम्। एकस्या दिशः सकाशादन्या दिशो दिगन्तरमयासीदगमद्। 'या प्रापणे' इत्यस्य लुङि रूपम्।

एकतमस्त्विवति। तु पुनरर्थे। एकतम कश्चिज्जरच्छबर स्थविरभिल्लस्तस्मात्पुलिन्द वृन्दाच्छबरसमुदायादनासादितमप्राप्त हरिणपिशित मृगमास येनैवभूत पिशितार्थी मासार्थी। पिशितेति। पिशितमश्नातीति पिशिताशनो व्याघ्रस्तद्वदिव विकृत दर्शन यस्य स तस्मिन्नेव तरुतले पूर्वोक्तवृक्षाध एकमुहूर्तमिव घटिकाद्वयमिव व्यलम्बत तद्गमनानन्तर विलम्ब चकार। तथा शबरसेनापतौ भिल्लनायकेऽन्तरिते वृक्षादिना व्यवहिते सति स पूर्वोक्तो जीर्णशबरोऽस्माकं पक्षिणामायूंषि जीवितानि पिबन्निव पान कुर्वन्निव शुकाना कीराणा यानि कुलानि तेषा कुलाया नीडानि तेषा स्थानानि स्थलविशेषाणि गणयन्निव तत्सख्या कुर्वन्निव। कया दृष्ट्या। इतो दृष्टिं विशेषयन्नाह—रुधिरेति। रुधिरस्य रक्तस्य यो बिन्दु पृषत्तद्वत्पाटलया श्वेतरक्तया। कपिलेति। कपिला पिङ्गला या भ्रूलता तस्या परिवेष परिधिस्तेन भीषणया भयकारिण्या।

---

उसके कसैले स्वाद से मुक्त था। सेनापति ने पानी पीकर उन बिष तन्तुओं को एक एक करके इस प्रकार निगला जैसे कि राहु चन्द्रमा की कलाओं को निगलता है। जब उसकी थकान मिट गयी तो वह उठा और जल पिये हुई उस सारी शबर सेना द्वारा अनुगम्यमान वह शबरसेनापति धीरे-धीरे अपने अभीष्ट प्रदेश की दिशा में चला गया।

किन्तु, उस शबर सेना में से एक बूढा शबर, जिसको मृग का मास नहीं मिला था और जो मासभक्षी ( असुर ) जैसा अत्यन्त भयङ्कर दिखायी देता था, ( खाने के लिये ) मास की इच्छा वाला, उस बृक्ष के नीचे कुछ समय रुक गया। और जब शबर सेनापति आँखों से ओझल हो गया तो उस वृद्ध शबर ने उस वृक्ष पर चढना चाहते हुए उस ( वृक्ष ) का जड़ से चोटी तक निरीक्षण किया। उस समय वह ऐसा दिखायी दिया कि मानो वह अपनी रक्त

तापरिवेषभीषणया दृष्ट्या गणयन्निव शुककुलकुलायस्थानानि श्येन इव विहगामिषस्वादलालसः सुचिरमारुरुक्षुस्त वनस्पतिमा मूलादपश्यत्। उत्क्रान्तमिव तस्मिन्क्षणे तदालोकनभीताना शुककुलानामसुभिः। किमिव हि दुष्करमकरुणानाम्। यतः स तमनेकतालतुङ्गमभ्रंकषशाखाशिखरमपि सोपानैरिवायत्नेनैव पादपमारुह्य ताननुपजातोत्पतनशक्तीन्काश्चिदल्पदिवसजातान्गर्भच्छविपाटलाञ्छाल्मलीकुसुमशङ्कामुपजनयतः, काश्चिदुद्भिद्यमानपक्षतया नलिनसवर्तिकानुकारिणः, काश्चिदर्कफलसदृशान्, काश्चि-

पुन प्रकारान्तरेण तमेव विशेषयन्नाह—श्येनेति। श्येन इव शशादन इव विहगाना पतत्रिणा यदामिष मास तस्यास्वादो भक्षण तत्र लालसो लम्पटस्त वनस्पति शाल्मलीवृक्षमारुरुक्षुरारोढुमिच्छु सुचिर चिरकाल यावत्। आ मूलान्मूल मर्यादीकृत्यामूल तस्मात्प्रान्तपर्यन्तमपश्यदव्यलोकयत्। उत्क्रान्तमिवेति। तस्मिन्क्षणे तस्मिन्प्रस्तावे तस्य यदालोकन वीक्षण तेन भीताना भयप्राप्ताना शुककुलानामसुभि प्राणैरुत्क्रान्तमिव निर्गतमिव। हीति। हि यस्मात्कारणादकरुणाना निर्दयाना किमिव दुष्करम्। न किमपीत्यर्थ। सर्वमेवाकृत्य कुर्वन्तीति भाव। यत स भिल्लस्त पादपमनेके ताला वृक्षविशेषास्तद्वत्तुङ्गमुच्चम्। अभ्रमिति। अभ्रंकषमभ्रलिह शाखाना शिखरं प्रान्तो यस्यैवभूतमप्ययत्नेनैव प्रयासव्यतिरेकेणैव सोपानैरिवारोहणैरिवारुह्यारोहण कृत्वा तस्य वनस्पते शाखान्तरेभ्यश्च शुकशावकानेकैक प्रत्येकं तस्य भावस्तत्ता तया फलानीव सस्यानीव तानग्रहीदादत्तेत्यन्वय। इत शुकशिशून्विशेषयन्नाह—अन्विति। अनुपजातानुत्पन्नोत्पतनशक्तिर्नभोगमनसामर्थ्यं येषा ते तथा तान्। काश्चिदिति। अल्पदिवसजातान्स्वल्पदिनप्रभवान्। गर्भेति। प्रत्यग्रोत्पन्नस्य गर्भस्य या छवि कान्तिस्तस्या पाटलाञ्श्वेतरक्तान्। किं कुर्वत। उपजनयत उत्पादयत। काम्। शाल्मलीवृक्षस्य यानि कुसुमानि पुष्पाणि तेषा

बिन्दुओं सरीखी लाल, भूरी-भूरी लताओं सरीखी भौंहों के घेरे के कारण भयानक दिखायी देती दृष्टि से हमारे जीवन को पी रहा हो, मानो तोतो के घोंसले के स्थानों को गिन रहा था, मानो पक्षियों के मास को चखने का लोभी कोई बाज था। उस समय उसको देख कर डरे हुए तोतों के प्राण तो मानों (उनके शरीरों से) विदा हो गये थे। करुणाविहीनों के लिये भला कौन सा काम कठिन होता है। क्योंकि वह उस (एक पर एक रखे) अनेक ताल ऊँचे गगनचुम्बी शाखाओं वाले वृक्ष पर भी, सरलता से, मानो सीढ़ी ही लगाकर चढ़ गया—और चढ़कर उस वृक्ष की शाखाओं के बीच मे से और उसकी खोहों से विरोध करने मे असमर्थ, तोतों के शिशुओं को उसने एक एक करके ऐसे ले लिया कि मानो फलों को ले लिया हो। वे शिशु (इतने छोटे थे कि) उड़ नहीं सकते थे, कुछ तो कुछ दिन के ही हुए थे और गर्भ के रग से (अभी तक) लाल ही थे—इस कारण उनको देखकर 'शाल्मली वृक्ष के फूल हैं—यह गलत प्रभाव[1] उत्पन्न हो रहा था। कुछ ऐसे थे कि उनके पख अभी निकल ही रहे थे, इस कारण वे कमल की नयी पत्तियों[2] सरीखे प्रतीत होते थे। कुछ अर्क के

१. शका—(wrong impression)

२ 'सवर्त्तिका नवदलम्'—इति कोश

ल्लोहितायमानचञ्चुकोटीनीषद्विघटितदलपुटपाटलमुखाना कमलमुकुलाना श्रिय-मुद्वहतः, काश्चिदनवरतशिरःकम्पव्याजेन निवारयत इव प्रतीकारासमर्थानेकैकतया फलानीव, तस्य वनस्पतेः शाखान्तरेभ्यश्च शुकशावकानग्रहीत्। अपगतासूंश्च कृत्वा क्षितावपातयत्।

तातस्तु त महान्तमकाण्ड एव प्राणहरमप्रतीकारमुपप्लवमुपनतमालोक्य द्विगुणतरोपजातवेपथुर्मरणभयादुद्भ्रान्ततरलतारको विषादशून्यामश्रुजलप्लुता दृशमितस्ततो दिक्षु विक्षिपन्, उच्छुष्कतालुरात्मप्रतीकाराक्षमस्त्रासस्रस्तसधिशिथिलेन

---

शङ्कामारेकाम्। तत्कुसुमानामपि श्वेतरक्तत्वादेतेषा च तथात्वादुपमानोपमेयभाव। काश्चि-दिति। उद्भिद्यमाना प्रादुर्भूयमाना ये पक्षास्तेषा भावस्तत्ता तया नलिनाना कमलाना सवर्तिका नवदलम्। 'सवर्तिका नवदलम्' इति कोश। अनेनातिनैर्मल्य द्योत्यते। तदनुकारिणस्तत्सा-दृश्यभाज। काश्चिदिति। अर्को मन्दारस्तस्य फलानि तै सदृशास्तत्तुल्यान्। काश्चिदिति। लोहितायमाना रक्तायमानाश्चञ्चूना त्रोटीना कोट्य अग्रभागा येषा ते तथा तान्। काश्चित्किं कुर्वत.। श्रिय शोभामुद्वहत उत्प्राबल्येन धारयत। केषाम्। कमलमुकुलाना नलिनकुड्मला नाम्। कीदृशानाम्। ईषत्किंचिद्विघटित विकसित यद्दलपुट तेन पाटल श्वेतरक्त मुख येषां तानि तथा तेषाम्। पुन शिशून्विशिनष्टि—अनेति। अनवरत निरन्तर य शिर कम्पस्तस्य व्याजो मिष तेन निवारयत इव 'वय बालका, अस्मासु दया कर्तव्या, मास्मान्जहि' इति निवारणा कुर्वत इव। कीदृशान्। प्रतीकारो वधनिवृत्त्युपायस्तत्रासमर्थान्सामर्थ्यवर्जितान्। अपेति। अपगता असव प्राणा येषामेवविधास्तान्कृत्वा विधाय क्षितौ भूमावपातयदचिक्षिपत्।

तातस्तु मत्पिता तु मा क्रोडविभागेनोत्सङ्गप्रदेशेनावष्टभ्यालम्बनीकृत्य तस्थौ तस्थिवा नित्यन्वय। तथा महान्त महीयासमकाण्ड एवाप्रस्ताव एव प्राणहर जीवितनाशकृतमप्रतीकार-मचिकित्स्यमुपप्लवमुपद्रवमुपनत प्राप्तमालोक्य निरीक्ष्य। अथ तत्पितर विशेषयन्नाह—द्विगुणतरेति। द्विगुणतर पूर्वस्माद्द्विगुणित उपजात समुत्पन्नो वेपथु कम्पो यस्य स तथा। मरणेति। मरणभयान्मृत्युत्रासादुद्भ्रान्ता अतिशयेन भ्रमितास्तरलाश्चञ्चलास्तारका कनीनिका

---

वृक्ष के फलो सरीखे थे। कुछ जिनकी चोंचो के अग्रभाग लाल लाल थे, वे, कुछ ही विकसित हुई, (अपने) पत्तो की तहो के कारण लाल हुए सिरो वाली कमल कलिकाओं की (भाँति) सुन्दर थे। कुछ मानो लगातार हुए अपने शिर कप के बहाने ही उसको वैसा न करने को कह रहे थे। और उन सबको उनके प्राणो से वियुक्त कर उसने पृथ्वी पर फैंक दिया।

अब जब मेरे पिता ने उस प्राणघातक असाध्य महाविपद् को, अचानक ही आते हुए देखा, तो उसका कम्प दुगुना हो गया, मृत्यु के भय के कारण उसकी पुतलियाँ घूम गयीं और अस्थिर हो गयीं, शोक के कारण अपनी सूनी तथा आँसुओं से धुँधली दृष्टि उसने चारों ओर फैंकी, उसका तालु सूख गया, (अपने लिये विरोध करने मे असमर्थ अर्थात्) अपना बचाव करने में असमर्थ उसने भय से ढीले पड़े जोड़ो के कारण खुले (ढीले) हुए पखों के

पक्षसपुटेनाच्छाद्य मां तत्कालोचितं प्रतीकारं मन्यमानः स्नेहपरवशो मद्रक्षणाकुलः किंकर्तव्यताविमूढः क्रोडविभागेन मामवष्टभ्य तस्थौ। असावपि पापः शाखान्तरैः सञ्चरमाणः कोटरद्वारमागत्य जीर्णासितभुजगभोगभीषणं प्रसार्य विविधवनवराह-वसाविस्रगन्धि करतलं कोदण्डगुणाकर्षणव्रणाङ्कितप्रकोष्ठमन्तकदण्डानुकारिणं वामबाहु-मतिनृशंसो मुहुर्मुहुर्दत्तचञ्चुप्रहारमुत्कूजन्तमाकृष्य तातं गतासुमकरोत्। मां तु

---

यस्य स । किं कुर्वन् ? दृशं दृष्टिमितस्ततः समन्ततो दिक्षु ककुप्सु विक्षिपन्विस्तारयन् । दृशं विशिनष्टि—विषादेति । विषादेन शोकेन शून्या निस्तेजसम् । अश्रुवेति । अश्रुजलेन नेत्राम्बुना प्लुता प्लाविताम् । उदिति । उत्प्राबल्येन शुष्कमनार्द्रं तालु काकुदं यस्य स तथा । आत्मनः स्वस्य च प्रतीकारो दुःखनिवृत्त्युपायस्तत्राक्षमोऽसमर्थः । किं ? कृत्वा । पक्षसपुटेन छदपुटेन मामाच्छाद्य तिरोधाय । किं कुर्वाणः । मन्यमानो जानानः । किं ? तत्कालोचितं तत्समययोग्यम् । इममेव प्रतीकारमुपायम् । पक्षसपुटं विशेषयन्नाह—त्रासेति । त्रासेन भयेन स्रस्ता विदीर्णा ये सन्धयोऽस्थिबन्धास्तैः शिथिलेन श्लथेन स्नेहेन प्रीत्या परवशः परायत्तो मम यद्रक्षणं गुप्तिस्तत्राकुलः सम्भ्रान्तः । किमिदानीं कर्तव्यं विधेयमित्यस्य भावः किंकर्तव्यता तत्र विमूढो भ्रष्टमतिः । असावपीति । असौ जरच्छबरोऽपि पापः पापिष्ठः शाखान्तरैः शाखान्तरैः सञ्चरमाणः प्रवर्तमानः कोटरद्वारं निष्कुहद्वारमागत्यैत्य तातं मत्पितरं गतासुं विगतप्राणम-करोदसृजदित्यन्वयः । किं कृत्वा । प्रसार्य विस्तार्य । कम् । वामबाहुं सव्यभुजम् । अथैनं विशेषयन्नाह—जीर्णेति । जीर्णो जरीयानसितः कृष्णो यो भुजंगः सर्पस्तस्य भोगः कायस्तद्व-द्भीषणं भयजनकम् । विविधेति । विविधा अनेके ये वनवराहा अरण्यक्रोडास्तेषां वसा स्नायुस्तया विस्रगन्ध्यामगन्धि करतलं हस्ततलं यस्य स तथा तम् । कोदण्डेति । कोदण्डस्य धनुषो ये गुणाः प्रत्यञ्चास्तेषामाकर्षणमाक्षेपस्तेन व्रणं किणं तेनाङ्कितश्चिह्नितः प्रकोष्ठः कलाचिका यस्य स तम् । अन्तकेति । अन्तकस्य यमस्य यो दण्डो लगुडस्तदनुकारिणम् । तत्सादृश्यधारिण-मित्यर्थः । कीदृक्सः । अतिनृशंसोऽतिक्रूरः । कीदृशं तातम् । मुहुरिति । मुहुर्मुहुर्वारं वारं दत्त-

---

भीतर उस समय के लिये उचित विरोध की रीति यही थी—यह समझते हुए मुझको ढक लिया और ( मेरे लिये अपने ) स्नेह के वशीभूत होकर मुझे बचाने में व्यस्त हो गया, इसके अतिरिक्त और क्या किया जा सकता है इस बात को न बूझकर वह अपने वक्ष स्थल द्वारा मुझे सहारा दिये हुए बैठा रहा। वह पापी भी क्रमशः एक शाखा से दूसरी शाखा[1] पर चलता हुआ ( हमारी ) खोह के द्वार तक पहुँच गया। और उसने अपनी काले बूढ़े नाग शरीर-सरीखी ( उस द्वारा मारे गये ) विविध प्रकार के जंगली सूअरों की चर्बी तथा कच्चे मांस की गन्ध से युक्त हथेली वाली और धनुष की ज्या को खींचने से हुई खुरैंचों से अंकित प्रबाहु[2] वाली, मृत्यु के डंडे सरीखे बायीं भुजा फैला दी, और उस अत्यन्त क्रूर व्यक्ति ने बार-बार चोंच मारते हुए तथा क्रन्दन करते मेरे पिता को खींच लिया और मार दिया। किन्तु बहुतः

---

१. शाखान्तरैः , २. कलाई तथा कोहनी के बीच का भाग।

स्वल्पत्वाद्भयसंपिण्डिताङ्गत्वात्सावशेषत्वाच्चायुषः कथमपि पक्षसंपुटान्तरगत नालक्षयत्। उपरत च तमवनितले शिथिलशिरोधरमधोमुखममुञ्चत्। अहमपि तच्चरणान्तरे निवेशितशिरोधरो निभृतमङ्कनिलीनस्तेनैव सहापतम्। अवशिष्टपुण्यतया तु पवनवश्येन पुञ्जितस्य महतः शुष्कपत्रराशेरुपरि पतितमात्मानमपश्यम्। अङ्गानि येन मे नाशीर्यन्त। यावच्चासौ तस्मात्तरुशिखरान्नावतरति तावदहमवशीर्णपत्रसवर्णत्वादस्फुटोपलक्ष्यमाणमूर्तिः पितरमुपरतमुत्सृज्य नृशस इव प्राणपरित्यागयोग्येऽपि काले बाल-

---

श्चञ्चुप्रहारस्त्रोटीप्रघातो येन स तथा तम्। किं कुर्वन्तम्। उच्चाबल्येन कूजन्त शब्द कुर्वन्तम्। किं कृत्वा। आकृष्य कोटराद्बहिरानीयेति शेष। मा तु वैशम्पायन कथमपि महता कष्टेन पक्षसपुटान्तरगत नालक्षयन्न ज्ञातवान्। अत्र हेतुमाह—स्वल्पत्वादित्यादि। स्वल्पत्वादल्पत्वाद्भयसपिण्डिताङ्गत्वात्त्राससकुचिताङ्गत्वादायुषो जीवितव्यस्यावशेषेणोद्धरितभागेन सहवर्तमानत्वात्। उपेति। उपरत मृत त पितरमवनितले पृथ्वीतले शिथिला श्लथा शिरोधरा कन्धरा यस्य स तमधोमुखमवाङ्मुखममुञ्चदचिक्षिपत्। अहमपि तस्य पितुश्चरणान्तरे क्रमणमध्ये निवेशिता स्थापिता शिरोधरा ग्रीवा येन स। निभृतमत्यर्थमङ्क उत्सङ्गे निलीनो लग्न। यथा पितुर्देहाच्छिन्नतया नोपलभ्यते तथा स्थित इत्यर्थ। तेनैव जनकेनैव सहापतम्। अत्र सयोगफलिकां क्रियामकरवम्। 'पत्लृ पतने' इत्यस्य लुङि रूपम्। अवेति। अवशिष्टमुर्वरित यत्पुण्य श्रेयस्तस्य भावस्तत्ता तया। पवनेति। पवन समीरणस्तस्य वश्यस्तदायत्तता तेन पुञ्जितस्य पिण्डितस्य महतो महीयस शुष्कपत्रराशे शुष्काणि वानानि यानि पर्णानि पत्राणि तेषा राशि समुदायस्तस्योपरि पतित स्वस्तमात्मान स्वमपश्यमद्राक्षम्। येनेति। येन पुण्येन शुष्कपत्रराश्युपरिपातेन वा मे ममाङ्गानि नाशीर्यन्त न विगलितानि। यावच्चासौ शबरो यावता कालेन तस्मात् तरुशिखराद्वृक्षाग्रान्नावतरति नोत्तरति तावदहमवशीर्णानि विगलितानि यानि पत्राणि तै सवर्णः सदृशस्तस्य भावस्तत्त्व तस्मादस्फुटमप्रकटमुपलक्ष्यमाणा दृश्यमाना मूर्तिराकृतिर्यस्यैवभूतोऽहमति महतोऽस्युच्चस्य तमालविटपिनस्तापिच्छस्य मूलदेश बुध्नप्रदेशमविश प्रविष्टवानित्यन्वय। उपेति।

---

छोटे शरीर का होने के कारण, (भय से) अगों को समेट कर गेंद से बन जाने के कारण और अभी भाग्य मे और अधिक देर तक जीना लिखा रहने के कारण (अक्षरार्थ—मेरे लिये जीवन अभी बाकी था) (अपने पिता के) (तह किये हुए) पखों की पोल मे घुसे मुझको उसने नहीं देखा। जब मेरा पिता मर गया तो उसको शबर ने नीचे पृथ्वीपर फैंक दिया—(उस समय) उसकी गर्दन लटक गयी थी और सिर नीचे की ओर था। उसकी टागो के बीच के स्थान म अपनी गर्दन को रखे हुआ, तथा चुपचाप उसकी गोद मे छिपा हुआ मै भी उसके साथ ही गिरा। परन्तु सौभाग्य से (अक्षरार्थ—पुण्य शेष रह जाने के कारण) मैने अपने आप को वायु द्वारा वहाँ एकत्रित हुए एक भारी, सूखे पत्तों के ढेर पर गिरा पाया। इसी कारण मेरे अग चकना चूर नहीं हुए थे। और उसके, वृक्ष से नीचे उतरने से पहिले ही, बिखरे पत्तों के रग का होने के कारण स्पष्ट पहचान में न आते हुए शरीर वाले मैंने अपने मृत पिता को छोड़ दिया। वह समय यद्यपि प्राणों को छोड़ देने के लिये उचित था

तया कालान्तरभुवः स्नेहरसस्यानभिज्ञो जन्मसहभुवा भयेनैव केवलमभिभूयमानः किंचिदुपजाताभ्या पक्षाभ्यामीषत्कृतावष्टम्भो लुठन्नितस्ततः कृतान्तमुखकुहरादिव विनिर्गतमात्मान मन्यमानो नातिदूरवर्तिनः शबरसुन्दरीकर्णपूररचनोपयुक्तपल्लवस्य सकर्षणपटनीलच्छाययोपहसत इव गदाधरदेहच्छविम्, अच्छैः कालिन्दीजलच्छेदैरिव विरचितच्छदस्य, वनकरिमदोपसिक्तकिसलयस्य, विन्ध्याटवीकेशपाशश्रियमुद्वहतः,

उपरत व्यापन्न पितरमुत्सृज्य त्यक्त्वा। क इव नृशस इव। क्रूर इव प्राणपरित्यागे योग्य उचितस्तस्मिन्वृद्धपितुर्मरणे मरणमेवोचितमिति योग्यता तस्मिन्नपि काले समये सति बालतयार्भकत्वेन कालान्तरेऽप्रबुद्धवयोवस्थाविशेषे शयनासनभोजनादिषु य स्नेहस्तद्विषयको रसस्तस्यानभिज्ञस्तदज्ञाता। किं क्रियमाण। जन्मेति। जन्मसहभुवा उत्पत्तिसमयादारभ्य समुत्पन्नेन भयेनैव भियैव केवल सर्वतोभिभूयमान• पीड्यमान। पुन कीदृक्। किंचिदिति। किंचिदीषदुपजाताभ्या निष्पन्नाभ्या पक्षाभ्या छदाभ्यामीषत्कृतोऽवष्टम्भ आधार आश्रयो यस्य स तथा। कि कुर्वन्। लुठन्नितस्ततो भूमौ पतन्। कृतान्तेति। कृतान्तो यमस्तस्य मुखमिव मुख यस्यैव भूतात्कुहरात्सुषिराद्विनिर्गत नि सृतमात्मान स्व मन्यमानो ज्ञायमान। अथ तमाल विशेषआह—नातीति। न प्रतिषेधे। अतिदूरवर्ती नविष्टप्रदेशस्थायी तस्य। शबरेति। शबराणां भिल्लाना सुन्दर्य स्त्रियस्तासा कर्णपूराणि कर्णाभरणानि तेषा रचना विनिर्मितिस्तत्रोपयुक्ता सोपयोगिन पल्लवा यस्य स तथा तस्य। संकर्षणेति। सकर्षणो बलभद्र। 'सकर्षण प्रियमधुर्बलरौहिणेयौ' इति कोश। तस्य पटो वस्त्र तस्य नीला छाया कान्तिस्तया गदाधरो विष्णुस्तस्य देहच्छवि शरीरदीप्तिमुपहसत इवोपहास कुर्वत इव। अच्छैरिति। अच्छैर्निर्मले कालिन्दी यमुना तस्या जल पानीय तेषा छेदा खण्डानि तैरिव विरचितानि विनिर्मितानि छदानि पत्राणि यस्य स तथा तस्य। वनेति। वनकरिणामरण्यहस्तिना मदा दानानि तैरुपसिक्तानि सिञ्चितानि किसलयानि यस्य स तथा तस्य। विन्ध्येति। विन्ध्यावटी दण्डकारण्य तस्या केशपाश केश-

तो भी क्रूर व्यक्ति की भाँति ( बचपन को छोड़कर ) अन्य ( यौवनादि मे ) उत्पन्न होने वाली स्नेह भावना से अनभिज्ञ, जन्म के साथ उत्पन्न होने वाले ( अर्थात् प्राकृतिक ) केवल मात्र भय के वशीभूत हुआ, कुछ कुछ निकले हुए ( उत्पन्न हुए ) पखों का जहाँ तक बन सका[1] सहारा लिये हुआ, इधर उधर लुढकता हुआ, अपने आप को मृत्यु मुख रूपी गुहा से ( जम्भाई लेते हुए यम की दाढ़ों से ) बच निकला समझता हुआ मैं, ( मेरे सम्मुख ) समीप ही स्थित एक बहुत बड़े तमाल वृक्ष के मूल प्रदेश मे घुस गया। वह स्थान ऐसा था कि उसमे सूर्य की किरणे प्रविष्ट ही नहीं हुई थीं, बहुत ही सघन था और मेरे लिये तो मानो दूसरे पिता की गोद ही था। उस तमाल वृक्ष के पत्तों से शबरियाँ अपने कर्ण भूषण बनाया करती थीं, उसकी छाया बलराम के वस्त्रों की सी नीली थी और उससे वह विष्णु भगवान् के शरीर के स्वाभाविक ( काले ) रूपरंग को मानो लजा रहा था, उसके पत्ते मानो स्वच्छ यमुना जल के अंशों में से

१ ईषत्—कुछ सीमा तक

दिवाप्यन्धकारितशाखान्तरस्य, अप्रविष्टसूर्यकिरणमतिगहनमपरस्येव पितुरुत्सङ्गमति-महतस्तमालविटपिनो मूलदेशमविशम्।

अवतीर्य च स तेन समयेन क्षितितलविप्रकीर्णान्सहृत्य शुकशिशूनेकलतापाश-सयतानाबध्य पर्णपुटेऽतित्वरितगमनः सेनापतिगतेनैव वर्त्मना तामेव दिशमगच्छत्। मां तु लब्धजीविताश प्रत्यग्रपितृमरणशोकशुष्कहृदयमतिदूरपातादायासितशरीरं सत्रा-सजाता सर्वाङ्गोपतापिनी बलवती पिपासा परवशमकरोत्। अनया च कालकलया सुदूरमतिक्रान्तः स पापकृदिति परिकलय्य किंचिदुन्नमितकन्धरो भयचकितया दृशा

---

कलापस्तस्य श्रिय शोभामुग्धाबल्येन वहतो दधत । दिवापीति। दिवापि दिवसेऽपि अन्धकारित जातान्धकार शाखान्तर शालान्तर यस्य स तथा तस्य। कीदृश मूलदेशम्। अप्रविष्टेति। अप्रविष्टा नान्तर्गता सूर्यस्य रवे किरणा यस्मिन्स तम्। अतीति। अतिशयेन गहनमपर्याप्तावकाशम्। कस्येव अपरस्येव भिन्नस्येव पितुरभयदानुत्सङ्ग क्रोडम्।

अवेति। अवतीर्योत्तीर्य स शबरस्तेन समयेनेति तत्कालेन क्षितितले पृथ्वीतले विप्रकीर्णानितस्तत पर्यस्तान्शुकशिशून्कीरपाकान्सहृत्यैकीकृत्य। कीदृशान्। एकाद्वितीया या लता वल्ली तल्लक्षणो य पाशो बन्धनरज्जुस्तेन सयतान्बद्धानेवभूतान्पर्णपुट आबध्य बन्धन कृत्वा तित्वरितमतिशीघ्र गमन यस्य स तथा। सेनेति। येन सेनापतिर्गतस्तेनैव वर्त्मना मार्गेण तामेव दिश सेनापतिगृहीतामेव ककुभमगच्छदगमत्। मा त्विति। तु पुनरर्थे। मा पिपासा तृट् परवश परायत्तमकरोदित्यन्वय। इतो मा विशेषयन्नाह—लब्धेति। तद्गमनादेव लब्धा प्राप्ता जीविताशा प्राणधारणसभावना येन स तम्। प्रत्यग्रेति। प्रत्यग्रो नवीनो य पितृमरण शोको जनकमृत्युविषादस्तेन शुष्कमनार्द्रं सकुचित वा हृदय चित्त यस्य स तम्। अतीति। अतिदूरापाताद्विप्रकृष्टतरप्रदेशपतनात्। तद्वृक्षादिति शेष। आयासित परिश्रमित शरीर यस्य स तम्। तृष विशेषयन्नाह—संत्रासेति। सन्त्रासेन भयेन जाता समुत्पन्ना। सर्वेति। सर्वाणि समग्राण्यङ्गानि हस्तप्रभृतीन्युपतापयति पीडयतीत्येवशीला बलवती बलोपयुक्ता। अनयेति। अनया कालकलया घटिकया स पापकृद्भिल्ल सुदूर दूरदेशमतिक्रान्तो गत इति परिकलय्य चेतसि परिकलना कृत्वा। किंचिदिति। किंचिदीषन्नमितोर्ध्वीकृता कन्धरा ग्रीवा येन स तथा।

---

काटकर बनाये गये थे, उसकी नई कोंपलों पर मानो जगली हाथियों के मद से छिड़काव किया हुआ था, विन्ध्याटवी ( रूपी महिला ) के केशपाश की भाँति सुशोभित था, और दिन में भी इसकी शाखाओं के अन्तराल में अन्धेरा रहता था।

इस बीच में वह वृद्ध शबर ( वृक्ष पर से ) उतर गया और पृथ्वी तल पर बिखरे पड़े शुक शिशु उसने एकत्रित कर लिये, अनेक लताओं से बनायी गयी रस्सी उनके चारों ओर लपेट कर उनको दोने मे बाँधकर शीघ्रता से चलता हुआ, सेनापति जिस मार्ग से गया था उसी मार्ग से ही वह उसी दिशामे चला गया। परन्तु मुझे जिसको कि अब ( उस शबर के विदा हो जाने पर ) जीने की आशा हो गयी थी, जिसका हृदय हाल ही में मरे पिता के शोक से सूख गया था और बहुत दूर से, बहुत ऊँचाई से गिरने के कारण जिसका शरीर बहुत

दिशोऽवलोक्य तृणेऽपि चलति पुनः प्रतिनिवृत्त इति तमेव पदे पदे पापकारिण-मुत्प्रेक्षमाणो, निष्क्रम्य तस्मात्तमालतरुतलमूलात्सलिलसमीपं सर्तुं प्रयत्नमकरवम्।

अजातपक्षतया नातिस्थिरतरचरणसचारस्य मुहुर्मुहुर्मुखेन पततो मुहुस्तिर्यङ्नि-पतन्तमात्मानमेकया पक्षपाल्या सधारयतः, क्षितितलससर्पणश्रमातुरस्यानभ्यासवशा-देकमपि दत्त्वा पदमनवरतमुन्मुखस्य स्थूलस्थूलं श्वसतो धूलिधूसरस्य संसर्पतो मम

---

भयेति। भयेन भीत्या चकिता त्रस्ता या दृक् तया दिशोऽवलोक्य निरीक्ष्य तृणेऽपि यवसेऽपि चलति कम्पति सति पुन प्रतिनिवृत्त प्रत्यागत इति तमेव शबरमेव पदे पदे पापकारिण कल्मष-कारिणमुत्प्रेक्षमाण उत्पश्यमानो निष्क्रम्य बहिर्निर्गत्य। कस्मात्। तस्मात्तमालतरुतलमूलात्ता-पिच्छवृक्षादध स्थलात्सलिलसमीप जलोपान्त सर्तुं गन्तु प्रयत्न प्रयासमकरवमकार्षम्।

अथ च मम मनस्येवमभूदित्यन्वय । त विशेषयन्नाह—अजातेति। अजातावनुत्पन्नौ यौ पक्षौ छदौ तयोर्भावस्तत्ता तया न विद्यतेऽतिस्थिरतरश्चरणयो क्रमयो सचार स्थापनयोग्यता यस्य स तथा। तस्य किं कुर्वत । मुहुर्मुहुर्वारवार मुखेनाननेन पतत पतन कुर्वत । मुहुर्वारवार तिर्यक्शिरश्चीन निपतन्त भ्रश्यन्तमात्मानमेकया केवलया पक्षपाल्या छदग्रहत्या सधारयत पतनाद्रक्षा विदधत । क्षितीति। क्षितितले ससर्पण गमन तस्माद्यो श्रमो श्रान्तिस्तेनातुरस्य पीडितस्य। अभ्यासेति। अभ्यास पुन पुन करण तदभाववशादेकमपि पद चरण दत्त्वा निवेश्यानवरत बहुकालमुन्मुखस्योर्ध्वाननस्य स्थूलस्थूल यथा स्यात्तथा श्वसत श्वासमोक्षण कुर्वतः। एतेनैकपदस्थापनेऽपि श्रमबाहुल्य व्यज्यते। धूली रेणुस्तया धूसरस्य धूम्रवर्णस्य। किं कुर्वत । ससर्पत प्रचलत । चिन्ता विवृणोति—ममेति। मम मनस्येव समभूत्। तदेव दर्शयति—खल्विति। खलु निश्चयेन जगति लोकेऽतिकष्टमतिकृच्छ्रं यास्वेव विधास्ववस्थासु

---

दु खी था, सब अगों को तपाती अत्यधिक प्यास ने आ घेरा। और 'समय के इतने भाग में वह दुष्ट ( पापी ) बहुत दूर चला ही गया होगा' यह अनुमान करके मैंने अपनी गर्दन कुछ ऊपर उठायी और भयभीत दृष्टि से चारों ओर देखा और तिनके के हिलने पर भी, पग पग पर, 'वही पापी फिर लौट आया' है यह सोचते हुए मैंने उस तमाल तरु के मूल से निकल कर सरक कर जल के समीप जाने का यत्न किया।

पख ( पूर्णतया ) न बढ़े हुए होने के कारण मेरे पाँव बहुत स्थिरता से नहीं चलते थे, ( अत ) मैं बार-बार मुँह के बल गिर पड़ता था, और फिर तिरछा ( एक ओर ) गिरते अपने आप को किसी प्रकार ( अपने ) एक ओर के पखों में सँभाल लेता था, अभ्यास न होनेके कारण पृथ्वी पर रेंगने से चक्कर खाकर मैं थक गया, ( अपने मार्ग पर ) एक भी कदम बढ़ाकर ही मैं निरन्तर मुँह ऊपर को कर लेता था और हाँफ जाता था, धूल से सन कर धूसर रग का हुआ जब मैं रेंग रहा था तो मेरे मन मे नीचे लिखे विचार उठे—"निश्चय ही अत्यन्त कष्टदायक अवस्थाओं में भी इस ससार मे प्राणियों के आचरण ( अपने ) जीवन से उदास

समभून्मनसि—'अतिकष्टास्ववस्थास्वपि जीवितनिरपेक्षा न भवन्ति खलु जगति प्राणिना प्रवृत्तयः। नास्ति जीवितादन्यदभिमततरमिह जगति सर्वजन्तूनामेव, उपरतेऽपि सुगृहीतनाम्नि ताते यदहमविकलेन्द्रियः पुनरेव प्राणिमि। धिङ्मामकरुण-मतिनिष्ठुरमकृतज्ञम्। अहो सोढपितृमरणशोकदारुण येन मया जीव्यते, उपकृतमपि नापेक्ष्यते, खलं हि खलु मे हृदयम्। मया हि लोकान्तरगतायामम्बाया नियम्य शोकवेगमा प्रसवदिवसात्परिणतवयसापि सता तैस्तैरुपायैः सवर्धनक्लेशमतिमहान्त-मपि स्नेहवशादगणयता यत्तातेन परिपालितस्तत्सर्वमेकपदे विस्मृतम्। अतिकृपणाः

---

दशासु प्राणिना जीवाना प्रवृत्तय प्रवर्तनरूपा. क्रिया जीवित प्राणित तत्र निरपेक्षा गतस्पृहा न भवन्ति न स्यु। इह जगत्यस्मिँल्लोके सर्वजन्तूनामेव सर्वप्राणिनामेव जीवितादन्यत्किमप्य-भिमनतर वाञ्छिततर नास्ति। तत्रार्थे हेतुमाह—यदहमिति। यद्यस्मात्कारणात्सुगृहीत सर्वदा ग्रहणयोग्य नाम यस्यैवभूते ताते पितर्युपरतेऽपि मृतेऽप्यविकलानि विषयग्रहणासमर्थानीन्द्रि-याणि यस्यैवभूतोऽहं पुनरेव साप्रतमेव प्राणिमि जीवामि अतो मा धिगस्तु। अत्र धिग्योगे मामिति द्वितीया। मा विशेषयन्नाह—अकरुणेति। अकरुणम्। निर्घृणमित्यर्थ। अतिनिष्ठुर-मतिक्रूरम्। कृत जानातीति कृतज्ञ न कृतज्ञमकृतज्ञम्। अहो इति। अहो आश्चर्ये। सोढ क्षमितो य पितृमरणशोकस्तेन दारुण भीषण यथा स्यात्तथा मया जीव्यते तेन बहुकालमुपकृत तदपि नापेक्ष्यते। तस्याप्यपेक्षा न क्रियत इति भाव। खलिवति। खलु निश्चयेन। मे मम हृदय चित्त खल पिशुनम्। उपकारानभिज्ञत्वादिति भाव। मयेति। हि निश्चितम्। मया तत्पूर्वोक्त सर्वमखिलमेकपद एकदैव विस्मृतमित्यन्वय। तत्किमित्यत आह—लोकान्तरेति। लोकान्तरगताया परलोकप्राप्तायामम्बाया जनन्या शोकवेग शोचनप्रवाहं नियम्य निरुध्य प्रसवदिवसान्मजन्मदिनादारभ्य परिणत वयो यस्यैवभूतेनापि सता तैस्तैरुपायै क्षुधानिद्रा-पिपासोपशमार्थप्रतीकारै। सवर्धनक्लेशमिति। स्नेहवशात्पुत्रप्रीतिमाहात्म्यात् अतिमहान्त-मपि अत्यायतमपि मत्सवर्धनक्लेशमगणयता क्लेशेषु तद्गणनामकुर्वता। यदिति हेत्वर्थे। तातेन पित्रा परि सामस्त्येन पालितो वृद्धिं प्रापित। खलु निश्चयेन। अमी मे प्राणा अतिकृपणा

---

नहीं होते। ससार मे सभी जन्तुओ का ( अपने निजी ) जीवन से अधिक इष्ट कोई पदार्थ नहीं है। क्योंकि भली प्रकार ग्रहण करने योग्य नाम वाले ( आदरपूर्वक स्मरणीय ) पिता के इस प्रकार ( मेरी आँखों के सन्मुख ही ) मर जाने पर भी मै सब समर्थ इन्द्रियो वाला पुन जी ही रहा हूँ! मुझ निर्दय, क्रूर तथा कृतघ्न को धिक्कार है! आश्चर्य है कि पिता की मृत्यु के शोक को सहकर इतनी कठोरता से मै जी रहा हूँ, ( अपने पिता द्वारा मुझ पर ) किये गये उपकारों पर भी कोई ध्यान नहीं देता—उनकी भी कोई चिन्ता मुझे नहीं है। वस्तुत मेरा हृदय दुष्ट है। जब मेरी माता परलोक को चली गयी थी ( अर्थात् मर गयी थी ) तब अपने शोक के प्रवाह को कुचल कर मेरे जन्म के समय से ही मुझे वृद्ध हुए भी मेरे पिता ने, मेरे पालन म हुए कष्टो को ( मेरे प्रति ) स्नेह के कारण कुछ न समझ कर भिन्न भिन्न उपायो द्वारा जो मुझे पाला था वे सारी बातें मैंने एकदम ही भुला दीं! निस्सन्देह, मेरा यह जीवन अत्यन्त

खल्वमी प्राणाः, यदुपकारिणमपि तातं क्वापि गच्छन्तमद्यापि नानुगच्छन्ति, सर्वथा न कश्चिन्न खलीकरोति जीविततृष्णा, यदीदृगवस्थमपि मामयमायासयति जलाभिलाषः। मन्ये चागणितपितृमरणशोकस्य निर्घृणतैव केवलमियं मम सलिलपानबुद्धिः। अद्यापि दूर एव सरस्तीरम्। तथा हि। जलदेवतानूपुररवानुकारि दूरेऽद्यापि कलहंसविरुतमेतत्। अस्फुटानि श्रूयन्ते सारसरसितानि। विप्रकर्षाद्दाशामुखविसर्पणविरलः सञ्चरति नलिनीखण्डपरिमलः। दिवसस्येयं कष्टा दशा वर्तते। तथा हि। रविरम्बरतलमध्यवर्ती स्फुरन्तमातपमनवरतमनलधूलिनिकरमिव विकिरति करैः। अधिकामुपजनयति तृषा

---

अतिशयेन जीविततोलुपा अतितुच्छा। यदिति हेतौ। उपकारिणमप्युपकृतिविधायकमपि तात पितर क्वाप्यनिर्दिष्टस्थले गच्छन्त व्रजन्तमद्यापि साम्प्रतमपि नानुगच्छन्ति नानु व्रजन्ति। सर्वथा जीविततृष्णा न कश्चिन्न खलीकरोति। द्वौ नञौ प्रकृतमर्थं सूचयत इति। सर्वमेव खलीकरोतीत्यर्थः। यदीदृगवस्थमपि शोकाकुलमपि मामयं जलाभिलाष पानीयग्रहणाध्यवसाय आयासयति खेदं जनयति। च पुनरर्थे। अह मन्ये जाने। इय मम सलिलपानबुद्धिर्जलपानेच्छा केवल निर्घृणतैवाननुकम्पितेव। कीदृशस्य मम। अगणितेति। अगणितो न गणनविषयीकृत पितृमरणशोको येन स तथा तस्य। अद्यापीयतागतेनापि सरस्तीर कासारतट दूर एव। तदेव दर्शयति—तथा हीति। जलेति। जलदेवताना जलाधिष्ठात्रीणा नूपुराणा पादकटकाना यो रव शब्दस्तदनुकारि तत्सादृश्यभाग्यद्यापि कलहंसविरुत कादम्बकूजितमेतद्दूरे। तथा सारसरसितानि लक्ष्मणकूजितान्यस्फुटान्यव्यक्तानि श्रूयन्त आकर्ण्यन्ते। विप्रकर्षादिति। विप्रकर्षाद्दूराच्चाशामुखेषु दिग्वदनेषु विसर्पण प्रसरण तेन विरलो न्यूनो नलिनीखण्डपरिमल कमलवनामोद सञ्चरति इतस्तत प्रसरति कदाचिद्दारणधर्माभावे मार्गसौलभ्याद्दूरेऽपि गन्तुं शक्यत इत्यत आह—दिवसेति। दिवसस्य वासरस्येय प्रत्यक्षोपलभ्यमाना कष्टा दशा मध्यावस्था वर्तते। तदेव दर्शयति—तथा हीति। रवि सूर्योऽम्बरतलमध्यवर्ती व्योममध्यगामी।

---

तुच्छ है कि जो कहीं जाते उपकारी भी पिता का अनुगमन नहीं कर रहा है। निश्चय ही ऐसा कोई नहीं है जिसको जीवित रहने की अभिलाषा दुष्ट न बना देती हो! क्योंकि इस अवस्था वाले भी मुझको जल (पीने) की इच्छा सता रही है! और मैं मानता हूँ कि पिता के मरने के शोक की ओर ध्यान न देकर इस प्रकार जल पीने की इच्छा केवल क्रूरता ही है! अब तक भी झील का किनारा बहुत दूर है। क्योंकि जल परियों के घुंघरुओं की झनझनाहट से मिलता जुलता कलहंसों का शब्द अभी तक भी दूर ही है, सारसों की चिल्लाहट अभी तक अस्पष्ट ही सुनाई देती है और नलिनियों की क्यारियों से उठी सुगन्ध, दूरी से दिशाओं में फैल जाने के कारण पतली पड़ी हुई इधर-उधर फैल रही है। और दिन की (इस समय की) अवस्था भी अत्यन्त कष्टदायक हो गयी है—उदाहरणत, आकाश के मध्य भाग पर पहुँचा हुआ सूर्य निरन्तर अपनी लहरानी ऊष्मा को, चिल चिलाती धूप को अपनी किरणों से निरन्तर ऐसे बिखेर रहा है जैसे कि हाथों से अग्नि की धूल के

सन्तप्तपांसुपटलदुर्गमा भूः। अतिप्रबलपिपासावसन्नानि गन्तुमल्पमपि मे नालमङ्गकानि। अप्रभुरस्म्यात्मनः। सीदति मे हृदयम्। अन्धकारतामुपयाति चक्षुः। अपि नाम खलो विधिरनिच्छतोऽपि मे मरणमथापपादयेत्।

एवं चिन्तयत्येव मयि तस्मात्सरसोऽदूरवर्तिनि तपोवने जाबालिर्नाम महातपा मुनिः प्रतिवसति स्म। तत्तनयश्च हारीतनामा मुनिकुमारकः सनत्कुमार इव सर्वविद्यावदातचेताः, सवयोभिरपरैस्तपोधनकुमारकैरनुगम्यमानस्तेनैव पथा द्वितीय इव भगवा-

---

अनवरतेति। अनवरतमविच्छिन्नं स्फुरन्तं दीप्यमानमातपं प्रकाशमनलधूलिनिकरमिव वह्निकणिकासमूहमिव करैः किरणैर्विकिरति क्षिपति। अधिका तृषा पिपासामुपजनयति निष्पादयति। सततमुष्णं यत्पांसुपटलं धूलिसमूहस्तेन दुर्गमा दुःखेन गन्तुं शक्या भूः पृथ्वी। अतीति। अतिप्रबलात्यधिका या पिपासोदन्या तयावसन्नानि खिन्नानि मे ममाङ्गकानि शरीरावयवा अल्पमपि स्वल्पमपि गन्तुं नालं न समर्थानि। किं बहुनात्मनो देहेन्द्रियसंघातस्याप्यप्रभुरसमर्थोऽस्मि। 'अस भुवि' धातुः। लडुत्तमैकवचनम्। देहेन्द्रियादिकमपि स्वाधीनं मे नास्तीति भावः। मे मम हृदयं सीदत्यवशीर्यते। चक्षुरपि नेत्रमप्यन्धकारतां तिमिरतामुपयाति प्राप्नोति। अन्धकाराकुलं भवतीत्यर्थः। नामेति कोमलामन्त्रणे। अथेत्यानन्तर्ये। खलः अशुभकरणाद्दुर्जनो विधिर्विधातानिच्छतोऽप्यसमीहमानस्यापि मे मम मरणं मृत्युमुपपादयेत्कुर्यात्।

इत्येवं पूर्वोक्तप्रकारेण मयि चिन्तयत्येव विचारयत्येव यद्भूत्तदाह—तस्मादिति। तस्मात्पूर्वोक्तात्सरसोऽदूरवर्तिनि निकटस्थायिनि तपोवने तापसाधिष्ठितकानने। नामेति कोमलामन्त्रणे। जाबालिनामा महदत्युग्रं तपो यस्यैवंभूतो मुनिरृषिः प्रतिवसति स्म। निवासं कृतवानित्यर्थः। तत्तनयश्चेति। तस्य तनयः सुतः। च पुनरर्थे। हारीत इति नाम यस्यैवंविधः मुनिकुमारकः। स्वल्पवया इत्यर्थः। तदेव पूर्वोक्तं पम्पाभिधानं कमलसरः सिस्नासुः स्नातुमिच्छुः। स्नान्तस्नाधातो रूपम्। तत्रोपागमदित्यन्वयः। तमेव विशेषयन्नाह—सनत्कुमारेति।

---

समूह को (जलते अंगारों को) बिखेर रहा हो। तपी हुई रेत की तह के कारण कठिनता से चलने योग्य भूमि अधिकाधिक प्यास लगा रही है। अत्यन्त प्रबल प्यास से हतोत्साह मेरे अंग थोड़ा भी चलने में समर्थ नहीं है। मैं अपने वश में नहीं हूँ। मेरा हृदय (निराशा से) बैठा जाता है। मेरी दृष्टि धुंधली पड़ रही है। शायद दुष्ट दैव मेरी मृत्यु आज ही सम्पन्न कर देगा, भले ही मैं उसे नहीं चाहता हूँ।

मैं इस प्रकार सोच ही रहा था कि उस सरोवर से बहुत दूर स्थित नहीं, (समीप ही विद्यमान) एक तपोवन में जाबालि नाम का एक महातपस्वी मुनि रहता था और उसका पुत्र हारीत नाम का एक युवा तपस्वी, अपने बराबर की अवस्था (वय) वाले दूसरे तपस्विकुमारों से अनुगम्यमान, उसी मार्ग से (जहाँ कि मैं लेटा हुआ था) उस सरोवर में स्नान करने की इच्छा से वहाँ आ गया) वह मुनिकुमार, सनत्कुमार की भाँति सब विद्याओं के पढ़ने से परिष्कृत हुए मन वाला था, अपनी अत्यन्त अधिक तेजस्विता के कारण उसकी आकृति

न्विभावसुरतितेजस्वितया दुर्निरीक्ष्यमूर्तिः, उद्यतो दिवसकरमण्डलादिवोत्कीर्णः, तडिद्भिरिव रचितावयवः, तप्तकनकद्रवेणेव बहिरुपलिप्तमूर्तिः, पिशङ्गावदातया देहप्रभया स्फुरन्त्या सबालातपमपि दिवसं सदावानलमिव वनमुपदर्शयन्, उत्तप्तलोहलोहिनीनामनेकतीर्थाभिषेकपूतानामंसस्थलावलम्बिनीनां जटानां निकरेणोपेतः, स्तम्भितशिखाकलापः खाण्डववनदिधक्षया कृतकपटपटुवेष इव भगवान्पावकः, तपोवनदेवतानूपुरानुकारिणा धर्मशासनकटकेनेव स्फटिकेनाक्षवलयेन दक्षिणश्रवण

---

सनत्कुमारो वैधात्रस्तद्वदिव सर्वविद्यास्ववदातं शुद्धं चेतो मनो यस्य स । सवयोभिरिति । सवयोभिः सदृशवयोभिरपरैस्तपोधनकुमारकैस्तापसशावैरनुगम्यमानस्तेनैव पथा तेनैव मार्गेण । उपागमदिति पूर्वेणान्वयः । द्वितीय इवेतद्भिन्न इव भगवाञ्ज्ञानवान्विभावसुरग्निरत्युत्कृष्टं तेजो विद्यते यस्यासाविति तेजस्वी तस्य भावस्तत्ता तया दुर्निरीक्ष्या दुःखेनावलोकयितुं शक्या मूर्तिर्यस्य स तथा । उद्यत इति । उद्यत उदयं कुर्वतो दिवसकरमण्डलात्सूर्यबिम्बादिव । उत्कीर्ण उल्लिख्य कर्षित इत्यर्थः । तडिद्भिरैरावतीभिरिव रचिता निर्मिता अवयवा यस्य स । तप्त इति । तप्त उष्णो यः कनकस्य सुवर्णस्य द्रवो रसस्तेन बहिरुपलिप्ता लिम्पिता मूर्तिः शरीरं यस्य स । पिशङ्गेति । पिशङ्गा पीतावदाता निर्मला एवंविधया स्फुरन्त्या दीप्यमानया देहप्रभया शरीरकान्त्या सहबालातपेन वर्तमानं दिवसं दिनमिव सहदावानलेन वर्तमानं वनं काननमिवोपदर्शयन्प्रकाशयन् । उत्तप्तेति । उत्तप्तमुष्णीकृतं यल्लोहं कालायसं तद्वल्लोहिनीनां रक्तानामनेकानि यानि तीर्थानि तेषामभिषेकः स्नानं तेन पूतानां पवित्राणाम् । अंसेति । अंसस्थलं भुजशिरःस्थानं तत्रावलम्बिनीनां वेल्लन्तीनां जटानां निकरेण समूहेनोपेतः सहितः । स्तम्भितेति । स्तम्भितो बद्धः शिखाकलापो येन स तथा । खाण्डवेति । वह्निना जलोदरग्रस्तेन ब्राह्मणरूपेण शय्यागतेन खाण्डववनं दग्धमिति प्रसिद्धिः । दग्धुमिच्छा दिधक्षा तया कृतो विहितः कपटेन पटुः स्पष्टो वेषो येनैवंभूत इव भगवान्पावको वह्निः । तपोवनेति ।

---

को देख सकना—( उसको ताकते रहना ) कठिन था और इस प्रकार वह उठते हुए दूसरे सूर्य के समान प्रतीत होता था, वह ऐसा दिखायी देता था कि मानो उदीयमान सूर्यमण्डल म से ही काट कर बनाया गया हो ( अथवा ) बिजली में से गढ दिया गया हो। उसका शरीर मानो बाहर से पिघलाये हुए सुवर्ण के द्रव से लिपा हुआ था। अपनी कुछ कुछ पीली श्वेत जगमगाती देह कांति से वह दिन को ऐसा बना रहा था कि मानो वह प्रातःकालीन धूप से युक्त हो और वन को ऐसा दिखा रहा था कि मानो वह वनाग्नि से धधक रहा हो। वह तपाये हुए लोहे के समान लाल रंग की, विविध तीर्थों मे स्नान करके पवित्र हुई, कन्धे तक लटकतीं जटाओं के समूह से युक्त था। अपनी चोटी के बालों को बाँधे हुए वह अपनी ज्वालाओं को नियन्त्रित किये हुए ( अथवा स्थिर किये हुए ), खाण्डव वन को भस्म करने की इच्छा से बनावटी तपस्वी वेष धारी भगवान् अग्निदेव सरीखा प्रतीत हो रहा था। तपोवन की परियों के नूपुर सी प्रतीत होती, सभी धार्मिक आदेशों के चक्र ( अर्थात् संग्रह ) सरीखी

विलम्बिना विराजमानः सकलविषयोपभोगनिवृत्त्यर्थमुपपादितेन ललाटपट्टके त्रिसत्येनेव भस्मत्रिपुण्ड्रकेणालङ्कृतः, गगनगमनोन्मुखबलाकानुकारिणा स्वर्गमार्गमिव दर्शयता सततमुद्ग्रीवेण स्फटिकमणिकमण्डलुनाध्यासितवामकरतलः, स्कन्धदेशावलम्बिना कृष्णाजिनेन नीलपाण्डुभासा तपस्तृष्णानिपीतेनान्तर्निपतता धूमपटलेनेव परीतमूर्तिः, अभिनवबिससूत्रनिर्मितेनेव परिलघुतया पवनलोलेन निर्मांसविरलपार्श्वकपञ्जरमिव गणयता वामांसावलम्बिना यज्ञोपवीतेनोद्भासमानः देवतार्चनार्थमा-

---

स्फाटिकेन स्फटिकमणिनिर्मितेनाक्षवलयेनाक्षमालिकया विराजमानः शोभमान । अक्षवलय विशेषयन्नाह—दक्षिणेति । दक्षिणोऽपसव्यो य· श्रवण कर्णस्तत्रावलम्बिना । तपोवनेति । तपोवनदेवता तपोवनाधिष्ठात्री तस्य नूपुर पादकटकं तदनुकारिणा तत्सदृशेन । केनेव । धर्मो विधिनिषेधादिरूपस्तस्य शासनमाज्ञा तस्य कटकेनेव वलयेनेव । सकलविषयस्य समग्रपदार्थस्य य उपभोग परिभोगस्तस्मान्निवृत्तिरुपरमस्तदर्थं तन्निमित्तमुपपादितेन विहितेन । ललाटेति । ललाटपट्टकेऽलिकफलके मनोवाक्कायलक्षणेन त्रिसत्येनेव भस्मत्रिपुण्ड्रकेण विभूतित्रितिलकेनालङ्कृतो विभूषित । गगनेति । गगनगमने उन्मुखा ऊर्ध्वानना या बलाका बिसकण्ठिका तदनुकारिणा तत्सदृशेन स्वर्गमार्गमिव त्रिदिवपन्थानमिव दर्शयता प्रकाशयता सतत निरन्तरमुद्ग्रीवेणोर्ध्वकन्धरेणैवभूतेन स्फटिकमणिकमण्डलुना स्फाटिककुण्डिकयाध्यासितमाश्रित वामकरतल यस्य स । स्कन्धेति । कृष्णाजिनेन कृष्णचर्मणा परीता व्याप्ता मूर्तिर्यस्य स तथा । केनेव । धूमपटलेनेव दहनकेतनसमूहेनेव । कीदृशेन । तपो मे भवत्विति तपस्तृष्णा तया निपीतेनेव । कीदृशेन । अन्त शरीराभ्यन्तरे निपतता प्रवेश कुर्वता । कीदृशेन चर्मणा । स्कन्धदेशेऽवलम्बत इत्येवशील तत्तेन नीला पाण्डवी च भा यस्य तत्तेन । अभीति । यज्ञोपवीतेन यज्ञसूत्रेणोत्प्राबल्येन भासमानो दीप्यमान । केनेव । अभिनव प्रत्यग्र यद्बिससूत्रं

---

स्फटिकमणिनिर्मिता, दायें कान में लटकती अक्षमाला से सुशोभित था। सभी ( प्रकार के ) ऐन्द्रियिक सुखों के उपभोग से दूर रहने के लिये ही मानो तीन बार दुहरायी हुई प्रतिज्ञा-सदृश, मस्तक पर ( पवित्र ) भस्म से बनाये हुए पुण्ड्र ( तीन रेखाओं वाले चिन्ह ) से सुशोभित था। उसके बायें हाथ मे स्फटिकमणि निर्मित एक कमण्डलु था—वह निरन्तर इस प्रकार पकड़े रखा जाता था कि उसकी गर्दन ऊपर की ओर रहती थी—इसीलिये वह कमण्डलु आकाश में अभी अभी उड़ जाने वाले तथा स्वर्ग का मार्ग दिखला रहे सारस के समान लग रहा था। कन्धों पर लटकते कृष्ण मृग के चर्म से ढके शरीर वाला वह ऐसा प्रतीत हो रहा था कि मानो तप करने की अपनी प्रबल लालसा से निगला गया नीला-सा श्वेत मेघ ( अभ्र ) उसके शरीर से निकल कर उसको घेर रहा हो। ( अपने ) बाँये कन्धे पर लटकते उस यज्ञोपवीत से वह उज्ज्वल प्रतीत हो रहा था जो कि मानो ताजे बिस तन्तुओं का बना हुआ था और अत्यन्त हल्का होने के कारण वायु से हिल रहा था ( इसीलिये ) उसके ( स्पष्टतया दिखायी दे रहे ) मांस रहित पार्श्वस्थ अस्थिपंजर को गिन रहा सा प्रतीत

गृहीतवनलताकुसुमपरिपूर्णपर्णपुटसनाथशिखरेणाषाढदण्डेन व्यापृतसव्येतरपाणिः, विषाणोत्खातामुद्वहता स्नानमृदमुपजातपरिचयेन नीवारमुष्टिसंवर्धितेन कुशकुसुमलतायास्यमानलोलदृष्टिना तपोवनमृगेणानुयातः, विटप इव कोमलवल्कलावृतशरीरः, गिरिरिव समेखलः, राहुरिवासकृदास्वादितसोमः, पद्मनिकर इव दिवसकरमरीचिपः,

कमलनालतन्तुभ्तेन निर्मितेनेव रचितेनेव परिलघुतया परि सामस्त्येन स्वल्पतयाणुतया पवनेन समीरणेन लोलेन चपलेन। किं कुर्वता। निर्मांस पललरहित विरलमसकीर्णं यत्पार्श्वकपञ्जर पार्श्वगतास्थिसमुदायमिव गणयता तत्सख्या कुर्वता। यज्ञोपवीत विशिनष्टि—वाम इति। वाम सव्यो योऽस स्कन्धस्तदवलम्बिना तदवस्थानशीलेन। अथ मुनिं विशेषयन्नाह—देवतेति। देवतार्चनार्थं परमेश्वरपूजार्थमा समन्तादगृहीतान्यात्तानि वनलताकुसुमान्यरण्यव्रततिपुष्पाणि ते परिपूर्णं भृत यत्पर्णपुट तेन सनाथ सहितं शिखर प्रान्त यस्यैवभूतेनाषाढदण्डेन व्यापृतो व्यापारयुक्त सव्येतरो दक्षिण पाणिर्हस्तो यस्य स तथा। तपोवनेति। तपोवनसबन्धी यो मृगो हरिण। जात्येकवचनम्। तेनानुयातोऽनुगत। कि कुर्वता मृगेण। विषाण शृङ्ग तेनोत्खातामुत्खनिता स्नानमृदमाप्लवमृत्स्नामुद्वहता धारयता। मृग विशेषयन्नाह—उपेति। उपजात समुत्पन्न परिचय सबन्धविशेषो मुनिभि सार्धं यस्य स तथा तेन। नीवारेति। नीवारो वनव्रीहिस्तस्य मुष्टि प्रसिद्धा तया सवर्धितेन वृद्धिं प्रापितेन। कुशेति। कुशा दर्भा, कुसुमानि पुष्पाणि, लता व्रतत्य, ताभिरायास्यमाना खेद प्राप्यमाणात एव लोला चपला दृष्टिर्यस्य स तेन। प्रकारान्तरेण मुनिपुत्र विशिनष्टि--विटप इति। विटपो वृक्षस्तद्वदिव। सादृश्यमाह—कोमलेति। कोमलं सुकुमार यद्वल्कल चोच तेनावृतमाच्छादित शरीर यस्य स तथा। अस्यापि मुनित्वेन वल्कलधारित्वात्साम्यम्। गिरिरिवेति। गिरि पर्वतस्तद्वदिव। उभयो. साम्यमाह—समेखल इति। सह मेखलया मौञ्ज्या वर्तते य स तथा। पक्षे मेखलाद्रेर्मध्यभागस्तया सह वर्तमान इत्यर्थ। राहुरिवेति। राहु सैंहिकेयस्तद्वदिव। एतयो

होता था। वह दायें हाथ मे एक 'आषाढ' का दड लिया हुआ था। उस दड के सिरे पर देवता की पूजा के लिये, चुनकर लिये हुए वनलताओं के फूलों से भरा एक दोना था। उसके पीछे तपोवन का एक वह हरिण चल रहा था जिसने (अपने) सींगों से खोदी हुई (उसके) स्नानार्थ मिट्टी उठायी हुई थी, वह उससे खूब परिचित हो गया था, मुट्ठी भर 'नीवार' अन्न पर पाला गया था और (चारो ओर विद्यमान) कुशा घास के फूलो से तथा लताओं से आकृष्ट होने के कारण उसकी आँखें चञ्चल थीं। वैसे ही उसका शरीर कोमल वल्कल वस्त्रों से ढका हुआ था। ढालू पार्श्वों[1] से युक्त (समेखल), पर्वत की भाँति वह भी मेखला से युक्त था। राहु जैसे सोम-चन्द्रमा को प्राय निगल चुका है—उसको ग्रहण लगा हुआ है—इसी भाँति अनेक बार सोम रस का स्वाद लेने के कारण वह भी 'आस्वादित सोम' था (पूर्णतया खिलने के लिये) सूर्य की किरणो का पान (ग्रहण) करने वाले (दिवस कर मरीचिप) कमल समूह की भाँति वह भी (तपश्चर्या के नियमों का पालन करता हुआ ऊपर

१ मेखला, मध्यभाग।

नदीतटतरुरिव सततजलक्षालनविमलजटः, करिकलभ इव विकचकुमुददलशकल-सितदशनः, द्रौणिरिव कृपानुगतः, नक्षत्रराशिरिव चित्रमृगकृत्तिकाश्लेषोपशोभितः, घर्मकालदिवस इव क्षपितबहुदोषः, जलधरसमय इव प्रशमितरजःप्रसरः, वरुण इव

साम्यमाह—असकृदिति। असकृन्निरन्तरमास्वादित सोमो ज्योतिष्टोमयागसाधनद्रव्य येन स तथा। एतेनात्यन्तसोमयज्ञकारित्व सूचितम्। पक्षेऽसकृद्बहुवारमास्वादितो ग्रस्त सोमश्चन्द्रो येनेति विग्रह। पद्मेति। पद्मानां कमलाना निकर समूहस्तद्वदिव। उभयो साम्यमाह—दिवसेति। दिवसकरस्य सूर्यस्यातपभयान्मरीचीन्पाति रक्षति स तथा। पक्षे सूर्यविकासित्वा-त्सूर्यमरीचीन्पाति पिबति य स तथेति विग्रह। नदीति। नद्यास्तटिन्यास्तट प्रतीर तस्मि-स्तरुर्वृक्षस्तद्वदिव। उभयो सादृश्यमाह—सततमिति। सतत निरन्तर त्रिसाथ जलेन पानीयेन क्षालन तेन विमला जटा सटा यस्य स। पक्षे सततजलक्षालनेन विमला जटा अवरोहा यस्येति विग्रह। करीति। करिणां हस्तिना कलभस्त्रिंशदब्दको गजस्तद्वदिव। उभयोस्तुल्य-तामाह—विकचेति। विकचानि स्फुटानि कुमुदानि केरवाणि तेषा दलानि पर्णानि तेषा शकलानि खण्डास्तद्वत्सिता. शुभ्रा दशना दन्ता यस्येति स तथा। उभयसाम्यादभङ्गश्लेष। द्रौणिरिवेति। द्रौणिरश्वत्थामा तद्वदिव। उभयो शब्दसाम्यमाह—कृपेति। कृपा दु ख-हानेच्छा तयानुगत सहित। पक्षे कृप कृपाचार्यस्तेनोपगत इति विग्रह। नक्षत्रेति। नक्षत्राणां तारकाणा राशि समूहस्तद्वदिव। अनयो साम्यमाह—चित्रेति। चित्रमृगस्य कृत्तिका चर्म तेनाश्लेष सबन्धस्तेन उपशोभित शोभा प्राप्त। पक्षे चित्रा त्वाष्ट्री मृगो मृगशिर, कृत्तिका प्रसिद्धा, आश्लेषा सार्पी, ताभिरुपशोभित। घर्मेति। घर्मकाल उष्ण-कालस्तस्य दिवसो दिन तद्वदिव। उभयो साम्यमाह—क्षपित इति। क्षपिता क्षय प्रापिता

को मुँह करके ) सूर्य की किरणो का पान करता था। निरन्तर जल से धोयी गयी ( अर्थात् पक रहित ) अतएव निर्मल जड़ों वाले वृक्ष की भाँति वह भी निरन्तर ( स्नान के समय ) जल से धोयी गयी अतएव स्वच्छ जटाओं वाला था। पूर्ण विकसित श्वेत कमल की पखुडियों के टुकडों के समान श्वेत गजदन्त वाले गजशिशु की भाँति वह भी पूर्ण विकसित श्वेत कमल की पखु डियों के टुकडों के समान श्वेत दान्तोंवाला था। योद्धा कृप द्वारा अनुगत ( कृपानु-गत ) अश्वत्थामा की भाँति वह भी अनुकम्पा से युक्त होने से कृपानुगत था। चित्ता, मृग-शिरा, कृत्तिका, आश्लेषा नक्षत्रों से शोभित नक्षत्रीयनभोमण्डल[1] की भाँति वह चितकबरे हरिण की खाल के सयोग से ( अदृढता से पहनी हुई चितकबरी, हरिण की खाल से ) सुशो-भित था। बहुत अधिक छोटी हुई ( क्षयित ) रात्रियों वाले ग्रीष्मऋतु के दिवस की भाँति वह भी अपने बहुत से दोषों से अपने को रहित किये हुए ( क्षयित बहुदोष ) था। धूल उड़ाने का निराकरण किये हुए वर्षाकाल की भाँति वह भी ( अपने मे ) रजोगुण के व्यापार कामादि को नियन्त्रित किये हुआ ( प्रशमितरज प्रसर ) था। ( जल का स्वामी होने के कारण ) जल को वासस्थान बनाये हुए वरुण की भाँति वह भी ( तपस्या के लिये ) जल में

१ नक्षत्र राशि ( मेष, वृष आदि ) की भाँति।

कृतोदवासः, हरिरिवापनीतनरकभयः, प्रदोषारम्भ इव सन्ध्यापिङ्गलतारकः, प्रभातकाल इव बालातपकपिलः, रविरथ इव दृढनियमिताक्षचक्रः, सुराजेव निगूढमन्त्रसाधनक्षपितविग्रहः, जलनिधिरिव करालशङ्खमण्डलावर्तगर्तः, भगीरथ इवासकृद्दृष्टगङ्गा-

-बहवो दोषा रागादयो येन स । पक्षे क्षपिता बह्वी दोषा रात्रिर्येनेति विग्रह । जलेति । जलधरसमय प्रावृट्कालस्तद्वदिव । उभयोस्तुल्यतामाह—प्रशमितेति । प्रशमित शान्ति प्रापितो रज प्रसर प्रवर्तकगुणव्यापारो येन स । पक्षे प्रशमितो रज प्रसरो धूलिविस्तारो येनेति विग्रह । वरुण इति । वरुण प्रचेतास्तद्वदिव । उभयो साम्यमाह—कृतोदेति । कृतो विहित उदवासो व्रतविशेषो येन स । पक्षे कृत उदकेषु वासो निवासो येनेति विग्रह । उदकस्योदादेश । हरिरिति । हरिरिव कृष्ण इव । उभयोरैक्यमाह—अपनीतेति । अपनीतो दूरीकृतो नरको दुर्गति तद्भय येन स । पक्षे नरकनाम्नो दैत्यस्य भय येनेति विग्रह । प्रदोषेति । प्रदोषो यामिनीमुख तस्यारम्भ प्रारम्भस्तद्वदिव । उभयोरैक्यमाह—संध्येति । संध्या दिवसरजन्यो सधिस्तद्वत्पिङ्गला तारैव तारका कनीनिका यस्य स तथा । इद महापुरुषोपलक्षणम् । तदुक्तमन्यत्र—'क्षुद्रोऽपि चक्रवर्ती स्यात्पीततारकचक्षुषि' इति । पक्षे सध्याकृता पिङ्गला तारका यस्मिन्निति विग्रह । प्रभातेति । प्रभात प्रत्यूषस्तस्य काल समयस्तद्वदिव । उभयो साम्यमाह—बालेति । बालो य सूर्यस्तस्यातप । बालश्चासावातपो वा । प्रकाशस्तद्वत्कपिलः पिङ्गल । पक्षे बालातप उद्गमनसमयवर्त्यातपस्तेन कपिल पिङ्गल । पीतरक्त इत्यर्थ । रविरथ इति । रवेः सूर्यस्य यो रथ स्यन्दनस्तद्वदिव । उभयो साम्यमाह—अक्षेति । दृढ यथा स्यात्तथा नियमित निबद्धमक्षाणामिन्द्रियाणा चक्रं समूहो येन सः । पक्षे दृढे नियमिते

रह ( खड़ा हो ) चुका था । नरकासुर के भय को दूर किये हुए विष्णु की भाँति उसने भी नरक का भय उन्मूलित कर रखा था । सन्ध्या के धुधले प्रकाश में पीले से पड़े तारों वाले सन्ध्याकाल की भाँति वह भी सन्ध्या सरीखी पीली-पीली पुतलियों वाला होने से 'सन्ध्या-पिङ्गल तारक' था । ( बाल ) प्रातःकालीन ( नई ) धूप से पीले से रगवाले प्रात काल की भाँति वह भी प्रात कालीन धूप की भाँति पीत रग ( के चेहरे वाला ) था । दृढ़ता से बाधी गयी धुरी तथा पहियों वाले सूर्यरथ की भाँति वह अपने सम्पूर्ण ( अक्ष चक्र ) इन्द्रियमण्डल को दृढ़ता से नियन्त्रित किये हुआ था । अपनी मन्त्रणाओं को सर्वथा गुप्त रखने वाले तथा ( सुसज्जित ) ( गजाश्वादि ) सेना द्वारा युद्ध ( की सम्भावना ) को नष्ट किये हुए किसी अच्छे राजा की भाँति वह भी ( अलौकिक शक्तियों को प्राप्त करने के लिये ) चुपचाप मन्त्र साधना द्वारा शरीर को दुबला किये हुआ ( क्षपित-विग्रह ) था । खुरदरे शङ्ख, मण्डल बनाती भँवरों और ( गहरे ) गर्तों वाले, ( अथवा खुरदरे शखों तथा गहरी बल्खाती भँवरों वाले ) समुद्र की भाँति वह भी ऊँचे उठे हुए किनारों वाली तथा गहरे गड्ढों वाली कपोलास्थि वाला 'करालशङ्खमण्डलावर्तगर्त' था ( स्वर्ग से समुद्र[1] में उतरी गगा के ( क्रमिक ) अवतरण को बार-बार प्रत्यक्ष किये हुए भगीरथ की भाँति वह भी गगा ( नदी ) में ले

1. पृथ्वी-पर होती हुए समुद्र में ।

वतारः, भ्रमर इवासकृदनुभूतपुष्करवनवासः, वनचरोऽपि कृतमहालयप्रवेशः, असयतोऽपि मोक्षार्थी, सामप्रयोगपरोऽपि सततावलम्बितदण्डः, सुप्तोऽपि प्रबुद्धः, सनिहितनेत्रद्वयोऽपि परित्यक्तवामलोचनस्तदेव कमलसरः सिस्नासुरुपागमत् ।

अवचक्रे यस्मिन्निति विग्रह । तत्राक्षो मध्यप्रदेश । चक्र प्रसिद्धम् । सुराजेवेति । सुष्ठु शोभनो यो राजा नृपतिस्तद्वदिव । तयो साम्यमाह—निगूढेति । निगूढ रहो यन्मन्त्रसाधन देवताराधन तेन क्षपित कृशतां नीतो विग्रह शरीरं येन स । पक्षे निगूढोऽतिगुप्तो मन्त्रो रहस्यालोचन साधन गजाश्वादि ताभ्या क्षपित क्षय नीतो विग्रह शत्रुजनितक्लेशो येनेति विग्रह । जलनिधिरिति । जलनिधि समुद्रस्तद्वदिव । उभयो सादृश्यमाह—करालेति । कराल यच्छङ्खमण्डल भालश्रवोन्तर तत्रावर्तेन गर्तो यस्य स तथा । तादृशावर्तश्च महातपस्वि-लक्षणम् । पक्षे करालानि जिह्मानि यानि शङ्खमण्डलानि षोडशावर्तवृन्दान्यावर्तं पयसां भ्रम एते गर्ते अगाधप्रदेशे यस्येति विग्रह । भगीति । भगीरथ सगरप्रपौत्रस्तद्वदिव । उभयो सादृश्यमाह—असकृदिति । असकृन्निरन्तर दृष्टोऽवलोकितो गङ्गाया अवतारो घट्टो येन स । 'घट्टस्तीर्थावतारे' इति कोश । पक्षे असकृत् दृष्टो गङ्गाया अवतार प्रभवो येनेति विग्रह । भ्रमर इति । भ्रमरो मधुकृत्तद्वदिव । उभयो साम्यमाह—असकृदिति । असकृद्वारवारमनु-भूतोऽनुभवविषयीकृत पुष्कर जल तेन सहित यद्वन तत्र वासो वसतिर्येन स । पक्षेऽनुभूत पुष्करवन कमलखण्डस्तत्र वासो येनेति विग्रह । वनेति । वने चरतीति वनचर । एवभूतोऽपि कृतो महालयेषूच्चैस्तरगृहेषु प्रवेशो येनेति विरोध । परिहारपक्षे महालयो ब्रह्मणि लय । तदुक्तम्—'अधोमुख्या कुण्डलिन्योर्ध्वं मुखे कृते सति ब्रह्मरन्ध्रपर्यन्त नीताया तस्यामेकान्तेनाव-स्थान ब्रह्मणि लय ' इति । यद्वा महालयो मोक्षस्तत्र कृतवसतिरित्यर्थ । असंयतेति । असयतो ऽसयमवानपि मोक्षार्थी मोक्षाभिलाषुक इति विरोध । परिहारपक्षेऽसंयतोऽबद्धोपीत्यर्थ । 'सदानित सयतश्च' इत्यभिधानचिन्तामणि । सामेति । साम सान्त्वन तत्प्रयोगपरोऽपि मैत्रीप्रयोगतत्परोऽपि सतत निरन्तरमवलम्बित आश्रितो दण्डो राजदेयद्रव्य येनेति विरोध । तत्परिहारपक्षे सामवेदप्रयोगपरोऽपि सततमवलम्बितो दण्डो यष्टिर्येनेति विग्रह । सुप्त इति ।

जाने वाली सीढियों का प्राय दर्शन किये हुआ ( होने से असकृद् दृष्ट गगा अवतार ) था । कमल वन में निवास का प्राय अनुभव किये हुए भौरे की भाँति वह भी पुष्कर ( तीर्थ के समीप के ) वनों मे निवास का अनुभव किये हुआ होने के कारण अनुभूत-पुष्करवन-वास था । यद्यपि वह वनों में विचरण करने वाला था तो भी महान् भवन में प्रवेश किये हुआ ( बड़े महल मे रहने वाला ) था ? नहीं, नहीं वह ब्रह्म मे ( अपना ) लय किये हुआ था । न बधा हुआ भी—अर्थात् सासारिक सत्ता के साथ न बन्धा हुआ भी छूटना चाहता था ? नहीं, नहीं, मोक्ष का इच्छुक था । यद्यपि वह शातिमय साधनों को प्रयुक्त करता था—( ? ) ( नहीं, नहीं, साममन्त्रों का उच्चारण करता था ) तो भी निरन्तर डडा पकड़े रहता था । नहीं, नहीं, ज्ञानी था । दो आँखें उसके समीप थीं तो भी वह बायीं आँख को छोड़े हुआ था ? नहीं, नहीं, उसने वामलोचनाओं अर्थात् स्त्रियों का छोड़ रखा था ।

प्रायेणाकारणमित्राण्यतिकरुणार्द्राणि सदा खलु भवन्ति सतां चेतांसि। यतः स मां तदवस्थमालोक्य समुपजातकरुणः समीपवर्तिनमृषिकुमारकमन्यतममब्रवीत्—'अयं कथमपि शुकशिशुरसंजातपक्षपुट एव तरुशिखरादस्मात्परिच्युतः। श्येनमुखपरिभ्रष्टेन वानेन भवितव्यम्। तथा हि। अतिदवीयस्तया प्रपातस्याल्पशेषजीवितोऽयमामीलितलोचनो मुहुर्मुहुर्मुखेन पतति, मुहुर्मुहुरत्युल्बणं श्वसिति, मुहुर्मुहुश्चञ्चुपुटं विवृणोति, न शक्नोति शिरोधरां धारयितुम्। तदेहि। यावदेवायमसुभिर्न विमुच्यते,

---

सुप्तोऽपि निद्रितोऽपि प्रबुद्धो जाग्रदवस्थ इति विरोध । परिहारपक्षे सुष्ठु शोभना सा जटा यस्येति विग्रह । लक्ष्य च—'राजा राजार्चिताङ्घ्रेरनुपचितकलो यस्य चूडामणित्व नागा नागात्मजार्धं न भसितधवलं यद्वपुर्भूषयन्ति। मा रामारागिणी भून्मतिरिति यमिना येन वोऽद्धाहि मार स सा सत्ताश्वनुस्मारणकिरणनिभा पातु बिभ्रत्त्रिनेत्र ॥' इति शृङ्गारतिलकटीकायाम्। तथा 'सन्नालिका सदासा परिकरमुदिता' इति शोभनस्तुतौ लक्ष्यान्तरमपि। सन्निहित इति। सम्यक्प्रकारेण निहित स्थापित नेत्रद्वय लोचनद्वय येनैवभूतोऽपि परित्यक्त दूरीकृत वामलोचन येनेति विरोध । परिहारपक्षे परित्यक्त वाम लोचनमालोकन येनेत्यर्थ । यद्वा ब्रह्मचारित्वात्परित्यक्त वामाया मनस्विन्या लोचन येनेत्यर्थं ।

प्रायेणेति। प्रायेण बाहुल्येनाकारणमित्राणि निदानव्यतिरेकेण प्रियकारीण्यतिशयेन करुणा परदुःखप्रहाणेच्छा तयार्द्राणि स्विन्नानि खलु निश्चयेन सदा सर्वकाल सता सज्जनाना चेतासि मनासि भवन्ति। यत स मुनिसुतो हारीताख्यो मा तदवस्थ कष्टदशापन्नमालोक्य निरीक्ष्य समुपजाता सम्यक्प्रकारेणोत्पन्ना करुणा कृपा यस्यैवभूत समीपवर्तिन निकटस्थायिनमृषिकुमारकमन्यतम मुनिसुतमब्रवीदवोचत्। अय प्रत्यक्षगत कथमपि महता कष्टेन शुकशिशु कीरपोतोऽसजातपक्षपुट एवासमुत्पन्नच्छद एवास्मात्तरुशिखराद्वृक्षप्रान्तात्परिच्युत स्रस्त । वाथवानेन कीरेण श्येन सिञ्चानकस्तस्य मुखादाननात्परिभ्रष्टेन पतितेन भवितव्यम्। तदेव दर्शयति—तथा हीति। अतिदवीयो द्राघीयस्तस्य भावस्तत्ता तया प्रपातस्य प्रपतनस्याल्पशेषमुद्धरित यस्मिन्नेवविध जीवित यस्यैवभूतोऽयमामीलिते सकुचिते लोचने नेत्रे यस्य स तथा मुहुर्मुहुर्वारंवार मुखेन पतति। अयं पक्षिणां जातिस्वभाव । मुहुर्मुहुरत्युल्बणमुत्कट श्वसिति

---

सज्जनों के हृदय निश्चय ही साधारणतया, बिना किसी ( प्रकट ) कारण के ही ( दूसरों के ) मित्र तथा अत्यन्त कृपालु होते हैं। क्योंकि उसने जब मुझे उस दशा में देखा तो उसको दया आ गयी और उसने उन बहुत से तपस्विकुमारों में से अपने निकटस्थित से कहा—'यह शुक शिशु, जिसके पर अभी तक ( पूरे ) उत्पन्न भी नहीं हुए हैं, किसी प्रकार इस वृक्ष की चोटी पर से गिर पड़ा है। अथवा यह ( सम्भवत ) किसी बाज के मुख से गिर पड़ा होगा। क्योंकि गिरने के स्थान के बहुत दूरस्थ होने के कारण इसमें जीवन बहुत कम बच गया है और आँखें मीचे हुआ बार बार मुँह के बल गिरता है, बार-बार बहुत प्रबल साँस ले रहा है, बार बार अपनी चञ्चुगुहा को खोलता है, अपनी गर्दन को सम्भाल नहीं पाता है। तो आ, मरने से

तावदेव गृहाणेमम्। अवतारय सलिलसमीपम्' इत्यभिधाय तेन मा सरस्तीरमनाययत्। उपसृत्य च जलसमीपमेकदेशनिहितदण्डकमण्डलुरादाय स्वय मामामुक्तप्रयत्नमुत्तानितमुखमङ्गुल्या कतिचित्सलिलबिन्दूनपाययत्। अम्भःक्षोदकृतसेक चोपजातनवीनप्राणमुपतटप्ररूढस्य नवनलिनीदलस्य जलशिशिराया छायाया निधाय स्वोचितमकरोत्स्नानविधिम्। अभिषेकावसाने चानेकप्राणायामपूतो जपन्पवित्राण्यघमर्षणानि प्रत्यग्रभग्नैरुन्मुखो रक्तारविन्दैर्नलिनीपत्रपुटेन भगवते सवित्रे दत्त्वार्घमुदतिष्ठत्।

---

प्राणिति। मुहुर्मुहुश्चञ्चुपुट त्रोटीपुट विवृणोति विकासयति। न शक्नोति न समर्थो भवति शिरोधरा ग्रीवा धारयितु स्थापयितुम्। तदिति। तत पूर्वोक्तहेतोरेह्यागच्छ। यावदेवाय यावत्कालमय शिशुरसुभि प्राणैर्न विमुच्यते न विश्लेषं प्राप्नोति तावदेव तावत्काल गृहाणेम शुकम्। अवतारय प्रापय सलिलसमीप पानीयसविधमिति पूर्वोक्तप्रकारेणाभिधायोक्त्वा तेनर्षिपुत्रेण मा सरस्तीर कासारतटमनाययत्प्रापयत्। उपसृत्य प्राप्य च जलसमीपम्। एकेति। एकदेशेऽन्यतरस्मिन्प्रदेशे निहितौ स्थापितौ दण्डकमण्डलू येन स तथा तत आदाय गृहीत्वा माम्। कीदृशम्। आमुक्त परित्यक्त प्रयत्नोऽन्नपानाद्यनुकूलशरीरक्रियारूपो येन स तम्। उत्तानितमूर्ध्वीकृत मुखमास्य येन स तम्। स्वयमात्मनाङ्गुल्या करशाखया कतिचित्कियन्त. सलिलबिन्दून्पानीयपृषतोऽपाययज्जलपानमकारयत्। अम्भस पानीयस्य क्षोदेन हस्तच्युतेन कृतो विहित सेक सिञ्चन यस्य स तम्। शुकपोत विशेषयन्नाह—उपेति। उपजाता नवीना नवा प्राणा असवो यस्यैवविध मामुपतट तटसमीप प्ररूढस्य जातस्य नवनलिनीदलस्य प्रत्यग्रपद्मिनीपत्रस्य जलेन पानेन शिशिराया शीतलाया छायायाम्। वैशम्पायन इत्यभिधा नाम यस्यैवविधं शुक निधाय स्थापना कृत्वैतदभिधानोऽयमिति स्वोचित स्वस्योचितं योग्य स्नानविधिमकरोदसृजत्। अभिषेकस्य स्नानस्यावसाने प्रान्ते। च पुनरर्थे। उदतिष्ठदुत्थितो बभूवेत्यन्वय। हारीत विशिनष्टि—अनेकैरिति। अनेकैर्बहुभि प्राणायामै प्राणयमै पूत पवित्र। कि कुर्वन्। जपन्स्मरन्। कानि। अघमर्षणान्यब्देवतास्तुतिरूपाणि। 'सर्वैनसामपध्वसि जप्य

---

पहले ही (अक्षरार्थ—प्राणो से वियुक्त नहीं होता है) इसको ले ले और जल के निकट उतार दे।" यह कहकर उसने मुझे उस (तपस्विकुमार) द्वारा तालाब के किनारे पर पहुँचवाया। और जल के निकट पहुँच कर उसने अपने दड तथा कमण्डलु को एक ओर रखकर स्वय मुझ असहाय (जिसने अपनी ओर से सारे प्रयत्न छोड़ दिये थे) को लेकर मेरा मुँह खोला और अगुलि से जल की कुछ बूदे पिलायीं और जल की (चूर्णभूत अत्यन्त नन्हीं) बिन्दुओं से सींचे गये मुझ को जिसमे (मानो) नया ही जीवन उत्पन्न हो गया था तट के समीप उगी हुई नलिनी के पत्ते की जल से शीतल हुई छाया मे रखकर उसने अपनी प्रथानुसारी (उचित) स्नानविधि पूरी की। और स्नान की समाप्ति पर, अनेक प्राणायामों (करके) से पवित्र हुआ, पवित्र अघमर्षण मन्त्रों का जप करता हुआ, ऊपर को मुँह किये हुआ, नलिनी के पत्ते के दोनों मे (रखे हुए) अभी-अभी तोड़े हुए लाल कमलो से भगवान्

आगृहीतधौतधवलवल्कलश्च सहज्योत्स्न इव सन्ध्यातपः करतलनिर्धूननविशदसटः प्रत्यग्रस्नानार्द्रजटेन सकलेन तेन मुनिकुमारकदम्बकेनानुगम्यमानो मा गृहीत्वा तपोवनाभिमुख शनैरगच्छत् ।

अनतिदूरमिव गत्वा दिशि दिशि सदा सन्निहितकुसुमफलैस्तालतिलकतमालहिन्तालबकुलबहुलैरेलालताकुलितनालिकेरीकलापैर्लोललोध्रलवलीलवङ्गपल्लवैरुल्लसितचूतरेणुपटलैरलिकुलझङ्कारमुखरसहकारैरुन्मदकोकिलकुलकलापकोलाहलिभिरुत्फुल्लकेत-

त्रिष्ववमर्षणम्' इति कोश । कीदृशानि । पवित्राणि स्वत एव विशदानि । कीदृक् । उन्मुख ऊर्ध्वमुख । नलिनीति । नलिन्या कमलिन्या पत्रपुटेनाधारभूतेन प्रत्यग्रभग्नैस्तत्कालगृहीत रक्तारविन्दै रक्तकमलैराधेयभूतैर्भगवते माहात्म्यवते सवित्रे श्रीसूर्यायार्घं पूजां दत्त्वा वितीर्य । अन्वयस्तु प्रागेवोक्त । कीदृक् । आगृहीतेति । स्नानानन्तरमागृहीत स्वीकृत धौत क्षालितमत एव धवल शुभ्र वल्कल चोचं येन स तथा । सहज्योत्स्न इति । सह ज्योत्स्नया कौमुद्या वर्तते य स एवभूत सध्यातप सायकालीनसूर्यातप इव । करतलेति । करतलेन हस्ततलेन यन्निर्धूननमाच्छोटन तेन विशदा निर्मला जटा सटा यस्य स । प्रत्यग्र तत्काल स्नानेनार्द्राऽर्द्रीभूता जटा सटा यस्य स तथा तेन । सकलेन समग्रेण मुनिकुमारकदम्बकेन तापसशिशुसमूहेनानुगम्यमान. । मामिति । मा वैशम्पायन गृहीत्वादाय तपोवनाभिमुख स्वाश्रमसमुख शनैर्नातिवेगेनागच्छदन्वतिष्ठत् ।

अनतिदूरमिव गत्वा । दविष्ठ पन्थानमतिक्रम्येत्यर्थ । अहमाश्रम मुनिस्थानमपश्यमिति दूरेणान्वय. । कीदृशम् । काननैर्वनैरुपगूढ व्याप्तम् । अथ वनविशेषणानि व्याख्यापयन्नाह— दिशीत्यादि । दिशिदिशि प्रतिदिश सदा सर्वकाल सनिहितानि हस्तग्राह्याणि कुसुमफलानि येषां ते । तालस्तृणराज , तिलक श्रीमान् , तमालस्तापिच्छ , हिन्ताल वृक्षविशेष , बकुल केसर , एतैर्बहुलैर्दृढै । 'नीरन्ध्र बहुल दृढम्' इति कोश । एलायाश्चन्द्रबालाया या लता

सूर्य को अर्घ्य प्रदान कर उठ खड़ा हुआ। और धोये हुए श्वेत वल्कल-वस्त्र को धारण किये हुआ और (इस कारण) चादनी के साथ मिश्रित सन्ध्याकालीन (पीली) आभा से युक्त-सा प्रतीत होता, हथेलियों से फटकार कर (रगड़कर) स्वच्छ हुई जटाओं वाला, अभी अभी किये गये स्नान से गीली जटाओ वाले उस सारे ही मुनिकुमारसमूह द्वारा अनुगम्यमान वह धीरे धीरे तपोवन की ओर चल पड़ा।

बहुत अधिक दूर न चलकर ही मैंने आश्रम देखा। यह आश्रम प्रत्येक दिशा मे सटकर लगे हुए वृक्षों वाले जगलो से घिरा हुआ था[1]। इन जगलो मे फूल तथा फल सदा प्राप्त हो जाते थे, वे ताल, तिलक, तमाल, हिन्तल तथा बकुल वृक्षो से भरपूर थे, उनमें इलायची की बेलों से व्याप्त नारियल के वृक्षों के कुन्ज विद्यमान थे, लोध्र, लवली तथा लवङ्ग पौधों के पत्ते लहरा रहे थे, आम के पराग के बादल ऊपर उठ रहे थे, भौरों के समूह की गुंजार से गूजते 'सहकार'—(आम्र का एक प्रकार) थे, प्रणयोन्मत्त कोकिलों से वे कोलाहल

१. उपगूढं, परिवेष्टितम् ।

कीरजःपुञ्जपिञ्जरैः पूगीलतादोलाधिरूढवनदेवतैस्तारकावर्षमिवाधर्मविनाशपिशुन कुसुमनिकरमनिलचलितमनवरतमतिधवलमुत्सृजद्भिः संसक्तपादपैः काननैरुपगूढम्, अचकितप्रचलितकृष्णसारशतशबलाभिरुत्फुल्लकमलिनीभिर्मारीचमायामृगावलूनरूढ-वीरुद्लाभिर्दाशरथिचापकोटिक्षतकन्दगर्तविषमिततलाभिर्दण्डकारण्यस्थलीभिरुपशो-भितप्रान्तम्, आगृहीतसमित्कुशकुसुममृद्भिरध्ययनमुखरशिष्यानुगतैः सर्वतः प्रविशद्भि-

---

वल्लयस्ताभिराकुलितो व्याप्तो नालिकेरीकलापो लाङ्गलीसमूहो येषु ते । लोलाश्चपला लोध्रो गालव, लवली लताविशेष, लवङ्ग श्रीसज्ञ, एतेषा पल्लवा येषु ते । उल्लसितानि बहिर्निर्गतानि चूतरेणुपटलान्याम्रपरागपुञ्जानि येषु ते । अलिकुलाना भ्रमरसमूहाणा झङ्कारेण झङ्कृतिशब्देन मुखरा वाचाला सहकारा येषु ते । आम्रेष्वतिसौरभो य स सहकार इति पूर्वस्मान्नेद । अतो न पौनरुक्त्यम् । 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभ' इत्यमर । उन्मदानि मदोन्मत्तानि यानि कोकिलकुलानि पिककुलानि तेषा कलाप समूहस्तस्य कोलाहल कलकलो येषु ते । उत्फुल्ला विकसिता या केतक्यो मालत्यस्तासां रज पुञ्ज परागसमूहस्तेन पिञ्जरै पीतरक्तै । पूगीलता क्रमुकलता एव दोला प्रेङ्खास्तास्वधिरूढा आश्रिता वनदेवता अरण्याधिष्ठात्र्यो देवता येषु ते । पुन किं कुर्वद्भि । अनवरत निरत्ययमनिलचलित वायुधूतमतिधवलमतिपाण्डुर कुसुमनिकर पुष्पसमूहमुत्सृजद्भिर्विकिरद्भि । किमिव । तारकावर्षमिवोल्कापातमिव । तदपि किञ्चिदनिष्टस्य सूचक भवति । इदमपि तथेत्याह—अधर्मेति । अधर्मस्याशिष्टाचारस्य विनाशोऽभावस्तस्य पिशुन सूचकम् । एतेन सर्वथाधर्माभावोऽत्रेति ध्वनितम् । ससक्ता अन्योन्य मिलिता पादपा वृक्षा येषु ते । पुन कीदृशम् । दण्डकारण्य प्रसिद्ध तस्य या स्थल्य स्थूलभूमयस्ताभिरुपशोभित शोभा प्रापित प्रान्त पश्चाद्भागो यस्य स तम् । अत स्थल्या विशेषणानि—अचकितेत्यादि । अचकिता अत्रस्ता प्रचलिता गच्छन्तो ये कृष्णसारा कृष्णमृगास्तेषां शत दशशतगुणितास्तेन शबलाभि किर्मीराभि । उत्फुल्ला विकसिता या

---

पूर्ण थे, पूर्णतया विकसित केतकी (पुष्पों) के पराग पुञ्ज से वे वन श्वेत[1] हो गये थे, उसमे पूगी के पौधों के झूलों पर देवताएँ झूला करती थीं। वे वन प्रत्येक प्रकार के (अधर्म) पाप के विनाश के सूचक, उल्काओं की वर्षा की भाँति प्रतीत होते वायु द्वारा हिलाकर (शाखाओं से) बिखराये हुए अत्यन्त श्वेत फूलों को निरन्तर गिरा रहे थे। उस आश्रम के किनारे (वहाँ) निर्भय घूमते सैकड़ों (चित्रित) कृष्ण मृगों से रगबिरगी दिखायी देतीं, फूलों से पूर्णतया लदी हुई कमलनियों द्वारा लाल हुई, मायामृग के रूपमें 'मारीच' द्वारा कुतरे गये तथा (अब पुन) उग आये हुए लतापत्रों वाली, राम के धनुष की नोक द्वारा टूटे कन्दों (गाठदार जड़ो) (को खोद कर निकाल लेने के पश्चात् उन) से हुए गड्ढों से ऊँचे नीचे तलों वाली दण्डकारण्य की भूमियों से सुशोभित था। हाथों मे समिधायें, कुशायें, फूल और मिट्टी लिये हुए, उच्च स्वरसे अपने पाठ दुहराते हुए शिष्यों द्वारा अनु-

---

१ पिञ्जर' = लाल से पीले ।

मुनिभिरशून्योपकण्ठम्, उत्कण्ठिशिखण्डिमण्डलश्रूयमाणजलकलशपूरणध्वानम्, अनवरताज्याहुतिप्रीतैश्चित्रभानुभिः सशरीरमेव मुनिजनममरलोकं निनीषुभिरुद्धूयमानधूमलेखाच्छलेनाबध्यमानस्वर्गमार्गगमनसोपानसेतुभिरिवोपलक्ष्यमाणम्, आसन्नवर्तिनीभिस्तपोधनसम्पर्कादिवापगतकालुष्याभिस्तरंगपरम्परासक्रान्तरविबिम्बपङ्क्तिभिस्तापसदर्शनागतसप्तर्षिमालाविगाह्यमानाभिरिव विकचकुमुदवनमृषिजनमुपासितुमव-

---

कमलिन्यो नलिन्यस्ताभिर्लोहिनीभी रक्ताभिर्मारीचनामा यो मायामृगस्तेनावलूनानि छिन्नानि रूढवीरुधा सञ्जातवल्लीना दलानि पर्णानि यासु ताभि। दाशरथी रामचन्द्रस्तस्य चापकोट्या क्षता उत्खाता ये कन्दा मूलानि तेभ्यो ये गर्ता भुवोविवराणि तैर्विषमितमुच्चनीचता प्राप्त तल यासु ताभि। पुन कीदृशम्। मुनिभि करणभूतैरशून्यमुपकण्ठ समीप यस्य स तथा तम्। यथाक्रम मुनीना त्रीणि विशेषणानि व्याख्यापयन्नाह—आगृहीतेति। आगृहीता आत्ता समिध एधासि, कुशा दर्भा, कुसुमानि पुष्पाणि, मृदो मृत्तिका यैस्ते तथा तै। अध्ययनेन वेदपारायणेन मुखरा वाचाला ये शिष्या विनेयास्तैरनुगतै सहितै सर्वतोऽभित प्रविशद्भि प्रवेश कुर्वद्भि। तद्गतपदार्थप्रदर्शनपूर्वकं पुनर्विशिनष्टि—उत्कण्ठीति। उत्कण्ठिना हृल्लेखवता शिखण्डिमण्डलेन मयूरसमूहेन श्रूयमाण आकर्ण्यमानो जलेषु कलशपूरणध्वान. शब्दो यस्मिन्स तम्। अनवरत निरत्ययमाज्येन सर्पिषा याहुतिर्हवन तया प्रीतै सन्तुष्टैश्चित्रभानुभिर्वह्निभि सशरीरमेव सविग्रहमेव मुनिजनमृषिवर्गममरलोक स्वर्गलोक निनीषुभिर्नेतुमिच्छुभिरुद्धूयमाना कम्पमाना या धूमलेखा दहनकेतनवीथी तस्याश्छलेनाबध्यमानो विरच्यमान स्वर्गमार्गगमनसोपानसेतुरिव स्वर्गस्य त्रिविष्टपस्य यो मार्ग पन्थास्तत्र गमन तदर्थं सोपानसेतुमिवोपलक्ष्यमाण व्यज्यमानम्। दीर्घिकाभिर्वापीभि परिवृतमावृतम्। अथ क्रमेण वाप्या विशेषणानि। आसन्नवर्तिनीभि समीपसस्थिताभिस्तपोधनैस्तापसै. सम्पर्क सबन्धस्तस्मादिवापगतकालुष्याभिर्दूरीभूतमालिन्याभिस्तरगपरपरासु कल्लोलवीथिषु सक्रान्ता प्रतिबिम्बिता रविबिम्बस्य सूर्यबिम्बस्य पङ्क्तयो यासु ताभि.। तरगपरपरासु प्रतिबिम्बपरपर-

---

गम्यमान, सब ओर से प्रविष्ट होते मुनियों द्वारा, कभी शून्य (खाली) नहीं रहता था। वहाँ (अपनी) गर्दनें ऊपर किये हुए मयूरों के झुण्ड जल से घटों को भरे जाने के शब्द सुनते रहते थे। ऐसा प्रतीत होता था कि उस आश्रम मे निरन्तर घृताहुतियों से प्रसन्न हुई मुनियों को सशरीर ही स्वर्ग लोक म (मानो) ले जाना चाहती हुई अग्नियाँ, (एक क पश्चात् एक भेजी गयीं) धूम्र पंक्तियों के बहाने से स्वर्ग मे जाने के लिये सीढीरूप पुल का निर्माण कर रही थीं। फिर वह पड़ौस में स्थित बावडियों से घिरा हुआ था, इन बावड़ियों का पाप मानो तपस्वियो के साथ सम्बन्ध रहने से ही दूर हो गया था, इनकी लहरों में सूर्यमण्डल के अनेक प्रतिबिम्ब पड़े रहने के कारण ऐसा प्रतीत होता था कि तपस्वियों के दर्शनों के लिये आया सप्तर्षिमण्डल उनका अवगाहन कर रहा हो और रात्रियों म, वे बावड़ियाँ, (उस आश्रम में) ऋषियों की सेवा में उपस्थित होने के लिये आये ग्रहों (तारा

तीर्णं ग्रहगणमिव निशासूद्वहन्तीभिर्दीर्घिकाभिः परिवृतम्, अनिलावनमितशिखराभिः प्रणम्यमानमिव वनलताभिरनवरतमुक्तकुसुमैरभ्यर्च्यमानमिव पादपैः, आबद्धपल्लवाञ्जलिभिरुपास्यमानमिव विटपैः, उटजाजिरप्रकीर्णशुष्यच्छ्यामाकम्, उपसगृहीतामलकलवलीकर्कन्धूकदलीलकुचचूतपनसतालीफलम्, अध्ययनमुखरबटुजनम्, अनवरतश्रवणगृहीतवषट्कारवाचालशुककुलम्, अनेकसारिकोद्घुष्यमाणसुब्रह्मण्यम्, अरण्यकुक्कुटोपभुज्यमानवैश्वदेवबलिपिण्डम्, आसन्नवापीकलहंसपोतभुज्यमाननीवार-

---

त्यर्थ । तज्जनितशोभान्तर वर्णयन्नाह—तापसेति । तापसदर्शनार्थमागत प्राप्ता या सप्तर्षिमाला तया विगाह्यमानाभिरिव विलोड्यमानाभिरिव । एतेन सप्तर्षीणा सूर्यप्रतिबिम्बसादृश्य ध्वनितम् । कि कुर्वतीभि । निशासु रात्रिषु विकचकुमुदवन विनिद्रकैरववनमृषिजन मुनिजन मुपासितु सेवितुमवतीर्णमुपरिष्टादागत ग्रहगणमिव नक्षत्रवृन्दमिवोद्वहन्तीभिर्धारयन्तीभि । एतेन कुमुदवनग्रहणयो स्वच्छत्वसारूप्याद्रूपकमुक्तम् । पुन प्रकारान्तरेण तमेव विशेषतो विशिनष्टि—अनिलेति । अनिलेन वायुनावनमित शिखर प्रान्त यासा ताभिरेवभूताभिर्वनलताभिररण्यवल्लीभि प्रणम्यमानमिव नमस्क्रियमाणमिव । अनवरतेति । अनवरत मुक्तानि कुसुमानि यैरेवभूतै पादपैर्वृक्षैरभ्यर्च्यमानमिव पूज्यमानमिव । आबद्धेति । आबद्धा रचिता पल्लवा एवाञ्जलय एवभूतैर्विटपैर्वृक्षैरुपास्यमानमिव सेव्यमानमिव । उटजेति । उटजाजिरेषु पर्णशालाङ्गणेषु प्रकीर्णा विक्षिप्ता शुष्यन्त शोष प्राप्नुवन्त श्यामाका धान्यविशेषा यस्मिन्स तम् । उपसंगृहीतेति । उपसगृहीतान्यात्तान्यामलक धात्री, लवली लताविशेष, कर्कन्धूर्बदरी, कदली रम्भा, लकुचो वृक्षविशेष, चूत आम्र, पनस प्रसिद्ध, ताली तृणराज, एतेषां फलानि यस्मिन्स तम् । अध्ययनेति । अध्ययनेन वेदपठनेन मुखरा वाचाला बटुजना ब्रह्मचारिजना यस्मिन्स तम् । अनवरतेति । अनवरत निरन्तरं श्रवणगृहीता श्रुतिमात्रेण शिक्षिता ये वषट्कारशब्दास्तैर्वाचालं शुककुल यस्मिन्स तम् । अनेकेति । अनेकाभि सारिकाभि पीतपादाभिरुद्घुष्यमाणमुच्चै स्वरेण पठ्यमान सुब्रह्मण्य वेदो यस्मिन्स तम् । अरण्येति ।

---

समूहों ) सरीखे प्रतीत होते पूर्णतया फूली कुमुदिनियों के समूहों को धारण किये रहती थीं। पवन द्वारा झुकाये सिरों वाली वनलताएँ मानो उस आश्रम को प्रणाम करती थीं। निरन्तर बिखरे फूलों वाले वृक्ष मानो उसकी पूजा कर रहे थे। पत्तों की अजलियाँ ( बान्धे हुए ) बनाये हुए ( हाथ जोड़े हुए ) पौधे मानो उसकी सेवा में उपस्थित रहते थे। ( उसकी ) पर्णशालाओं के आँगनों में श्यामाक नामक धान्य बिखरा-सूखता रहता था। इसमें आमलक, लवली, कर्कन्धु, कदली, लकुच, पनस, आम्र और ताल ( ताड़ खजूर ) के फल एकत्रित थे अर्थात् इनका अचार डाला रहता था )। इसमें ब्रह्मचारी जोर-जोर से बोलकर पढते रहते थे और तोते निरन्तर सुनते रहने से याद किये हुए 'वषट्कार' शब्द को बोलते रहते थे। इसमें अनेक मैनाएँ 'सुब्रह्मण्य' ( देवस्तुति ) अथवा वेद को कण्ठस्थ करती रहती थीं। इसमें जगली मुर्गे वैश्वदेव विधि के लिये प्रदत्त बलिपिण्ड को खाते रहते थे। नीवार बलियों को समीप

बलिम्, एणीजिह्वापल्लवोपलिह्यमानमुनिबालकम्, अग्निकार्यार्धदग्धमिसमिसायमानसमित्कुशकुसुमम्, उपलभग्ननालिकेररसस्निग्धशिलातलम्, अचिरक्षुण्णवल्कलरसपाटलभूतलम्, रक्तचन्दनोपलिप्तादित्यमण्डलकनिहितकरवीरकुसुमम्, इतस्ततो विक्षिप्तभस्मलेखाकृतमुनिजनभोजनभूमिपरिहारम्, परिचितशाखामृगकराकृष्टिनिष्कास्यमान-

---

तत्कुक्कुटैश्चरणायुधैः उपभुज्यमानो भक्ष्यमाणो वैश्वदेवस्य देवयज्ञस्य बलिपिण्डो हन्तकारो यस्मिन्स तम्। आसन्नेति। आसन्ना समीपस्था या वापी दीर्घिका तस्या कलहंसपोतैः कादम्बशिशुभिर्भुज्यमानो भक्ष्यमाणो नीवारबलिर्यस्मिन्स तम्। एणीति। एण्यो मृग्यस्तासां जिह्वा रसना एव पल्लवास्तैरुपलिह्यमाना आस्वाद्यमाना मुनिबालका यस्मिन्स तम्। अग्नीति। अग्निकार्ये होमेऽर्धदग्धान्यर्धभस्मीभूतान्यतएव मिसमिसायमानानि मिसमिसेतिशब्दमाचरमाणानि समित्कुशकुसुमानि यस्मिन्स तम्। उपेति। उपले दृषदि भग्नानि द्वैधीकृतानि नालिकेराणि लाङ्गलीफलानि तेषां यो रसो द्रवस्तेन स्निग्धं चिक्कणं शिलातलं यस्मिन्स तम्। अचिरेति। अचिरक्षुण्णानि तत्कालमर्दितानि यानि वल्कलानि तेषां रसस्तेन पाटलं श्वेतरक्तं भूतलं यस्मिन्स तम्। रक्तेति। रक्तचन्दनं पत्राङ्गं तेनोपलिप्तमालिप्तमालिखितं यदादित्यमण्डलमेव मण्डलकं तस्मिन्निहितानि स्थापितानि करवीरो हयमारस्तस्य कुसुमानि पुष्पाणि यस्मिन्स तम्। इतस्तत इति। इतस्ततो विक्षिप्तं यद्भस्म भूतिस्तस्य लेखा तया कृतो विहितो मुनिजनभोजनभूमेः परिहारो निषेधो यस्मिन्। भस्मलेखाङ्कितायां भूमौ केनापि नागन्तव्यमिति भावः। यद्वा भस्मनो या लेखा घर्षस्तेन कृतो मुनिजनभोजनभूमेरुच्छिष्टभूमेः परिहारो मार्जनं यस्मिन्। दृश्यते हि भोजनान्ते भस्मना मार्जनं पश्चाद्गोमयेनोपलेपनमिति। परिचितेति। परिचिताः सजातपरिचया ये शाखामृगास्ताम्रमुखाः श्याममुखा वा वानरास्तेषां कराकृष्ट्या हस्तावलम्बेन निष्कास्यमाना प्रवेश्यमाना जरन्तोऽन्धाश्च तापसा यस्मिन्।

---

की बावड़ियों के पालतू हंस खाते रहते थे। तपस्वियों के बालकों को वहाँ मृगियों की पत्तों सरीखी (लम्बी तथा कोमल) जिह्वायें चाटती रहती थीं। वहाँ होम में आधी जली समिधाएँ कुशा और फूल सिमसिम शब्द कर रहे थे अथवा सनसना रहे थे। वहाँ की शिलाओं के तल उनपर मारकर तोड़े हुए नारियलों के रस से चिकने हो गये थे। (वृक्षों पर से) अभी ही उतारी हुई वल्कलों के रस से वहाँ का पृथ्वीतल पाटल रंग का हो गया था। वहाँ लाल चन्दन के लेप से (पृथ्वी पर) चित्रित सूर्य भगवान् के मण्डल पर करवीर पुष्प (भेंट के रूप में) रखे हुए थे। उसमें वे स्थान जहाँ मुनियों ने भोजन करना था, इधर उधर पवित्र भस्म की रेखायें खींचकर (भ्रष्टता से बचाव के लिये) अंकित कर दिये गये थे[1]। इसमें पालतू बन्दर हाथों से खींचकर बूढ़े अन्धे तपस्वियों को भीतर प्रविष्ट करा रहे थे तथा बाहर निकाल रहे

---

१ इधर उधर फैलायी गई भस्म की रेखाओं से मुनिजनों के लिये उपयुक्त भूमिका औरों के लिये निषेध कर रखा था—परिहार का अर्थ मुख्य निषेध ही है। यहाँ भी काले ने 'परिहार' का यही अर्थ किया प्रतीत होता है।

प्रवेश्यमानजरदन्धतापसम्, इभकलभार्धोपभुक्तपतितैः सरस्वतीभुजलताविगलितैः शङ्खवलयैरिव मृणालशकलैः कल्माषितम्, ऋषिजनार्थमेणकैर्विषाणशिखरोत्खन्यमानविविधकन्दमूलम्, अम्बुपूर्णपुष्करपुटैर्वनकरिभिरापूर्यमाणविटपालवालकम्, ऋषिकुमारकाकृष्यमाणवनवराहदंष्ट्रान्तराललग्नशालूकम्, उपजातपरिचयैः कलापिभिः पक्षपुटपवनसधुक्ष्यमाणमुनिहोमहुताशनम्, आरब्धामृतचरुचारगन्धम्, अर्धपक-

---

इभेति। मृणालशकलैर्बिसखण्डैः कल्माषित चित्रितम्। कीदृशैरिव। सरस्वती देवी तस्या भुजलते बाहुलते ताभ्या विगलितै स्रस्तै शङ्खवलयैरिव त्रिरेखकटकैरिव। बिसाना स्वतो भूमिपातो न स्यादित्याह—इभेति। इभकलभाना यदर्धोपभुक्त यदर्धचर्वित तस्मात्पतितै स्रस्तै। ऋषीति। ऋषिजनार्थं मुनिजनकृत एणकैर्हरिणैर्विषाणशिखरै शृङ्गप्रान्तैरुत्खन्यमानानि विविधानि विचित्राणि कन्दमूलानि यस्मिन्। अम्बुपूर्णेति। अम्बुभिर्जलै पूर्णानि भृतानि पुष्करपुटानि शुण्डाग्राणि। 'शुण्डाग्र त्वस्य पुष्करम्' इति कोश। येषा मेतादृशैर्वनकरिभिररण्यहस्तिभिरापूर्यमाणानि भ्रियमाणानि विटपाना वृक्षाणामालवालकान्यावापस्थानकानि यस्मिन्। एतेन शाखामृगहरिणगजानामपि बुद्धिपूर्वकयथोचितकार्यकर्तृत्व सूचितम्। ऋषीति। ऋषिकुमारकैर्मुनिशिशुभिराकृष्यमाणानि वनवराहदंष्ट्रान्तराललग्नानि शालूकान्युत्पलाना कन्दा यस्मिन्। 'उत्पलाना तु शालूकम्' इति कोश। उपजातेति। उपजातपरिचयै सजातसबन्धै कलापिभिर्मयूरै पक्षपुटपवनेन छदपुटानिलेन सधुक्ष्यमाण प्रज्वाल्यमानो मुनीना होमार्थं हुताशनो वह्निर्यस्मिन्स तम्। आरब्धेति। आरब्धो विहितो योऽमृतचरुर्यज्ञओदनस्तस्य चारु मनोहरो गन्धो यस्मिन्स तम्। अर्धेति। अर्धपक्वो य पुरोडाश पूर्वोक्तस्तस्य परिमलो गन्धस्तेनामोदित हर्षजननशीलम्।

---

थे—अर्थात् जाने आने में उनका नेतृत्व कर रहे थे। यह आश्रम हस्तिशिशुओं द्वारा आधे खाने के पश्चात् गिरे हुए तथा (श्वेत होने से) सरस्वती देवी की लता-सरीखी बाहुओं से खिसककर नीचे गिरे शङ्खों के वलय-समान प्रतीत होते मृणाल के टुकड़ों से रग-बिरगा हो गया था। वहाँ पर मुनियों के लिये मृग (अपने) सींगो की नोकों से विविध प्रकार के कन्दमूल उखाड़ रहे थे। वहाँ पर जगली हाथी अपनी जलभरी सूड़ों रूप दोनो से वृक्षों के आलवालों को (जल से) भर रहे थे। वहाँ मुनियों के बालक वन्य वराहों द्वारा अपनी दाढ़ों के बीच पकड़ी हुई कमलों की कन्दाकार जड़ों को खींच (कर निकाल) रहे थे।[1] अत्यन्त परिचित (अर्थात् पालतू) हुए जगली मोर, वहाँ पर, अपने विस्तृत पखों से की गयी वायु से मुनियों की होमाग्नि को प्रज्वलित कर रहे थे। यह आश्रम तैयार किये जा रहे चरु (घी तथा चावल की आहुति) की आकर्षक गन्ध से व्याप्त था। वह आश्रम आधे पके पुरोडाश (चावल की

---

१. शालूक' का अर्थ कमल की जड़ करना चिन्त्य है—सूअर कीचड़ में धँसी नागर मोथे की जड़ों को निकाल कर खाते हैं—कमल की जड़ों को नहीं खाते।

पुरोडाशपरिमलामोदितम्, अविच्छिन्नाज्यधाराहुतिहुतभुग्झङ्कारमुखरितम्, उपचर्यमाणातिथिवर्गम्, पूज्यमानपितृदैवतम्, अर्च्यमानहरिहरपितामहम्, उद्दिश्यमानश्राद्धकल्पम्, व्याख्यायमानयज्ञविद्यम्, आलोच्यमानधर्मशास्त्रम्, वाच्यमानविविधपुस्तकम्, विचार्यमाणसकलशास्त्रार्थम्, आरभ्यमाणपर्णशालम्, उपलिप्यमानाजिरम्, उपमृज्यमानोटजाभ्यन्तरम्, आबध्यमानध्यानम्, साध्यमानमन्त्रम्, अभ्यस्यमानयोगम्, उपहूयमानवनदेवताबलिम्, निर्वर्त्यमानमौञ्जमेखलम्, क्षाल्यमानवल्कलम्,

---

अवीति। अविच्छिन्नात्रुटिता आज्यधारा घृतधारा तया हुतिर्हवनं तया यो हुतभुग्झङ्कारोऽग्निशब्दस्तेन मुखरितं वाचालितम्। उपचर्येति। उपचर्यमाणः पर्युपास्यमानोऽतिथिवर्गो यस्मिन्। पूज्येति। पूज्यमानानि पितृदैवतानि पितरो यस्मिंस्तम्। अर्च्येति। अर्च्यमाना पूज्यमाना हरिः कृष्णः, हर ईश्वरः, पितामहः पितुः पिता ब्रह्मा, एते यस्मिन्। उद्दिश्येति। उद्दिश्यमान उद्देश्यपूर्वकं क्रियमाणः श्राद्धकल्पः श्राद्धाचारो यस्मिन्स तम्। व्याख्येति। व्याख्यायमानार्थद्वारा निरूप्यमाणा यज्ञविद्या यस्मिन् स तम्। आलोच्येति। आलोच्यमानं मनसि विचार्यमाणं धर्मशास्त्रं स्मृत्यादिकं यस्मिन्स तम्। वाच्येति। वाच्यमानानि परिभाष्यमाणानि विविधान्यनेकप्रकाराणि पुस्तकानि शास्त्राणि यस्मिन्स तम्। विचार्येति। विचार्यमाणो युक्त्या स्थाप्यमानः सकलशास्त्रार्थो यस्मिन्। आरभ्येति। आरभ्यमाणा नवीना क्रियमाणा पर्णशालोटजा यस्मिन्। उपलीति। उपलिप्यमानानि गोमयादिनाजिराणि प्राङ्गणानि यस्मिन्। उपेति। उपमृज्यमानानि प्रसार्यमाणानि उटजाभ्यन्तराणि पर्णशालामध्यानि यस्मिन्। आबध्येति। आबध्यमानं ध्यानमेकप्रत्ययसततिर्यस्मिन्। साध्येति। साध्यमानो होमादिना स्वायत्तीक्रियमाणो मन्त्रो देवाधिष्ठातृको यस्मिन्। अभ्यस्येति। अभ्यस्यमान उद्योगविषयीक्रियमाणो योगश्चित्तवृत्तिनिरोधो यस्मिन्। उपेति। उपहूयमान उपढौक्यमानो वनदेवतायै बलिर्यस्मिन्। निर्वर्त्येति। निर्वर्त्यमाना निष्पाद्यमाना मौञ्जमेखला यस्मिन्। क्षाल्येति।

---

आहुति ) की गन्ध से सुरभित था। वह आश्रम सतत बहती हुई घृतधारा की आहुतियों से हुत अग्नि द्वारा की गयी झकार से गूंज रहा था। वहाँ अतिथियों का स्वागत किया जा रहा था, पितृदेवताओं की पूजा की जारही थी, विष्णु शिव और ब्रह्मा पूजे जारहे थे, श्राद्धव्यवहार बताया जा रहा था, यज्ञ विद्या की व्याख्या की जा रही थी, धर्मशास्त्र की मीमांसा की जा रही थी, विविध प्रकार की पुस्तकें पढ़ी जा रही थीं और सकल ( अथवा विविध ) शास्त्रों के अभिप्राय पर विचार किया जा रहा था। पर्णशालायें बनायी जा रही थीं, आँगन ( गोबर से ) लिपे जा रहे थे, और कुटियों के भीतरी भाग लिपे जा रहे थे। वहाँ ऋषिजन अपना ध्यान परमात्मा में लगा रहे थे, मन्त्रों को बहुफलदायक ( सिद्ध ) किया जा रहा था ( जिसमें कि उनका सफलतापूर्वक प्रयोग किया जा सके ), योग का अभ्यास किया जा रहा था और वनदेवताओं को बलियां ( उपहूयमान ) अर्पित की जा रही थीं। वहाँ मूंज की मेखलाएँ बनायी जा रही थीं, वल्कल ( वस्त्र ) धोये जा रहे थे, समिधायें एकत्रित की जारही

उपसंगृह्यमाणसमिधम्, उपसंस्क्रियमाणकृष्णाजिनम्, गृह्यमाणगवेधुकम्, शोष्यमाण-पुष्करबीजम्, ग्रथ्यमानाक्षमालम्, न्यस्यमानवेत्रदण्डम्, सत्क्रियमाणपरिव्राजकम्, आपूर्यमाणकमण्डलुम्, अदृष्टपूर्वं कलिकालस्य, अपरिचितमनृतस्य, अश्रुतपूर्वमनङ्गस्य, अब्जयोनिमिव त्रिभुवनवन्दितम्, असुरारिमिव प्रकटितनरहरिवराहरूपम्, साख्य-मिव कपिलाधिष्ठितम्, मधुरोपवनमिव बलावलीढदर्पितधेनुकम्, उदयनमिवानन्दित-

क्षाल्यमानानि वल्कलकानि यस्मिन्। उपेति। उपसगृह्यमाणा उपादीयमाना समिधो यस्मिन्। उपेति। उपसस्क्रियमाणं छगणादिना शुद्धीक्रियमाण कृष्णाजिन मृगचर्म यस्मिन्। गृह्येति। गृह्यमाणा गवेधुका धान्यविशेष कन्दो वा यस्मिन्। शोष्येति। शोष्यमाणानि शोष नीय मानानि पुष्करबीजानि कमलफलानि यस्मिन्। ग्रथ्येति। ग्रथ्यमाना अक्षमाला रुद्राक्षमाला यस्मिन्। न्यस्येति। न्यस्यमान स्थाप्यमानो वेत्रदण्डो यस्मिन्। सदिति। सत्क्रियमाणा परिव्राजका यस्मिन्। आपूर्येति। आपूर्यमाणानि जलेन ध्रियमाणानि कमण्डलूनि यस्मिन्। अदृष्टेति। कलिकालस्य कलियुगस्यादृष्टपूर्वमनवलोकितपूर्वम्। कलिप्रवेशायोग्यमित्यर्थ। एतेन सर्वथा पातकाभावो व्यज्यते। अपरीति। अनृतस्यासत्यस्यापरिचितमसनिहितम्। अश्रुतेति। अनङ्गस्य कामस्याश्रुतपूर्वमनाकर्णितपूर्वम्। मदनोद्दीपकत्वाभावात्। अब्जेति। अब्जयोनिमिव ब्रह्माणमिव। त्रिभुवनवन्दित अभिवादितम्। पक्षे वन्दित श्रेष्ठम्। असुरारीति। असुरारि-र्विष्णुस्तद्वदिव प्रकटितानि नरो नरनारायणो हरिश्च नृहरि। अथवा नरहरिर्नृसिंहो वराहश्च तेषा रूपाणि येन स तम्। पक्षे प्रकटितानि नरेभ्यो हरिवराहरूपाणि येन स तम्। सांख्येति। साख्य कापिलदर्शन तदिव कपिलमुनिनाधिष्ठितमाश्रितम्। तत्प्रणीतत्वात्। पक्षे कपिलाभिर्गो-

थीं, कृष्णमृग की खालें सवारी जा रही थीं, (धान्यविशेष) गवेधुक को एकत्रित किया जा रहा था, कमल बीज सुखाये जा रहे थे, अक्षमालायें गूथी जा रही थी, बेंत के दड रखे (इकट्ठे किये) जा रहे थे, मुनियों को सन्यास मे दीक्षित किया जा रहा था[1] और ऋषिजनों द्वारा कमण्डलु जल से भरे जा रहे थे। उस आश्रम मे अभी तक कलि-युग कभी नहीं आया था, असत्य से वह अपरिचित था, और कामदेव ने अभी तक कभी भी उसका नाम नहीं सुना था। कमलजन्मा ब्रह्मा की भाँति तीनों लोकों ने उसकी स्तुति की थी, (अपने तीसरे तथा चौथे अवतार के समय क्रमश) वराह तथा नृसिंह के रूप दिखाने वाले असुरों के शत्रु विष्णु की भाँति उस आश्रम के (अपने भीतर) वराहों, मनुष्यों और सिंहों की शारीरिक आकृतियाँ प्रदर्शित की हुई थी (ये उसमें रहते थे)। कपिल मुनि द्वारा प्रतिष्ठापित 'साख्य दर्शन' की भाति वह आश्रम कपिला गायों द्वारा अधिष्ठित 'कपिलाधिष्ठित' था। बलराम द्वारा चूर्णित दर्पवाले धेनुकराक्षस द्वारा अध्युषित 'बल + अवलीढ दर्पित धेनुक' मथुरानगर के निकटस्थ कुञ्जों की भाति वह आश्रम भी बलशाली मदमस्त हथनियों द्वारा अधिष्ठित, 'बलावलीढ दर्पित धेनुक' था। अपने वत्स कुल को आनन्दयुक्त किये हुए उदयन राजा की भाति वह आश्रम

१. 'संस्क्रियमाण' पाठ के अनुसार अर्थ है।

वत्सकुलम्, किंपुरुषाधिराज्यमिव मुनिजनगृहीतकलशाभिषिच्यमानद्रुमम्, निदाघसमयावसानमिव प्रत्यासन्नजलप्रपातम्, जलधरसमयमिव वनगहनमध्यसुखसुप्तहरिम्, हनूमन्तमिव शिलाशकलप्रहारसचूर्णिताक्षास्थिसंचयम्, खाण्डवविनाशोद्यतार्जुनमिव प्रारब्धाग्निकार्यम्, सुरभिविलेपनधरमपि सततविर्भूतहव्यधूमगन्धम्, मातङ्गकुला-

---

भिरधिष्ठितम्। मधुरेति। मधुरा मधूपघ्न तस्योपवनमिव द्वादशवनेषु गर्भित वन तद्वदिव बलावलीढो बलवान्दर्पितो दर्पयुक्तो धेनुको दैत्यो यस्मिन्। पक्षे बलावलीढा बलयुक्ता दर्पिता धेनवो गावो यस्मिन्। उदयनेति। उदयन राजानमिवानन्दित वत्सकुल येन। वत्सोऽत्र राजा पाण्डवकुलसमुत्पन्न। पक्षे वत्सस्तर्णकस्तस्य कुल समुदाय। किंपुरुषेति। किंपुरुष किंनरस्तस्याधिराज्य प्रभुत्व तद्दिव मुनिजनैर्गृहीता ये कलशास्तैरभिषिच्यमानो द्रुमो नाम राजा यस्मिन्। किंनराणां द्रुमो नाम राजाभूदिति प्रसिद्धि। पक्षे द्रुमा वृक्षा। निदाघेति। ग्रीष्मसमयावसानमिव शुक्रमासमिव प्रत्यासन्न समीपस्थो जलप्रपात प्रवर्ष यस्मिन्। पक्षे जलप्रपातो निर्झर। जलधरेति। जलधरसमयमिव पर्जन्यकालमिव वनस्य पानीयस्य यद्गहनं गम्भीर मध्यमभ्यन्तरप्रदेशस्तत्र सुखेन सुप्तो निद्रां प्राप्तो हरिर्विष्णुर्यस्मिन्। प्रावृषि विष्णु समुद्रे शेत इति प्रसिद्धम्। पक्षे वनस्यारण्यस्य गहनानि गह्वराणि तेषु सुप्ता हरय सिंहा यस्मिन्। हन्विति। हनूमन्तमिवाञ्जनीसुतमिव शिलाशकलप्रहारेण सचूर्णितोऽक्षनाम्नो रावणपुत्रस्यास्थिसचयो येन स तम्। पक्षे सचूर्णितो योऽक्षो बिभीतकस्तस्यास्थिसचयो मध्यप्रदेशसमूहो यस्मिन्। खाण्डवेति। खाण्डवनाम्नी वनस्य यो विनाशस्तत्रोद्यत उद्योगवान्योऽर्जुन फाल्गुनस्तमिव प्रारब्ध विहितमग्नि-

---

भी (इसमें रहने वाले) बहुत से बछड़ों को आनन्दित किये हुआ होनेसे 'आनन्दित-वत्सकुल' था। हाथों में कलश लेकर मुनियो द्वारा अभिषेक कराये जाते द्रुम राजावाले किन्नर राज्य की भाँति वह आश्रम भी उसमे स्थित वृक्षों के मुनियों द्वारा (हाथों मे) लिये हुए कलशों से सींचे जानेके कारण 'मुनिजनगृहीतकलशाभिषिच्यमान' था। समीपस्थ वर्षावाले ग्रीष्म ऋतु के अन्त समय की भाँति वह आश्रम भी अपने पड़ोस में जलप्रपातों के होने के कारण प्रत्यासन्न-जल-प्रपात था। गहरे (वन) जल के मध्य सुख से सोये विष्णु भगवान् से युक्त वर्षा ऋतु के सदृश वह आश्रम भी, इसके घने जगलों के बीच चैन से सोते सिंहों वाला होने से 'वनगहनमध्यसुखसुप्तहरि' था। शिला के टुकड़ों से (रावणपुत्र) अक्ष की सारी हड्डियों को चूरा करने वाले हनूमान् जी की भाति वह आश्रम भी (अपने प्रागण मे) पत्थरों के प्रहार से चूरा किये गये 'अक्षों' की गुठलियों के समूहवाला होने के कारण हनुमान्जी जैसा था। अग्निदेवका कार्य आरम्भ करनेवाले (स्वीकार करने वाले) अर्जुन की भाँति वह आश्रम (ऋषियों द्वारा) प्रारम्भ किये गये अग्निहोत्रों वाला होने के कारण, 'प्रारब्धाग्निकार्य' था। सुगन्धित उबटनधारी होते हुए भी? नहीं, नहीं, उसकी भूमि गाय के गोबर से लिपी रहने पर भी वह हव्य के धुंए की गन्ध को निरन्तर छोड़ता रहता था। मातङ्ग अर्थात् चाण्डाल? नहीं, नहीं,

ध्यासितमपि पवित्रम्, उल्लसितधूमकेतुशतमपि प्रशान्तोपद्रवम्, परिपूर्णद्विजपति-मण्डलसनाथमपि सदासनिहिततरुगहनान्धकारम्, अतिरमणीयमपरमिव ब्रह्मलोकमाश्रममपश्यम् ।

यत्र च मलिनता हविर्धूमेषु न चरितेषु, मुखरागः शुकेषु न कोपेषु, तीक्ष्णता कुशाग्रेषु न स्वभावेषु, चञ्चलता कदलीदलेषु न मनःसु, चक्षूरागः कोकिलेषु न पर-

---

कार्यं देवसतर्पण यस्मिन् । पक्षेऽग्निकार्यं होम । सुरभीति । सुरभि सुगन्धि यद्विलेपनमङ्गरागस्तद्वरमपि सतत निरन्तरमाविर्भूत प्रकटितो हव्य सुरेभ्यो दातव्य तस्य धूमगन्धो यस्मिन्निति विरोध । तत्परिहारपक्षे सुरभेर्गो । विलिप्यतेऽनेन भूरिति विलेपन गोमय यस्यामेतादृशी धरा भूर्यस्मिन्नित्यर्थ । मातङ्गेति । मातङ्गस्य यत्कुल तेनाध्यासितमपि तदाश्रितमपि पवित्र पावनमिति विरोध । तत्परिहारस्तु मातङ्गकुलानि हस्तियूथानीत्यर्थात् । उल्लसितेति । उल्लसितमुल्लास प्राप्त धूमकेतुशत यस्मिन्नेवभूतमपि प्रशान्तोपद्रवमिति विरोध । तत्परिहारस्तु धूमकेतवो वह्नय इत्यर्थात् । परीति । परिपूर्णो न न्यून एवविधो यो द्विजपतिश्चन्द्रस्तस्य मण्डल तेन सनाथमपि सहितमपि सदा संनिहितमासन्नवर्ति तरुगहनेष्वन्धकार यस्मिन्निति विरोध । तत्परिहारस्तु परिपूर्णा ज्ञानेन भृता ये द्विजपतयो ब्राह्मणास्तेषा मण्डल समूहमित्यर्थात् । अतिरमणीयमत्यन्तमनोहारि । अपरेति । अपर भिन्नमिव ब्रह्मलोक सुरलोकम् । अन्वयस्तु प्रागेवोक्त ।

अथ पुनर्विरोधाभासप्रदर्शनपूर्वकमाश्रममाहात्म्य प्रदर्शयति—यत्र चेति । 'मूलानामधोगति' एतत्पर्यन्त प्रबन्धक । मलिनतेति । हवि साक्षाय्य तस्य धूमेषु मलिनता मालिन्यम् । चरितेष्वाचारेषु न, कौलीन्यलक्षण तदित्यर्थः । मुखराग इति । शुकेषु कीरेषु मुखरागो मुखारुण्यम् । कोपेष्विति निमित्तसप्तमी । कोपनैमित्तिक न मुखे वैरूप्यमित्यर्थ । तीक्ष्णतेति । कुशाग्रेषु दर्भप्रान्तेषु तीक्ष्णता चर्मास्थिभेदनसमर्थः शक्तिविशेषः । स्वभावेषु प्रकृतिषु न क्रूरत्वमित्यर्थ । चञ्चलतेति । कदलीदलेषु रम्भापत्रेषु चञ्चलता तरलता । न मन सु चेत सु

---

हस्तियों के परिवारो द्वारा अधिष्ठित हुआ रहने पर भी वह आश्रम पवित्र ही था । इसमे सैकड़ों पुच्छल तारे (?) नहीं, नहीं, सैकड़ों अग्निया जलते रहने पर भी वहा उपद्रव शात रहते थे । यद्यपि वह पूर्णचन्द्रमण्डल से युक्त था तथापि उसमें वृक्षों का घना अन्धकार सदा समीप विद्यमान रहता था—कारण कि वह तो वस्तुतः पूर्ण पडित ब्राह्मणमण्डल से सुशोभित था और अत्यन्त रमणीय दूसरे ब्रह्मलोकसरीखा था ।

और उस आश्रम मे मलिनता यज्ञों से उठते हुए धुओं में थी, ( इसके निवासियों के ) चरित्रों में ( दुष्टता ) नहीं थी । लालिमा तोतों के मुखों में थी, क्रोध ( के कारण मुखों पर ) कोई लालिमा नहीं थी । कुशा घास (की पत्तिया तो पैनी) थीं, पर ( वहाँ के निवासियों के ) स्वभाव उग्र नहीं थे । वहाँ के केलों के पत्ते तो हिलते रहते थे पर उनके ( उसके निवासियों के ) मन अस्थिर नहीं थे । कोयलों की आखों में लाली थी परन्तु परस्त्रियों की

कलत्रेषु, कण्ठग्रहः कमण्डलुषु न सुरतेषु, मेखलाबन्धो व्रतेषु नेर्ष्याकलहेषु, स्तनस्पर्शो होमधेनुषु न कामिनीषु, पक्षपातः कृकवाकुषु न विद्याविवादेषु, भ्रान्तिरनलप्रदक्षिणासु न शास्त्रेषु, वसुसकीर्तन दिव्यकथासु न तृष्णासु, गणना रुद्राक्षवलयेषु न शरीरेषु, मुनिबालनाशः क्रतुदीक्षया न मृत्युना, रामानुरागो रामायणेन न यौवनेन,

---

वृत्तिविशेष । चक्षुरिति । कोकिलेषु परभृत्सु चक्षूरागो नेत्रयोरारुण्यम् । परकलत्रेषु परस्त्रीषु नाभिलाष इत्यर्थ । कण्ठग्रह इति । कमण्डलुषु कुण्डिकासु कण्ठग्रह कण्ठे ग्रहणम् । सुरतेषु मैथुनेषु न कण्ठालिङ्गनम् । मुनीना तदभावादिति भाव । मेखलेति । व्रतेषु नियमेषु मेखलाबन्धो मौञ्जीबन्धनम् । ईर्ष्याकलहेष्वसूयाविग्रहेषु न शृङ्खलाबन्धनम् । स्तनेति । होमधेनुषु होमनैमित्तिकधेनुषु स्तनस्पर्शो दोहनम् । कामिनीषु ललनासु न कुचमर्दनम् । पक्षपात इति । कृकवाकुषु कुक्कुटेषु पक्षपात पक्षाणा पतनम् । न विद्याविवादेषु शास्त्रकथासु सोपाधिकोऽङ्गीकार । अन्यस्य पक्षिणस्तथा युद्धे पक्षपातो नास्तीति कुक्कुटग्रहणम् । भ्रान्तिरिति । अनलप्रदक्षिणासु भ्रान्ति परिवृत्ति. । शास्त्रेषु न भ्रान्तिर्मिथ्याज्ञानम् । वस्विति । दिव्यकथासु भारतकथासु वसवो गणदेवा पितृगणा वा तेषा सकीर्तन सम्यक्प्रकारेण कथनम् । न तृष्णासु लिप्सासु वसु द्रव्य तस्य संकीर्तन प्रशसनम् । गणनेति । रुद्राक्षवलयेषु रुद्राक्षसरण्या गणना सख्या । न शरीरेषु देहेषु गणनादर । अत्यन्तनिस्पृहत्वात्तत्र निरपेक्षेत्यर्थ । मुनीति । बवयोरैक्यान्मुनीना वाला केशास्तेषा नाशो ध्वंस क्रतुदीक्षया यज्ञदीक्षया । न मृत्युना बालनाश शिशुनाश । पुरुषायुषजीवित्वात्तेषाम् । रामेति । रामो दाशरथिस्तस्मिन्ननुराग आराध्यत्वेन ज्ञान रामायणेन रामचरित्रेण । तद्ग्रन्थश्रवणेन तदुपरि रागाधिक्यमित्यर्थ । न तु यौवनेन तारुण्येन रामानुरागो रामा स्त्रियस्तास्वनुरागो विषयेच्छा । मुखेति । मुखे भङ्गविकारस्त्रिवली-

---

ओर (अभिलाषायुक्तता) नहीं थी । कमण्डलुओं को गर्दनों से पकड़ा जाता था परन्तु मैथुन में होनेवाला (कण्ठाश्लेष) वहाँ नहीं दीख पड़ता था । धारण किये व्रतों में तो मेखलायें बाधी जाती थीं, परन्तु ईर्ष्या वश उत्पन्न लड़ाई झगड़े मे (प्रेमिका द्वारा प्रेमी को अपनी करधुनी द्वारा बाँधा जाने का दृश्य) नहीं था । पालतू गौओं के स्तनों का स्पर्श तो था किन्तु सुन्दरी स्त्रियों के स्तनों का स्पर्श नहीं दीखता था । मयूरों मे तो पखोंका गिरना (पक्षपात) होता था किन्तु विद्या सम्बन्धी वादविवादों में पक्षपात नहीं था । पवित्र अग्नि की प्रदक्षिणा करते समय (भ्राति) घूमना दिखायी देता था, परन्तु शास्त्रों मे कोई (भ्राति) भ्रम नहीं था । दिव्य व्यक्ति सम्बधी कहानियों में वसु (नामक अर्धदेवों) का सकीर्तन होता था किन्तु लालचाओं के कारण धनों की स्तुति नहीं की जाती थी । अक्षमालाओं के फेरों की तो गिनती (की जाती) थी परन्तु शरीरो की कोई गिनती (चिन्ता) नहीं थी । मुनियों के बालों का विनाश (किसी) यज्ञ की दीक्षा के समय होता था परन्तु मुनियों के बालकों (बालों) का विनाश (अकाल) मृत्यु से कभी नहीं होता था । रामायण द्वारा राम के प्रति स्नेह तो था परन्तु यौवन के कारण (रामा + अनुराग) स्त्रियों के प्रति स्नेह किया जाना नहीं था ।

मुखभङ्गविकारो जरया न धनाभिमानेन। यत्र च महाभारते शकुनिवधः, पुराणे वायुप्रलपितम्, वयःपरिणामेन द्विजपतनम्, उपवनचन्दनेषु जाड्यम्, अग्नीना भूतिमत्त्वम्, एणकाना गीतश्रवणव्यसनम्, शिखण्डिना नृत्यपक्षपातः, भुजंगमाना भोगः, कपीना श्रीफलाभिलाषः, मूलानामधोगतिः।

---

विकृतिर्जरया वार्धक्येन। धनाभिमानेन द्रव्यस्मयेन मुखभङ्ग आस्यमोटनादिविकृति। यत्र चेति। यस्मिन्स्थले महाभारते शास्त्रे शकुनिवधो दुर्योधनराज्ञो मातुलस्य विनाश श्रूयते। न तत्र शकुनिवध पक्षिवध। पुराणेति। पुराण इतिहासादौ वायोर्वायुदेवताया प्रलपित जल्पित, श्रूयत इति शेष। ननु वायुना वायुविकारेणोन्मादादिना प्रलपित यथाकथञ्चिज्जल्पित यत्र नाभूत्। वय इति। वय परिणामेन वार्धकेन द्विजाना दन्ताना पतन पात। न तु द्विजाना ब्राह्मणाना पतन स्वाचाराद्भ्रश। यत्र नेति सर्वत्रानुषङ्ग। उपेति। उपवन समीपवन तत्र चन्दनतरवस्तेषु जाड्य शैत्यम्। न त्वाश्रमवर्तिमुनिजनेषु जाड्य प्रज्ञाहीनत्वम्। अग्नीनामिति। अग्नीना वह्नीना भूतिमत्त्व भस्मवत्त्वम्। न तु मुनीना भूतिः सपत्तद्वत्त्वम्। एणकेति। एणकाना मृगाणा गीत गान तस्य श्रवण तत्र व्यसनमासक्ति। न मुनीना तच्छ्रवणाभिलाषातिरेक। शिखण्डीति। शिखण्डिना मयूराणा नृत्ये ताण्डवे पक्षपातश्छदपतनम्। न तु मुनीना नृत्यविषये पक्षपातोऽङ्गीकार। भुजङ्गमेति। भुजङ्गमाना सर्पाणा भोग शरीरम्। 'भोगोऽहिकाय' इति कोश। न तु मुनीना भोग स्त्र्यादिजनित सुखम्। कपीनामिति। कपीना वानराणा श्रीफलाभिलाष श्रीफलानि बिल्वीफलानि तेष्वभिलाषो वाञ्छाविशेष। न तु मुनीना श्रीर्लक्ष्मीस्तस्या फलानि गृहकारापणादीनि तत्राभिलाषस्तीव्राध्यवसाय। मूलानामिति। मूलाना जटानामधोगतिरध सयोग। न त्वाश्रमवर्तिमुनीनामधोगतिर्नरकपात।

---

वृद्धावस्था द्वारा मुखोपर झुर्रियों से विकार तो आ जाता था किन्तु धनके गर्व से उत्पन्न (मुँह बनाना आदि) मुख-विकार नहीं था। और वहाँ महाभारत ग्रन्थ मे तो शकुनि का बध था किन्तु पक्षियों की हत्या नहीं थी। (वायु) पुराण में ही वायुदेवता का प्रलाप था वैसे वायुजनित प्रलाप रोग नहीं था। द्विज अर्थात् दान्तों का पतन केवल वृद्धावस्था के कारण ही होता था, ब्राह्मणों में पतन नहीं था। बगियाओं के चन्दन वृक्षों को ही पाला लगजाता था किन्तु वैसे कोई जाडय-उदासी नहीं थी। भूतिमत्ता-राखयुक्तता केवल अग्नियों में ही थी, ऐश्वर्य युक्तता नहीं थी। सगीत सुनने का व्यसन केवल हरिणों मे ही था। नाचते समय पखो का छड़ना अथवा नल के प्रति कसन केवल मयूरों का ही था। भोग (फणोंका फैलाव) केवल साँपों का ही था, ऐन्द्रियिक विषय भोग नहीं था। बन्दरों में ही बिल्व फलों के प्रति इच्छा थी-वैसे ऐश्वर्य के फल की अभिलाष नहीं थी। (वृक्षों की) जड़ों ही का अधोगमन होता था, किसी की दुर्गति नहीं होती थी।

तस्य चैवंविधस्य मध्यभागमण्डलमलंकुर्वाणस्यालक्तलोहितपल्लवस्य मुनिजनालम्बितकृष्णाजिनजलकरकसनाथशाखस्य तापसकुमारिकाभिरालवालदत्तपीतपिष्टपञ्चाङ्गुलस्य हरिणशिशुभिः पीयमानालवालकसलिलस्य मुनिकुमारकाबद्धकुशचीरदाम्नो हरितगोमयोपलेपनविविक्ततलस्य तत्क्षणकृतकुसुमोपहाररमणीयस्य नातिमहतः परिमण्डलतया विस्तीर्णावकाशस्य रक्ताशोकतरोरधश्छायायामुपविष्टम्, उग्रतपोभिर्भुवनमिव सागरैः, कनकगिरिमिव कुलपर्वतैः, क्रतुमिव वैतानिकवह्निभिः, कल्पान्तदिव-

---

तस्येति। आश्रमस्यैवंविधस्य पूर्वोक्तप्रकारेण वर्णितस्य तस्य यो मध्यभागस्तस्य मण्डलं वर्तुलप्रदेशस्तदलंकुर्वाणस्य रक्ताशोकतरोः कङ्केलिवृक्षस्याधश्छायायामुपविष्टं निषण्णं भगवन्तं जाबालिं जाबालिमुनिमपश्यमिति दूरेणान्वयः। अथ जाबालिं वर्णयति—तत्र षष्ठ्यन्तानि तरोर्विशेषणानि द्वितीयान्तानि मुनिविशेषणानीति स्वयमूहनीयम्। अलक्तेति। अलक्तवद्यावकवल्लोहिता रक्ताः पल्लवा यस्य स तथा तस्य। मुनीति। मुनिजनैस्तापसजनैरालम्बिताः स्थापिताः कृष्णाजिनानि कृष्णमृगचर्माणि जलकरकाः पात्रविशेषास्तैः सनाथा सह कृता शाखा यस्य स तथा तस्य। तापसेति। तापसकुमारिकाभिर्मुनिकन्याभिरालवाले मूलप्रदेशे दत्ताः पीतपिष्टस्य हरिद्राचूर्णस्य पञ्चाङ्गुलयो हस्तबिम्बा यस्मिन्स तथा तस्य। हरिणेति। हरिणशिशुभिर्मृगबालकैः पीयमानमास्वाद्यमानमालवालकस्य सलिलं यस्य स तथा तस्य। मुनीति। मुनिकुमारकैराबद्धं कुशचीरदाम यस्य स तथा तस्य। हरितेति। हरितमशुष्कं यद्गोमयं छगणं तेनोपलेपनं तेन विविक्तं पूतं तलमधोभागो यस्य स तथा तस्य। तदिति। तत्क्षणे तदात्वे कृतो विहितो यः कुसुमोपहारः पुष्पढौकनं तेन रमणीयस्य मनोहरस्य। नातिमहतो नातिदीर्घस्य परिमण्डलं समन्तात्परिमाणं तस्य भावस्तत्ता तयात एव दीर्घस्य तालादेन(?) तथा परिमण्डलं विस्तीर्णोऽवकाशोऽभ्यन्तरप्रदेशो यस्य स तथा तस्य। उग्रेति। उग्रतपोभिस्तीक्ष्णतपोभिर्महर्षिभिः समन्तात्परिवृतं परिवेष्टितम्। किमिव। भुवनमिव विष्टपमिव सागरैः

---

और ऐसे उस आश्रम के मध्य प्रदेश को सुशोभित करते हुए लाल अशोक वृक्ष के नीचे उसकी छाया में बैठे हुए जाबालि मुनि को मैंने देखा। उस अशोक वृक्ष के पत्ते अलक्तक रस सरीखे लाल थे, उसकी शाखायें मुनियों द्वारा (उनपर) लटकाये हुए कृष्ण मृग की छालों तथा जलपात्रों से भरी हुई थीं, उसके आलवाल पर तपस्वियों की बालिकाओं ने पीत चूर्ण से रगी पाचों अगुलियों की छाप अकित कर रखी थीं, उसके आलवाल के जल को हरिण शिशु पी रहे थे, मुनि कुमारों ने उस पर अपने कुशतन्तुओंको एक सघन पक्ति में (रस्सी रूप में) बाध रखा था, वृक्ष के नीचे का भूमितल हरे गोबर की परत से लेपकर पवित्र किया हुआ था, उसी क्षण उस पर चढ़ाये फूलों से वह सुशोभित था, बहुत बड़ा नहीं था, किन्तु गोलाकृति होने से एक विस्तृत क्षेत्र में फैला हुआ था। जाबालि ऋषि अन्य कठोर जप वाले मुनियों द्वारा ऐसा घिरा हुआ था जैसा कि समुद्रों से घिरी पृथ्वी हो अथवा कुल पर्वतों से घिरा सुवर्णपर्वत (मेरु) हो, वैतानिक (यज्ञीय) अग्नियों से घिरा

समिव रविभिः, कालमिव कल्पैः समन्तान्महर्षिभिः परिवृतम्, उग्रशापकम्पितदेहया प्रणयिन्येव विहितकेशग्रहया क्रुद्धयेव कृतभ्रूभङ्गया मत्तयेवाकुलितगमनया प्रसाधितयेव प्रकटिततिलकया जरया गृहीतव्रतयेव भस्मधवलया धवलीकृतविग्रहम्, आयामिनीभिः पलितपाण्डुराभिस्तपसा विजित्य मुनिजनमखिल धर्मपताकाभिरिवोच्छ्रिताभिरमर-लोकमारोढुं पुण्यरज्जुभिरिवोपसंगृहीताभिरतिदूरप्रवृद्धस्य पुण्यतरोः कुसुममञ्जरीभि-

---

समुद्रैं । कनकगिरिमिव स्वर्णाद्रिमिव कुलपर्वतै कुलाचलै । क्रतुमिव यज्ञमिव वैतानिकवह्नयो दक्षिणाग्निगार्हपत्याहवनीयास्तै । कल्पान्तदिवसमिव युगान्तवासरमिव रविभि सूर्यैः कालमिव समयमिव कल्पैः कालावयवैः । धवलीकृतेति । जरया विस्रसया धवलीकृतः शुभ्रीकृतो विग्रह शरीर यस्य स तम् । अथ च जराया विशेषणानि—उग्रेति । उग्र कठिनो य शापस्तेन कम्पित-श्चालितो देहो यया सा तया । प्रणयिन्येवेति । प्रणयिन्येव मनस्विन्येव विहित केशग्रहो यया सा तया । वल्लभापि रतिकलहे केशग्रह करोति । इयमपि केशे लग्नेत्यर्थं । क्रुद्धयेवेति । क्रुद्धयेव कोपाविष्टयेव कृतो भ्रूभङ्गो यया सा तया । क्रुद्धापि भ्रूभङ्गं करोति तथेयं कृतवतीत्यर्थः । मत्तयेवेति । मत्तयेव शौण्डयेव आकुलित गमन गतिर्यस्या सा तया । मत्तापि स्खलद्गतिर्भवति तथेयमपि । प्रसाधितयेव भूषितयेव प्रकटितमाविष्कृत तिलक यया सा तया । भूषितापि स्त्री सतिलका भवति । अस्या अपि देहे तिलका प्रजायन्त इति प्रसिद्धि । गृहीतेति । गृहीत स्वीकृत व्रत यया सा तयेवात एव भस्मधवलया भस्म भूतिस्तद्वद्धवलया शुभ्रया । पुन किंवि-शिष्टम् । जटाभि सटाभिरुपशोभितमलङ्कृतम् । अथ जटा विशिनष्टि—आयामिनीभिर्विस्तार-वतीभि । पलितेति । पलित पाण्डुर कचस्तद्वत्पाण्डुराभि श्वेताभि । तपसेति । तपसाखिलं समग्र मुनिजनमृषिजनं विजित्य धर्मपताकाभिरिव धर्मस्य तपोमयस्य जयध्वजाभिरिवोच्छ्रिताभि-रूर्ध्वीकृताभिरिव । अमरेति । अमरलोकं स्वर्लोकमारोढुमारोहणं कर्तुं पुण्यरज्जुभिरिव

---

यज्ञ हो अथवा सूर्योंसे घिरा प्रलयकालीन दिन हो, अथवा कल्पोंसे घिरा स्वय समय ही हो। (कठोरशाप के भय से ही काम्पती-सी) उसके शरीर को कपवाती हुई, बालों तक पहुँची हुई (—बालों को पकड़े हुई—) प्रेमिका सी प्रतीत होती, उसकी भौंहों पर झुर्री डाले हुई (भौंहों पर बल डाले हुई—) क्रुद्धा नारी-सी प्रतीत होती, उसको लड़खड़ाता बनाये हुई (—स्वय लड़खड़ाकर चलती—) किसी प्रमत्ता-सी प्रतीत होती, उसके शरीर पर तिल उत्पन्न किये हुई (—उसके माथे पर तिलक लगाये हुई—) उसको आभूषित किये हुई और भस्म सरीखी श्वेत (—भस्म लगाये हुई श्वेत—) किसी व्रत धारिणी-सी प्रतीत होती वृद्धावस्था से उसका शरीर श्वेत होगया था। वह जाबालि मुनि अपनी उन जटाओं से सुशोभित था जो लम्बी तथा वृद्धावस्था के कारण श्वेत तथा भूरी हो जाने के कारण, सम्पूर्ण मुनियों को अपने तप से जीत कर ऊपर उठायी हुई (जीत की घोषणा करती हुई) (विजय—पताकाएँ हों और जो देवलोक में चढने के लिये उस द्वारा सगृहीत पुण्यों से बनायी हुई रस्सियाँ हों, और जो मानो बहुत दूर तक बढ़े हुए उसके पुष्प रूपी वृक्ष की पुष्पमजरियाँ हों,

रिवोद्गताभिर्जटाभिरुपशोभितम्, उपरचितभस्मत्रिपुण्ड्रकेण तिर्यक्प्रवृत्तत्रिपथगास्रोतस्त्रयेण हिमगिरिशिलातलेनेव ललाटफलकेनोपेतम्, अधोमुखचन्द्रकलाकाराभ्यामवलम्बितवलिशिथिलाभ्यां भ्रूलताभ्यामवष्टभ्यमानदृष्टिम्, अनवरतमन्त्राक्षराभ्यासविवृताधरपुटतया निष्पतद्भिरतिशुचिभिः सत्यप्ररोहैरिव स्वच्छेन्द्रियवृत्तिभिरिव करुणारसप्रवाहैरिव दशनमयूखैर्धवलितपुरोभागम्, उद्वमदमलगङ्गाप्रवाहमिव जह्नुम्,

---

पवित्ररश्मिभिरिवोपसगृहीताभि स्वीकृताभि । श्रतीति । अतिदूर प्रवृद्धस्यातिदूरं वृद्धिं गतस्य पुण्यतरो श्रेयस्तरोरुद्गताभि प्रादुर्भूताभि कुसुममञ्जरीभिरिव पुष्पवल्लरीभिरिव । ललाटेति । ललाटफलकेन भालपट्टकेनोपेत सहितम् । कीदृशेन । उपेति । उपरचितानि कृतानि भस्मना त्रीणि पुण्ड्रकाणि त्रिरेखामयतिलकानि यस्मिन् । केनेव । तिर्यगिति । त्रिपथगाया एकमुपर्येकं तिर्यगेकमधःस्रोत । इदमभिनवं तिर्यक्प्रवृत्त स्रोतस्त्रयमेव यस्मिन्नेवंभूत तेन हिमगिरिशिलातलेनेव । भ्रूलतेति । भ्रूलताभ्यामवष्टभ्यमानावलम्ब्यमाना दृष्टिर्यस्य स तम् । कीदृशाभ्याम् । अधोमुखी या चन्द्रकलार्धचन्द्रस्तद्वदाकारो ययोस्ताभ्याम् । अवलम्बितेति । वार्धक्यादवलम्बिता आश्रिता या वलयस्त्रिवल्यस्ताभि शिथिलाभ्यां श्लथाभ्याम् । पुनस्तमेव विशिनष्टि— अनवरतेत्यादि । अनवरत यो मन्त्राक्षराभ्यासस्तेन विवृतो विदीर्णो योऽधरपुट ओष्ठपुटस्तस्य भावस्तत्ता तया निष्पतद्भि स्रवद्भिरतिशुचिभिरतिपवित्रै सत्यप्ररोहैरिव सत्याङ्कुरैरिव । स्वच्छेति । स्वच्छा निर्मला या इन्द्रियवृत्तयस्ताभिरिव । करुणेति । शृङ्गारवत्करुणारसोऽपि विशदस्तस्य प्रवाहै स्रोतोभिरिव । एवंविधैर्दशनमयूखै रदनदीप्तिभिर्धवलित शुभ्रीकृत पुरोभागो यस्य स तम् । श्वेतत्वसाधर्म्येण श्वेतप्रवाहप्रकटनसाधर्म्येण च मुनेरुपमानमाह— उद्वमदिति । उद्वमन्बहिरागच्छन्नमलो निर्मलो गङ्गाप्रवाहो जाह्नवीरयो यस्मात्तमेवम्भूत जह्नुमिव । कथा चात्र—भगीरथपथेन प्रवृत्ता गङ्गा कलकलशब्दं कुर्वती शब्दकण्टकानि ध्यानानि भवन्तीति रोषात् महर्षिणा जह्नुना पीता । भगीरथाराधनाच्च पुनर्जानुभ्यामुद्गीर्णा । ततो

---

वह मुनि ऐसे मस्तिष्क को धारण किये हुआ था जिस पर भस्म से त्रिपुण्ड्र का चिन्ह बनाया हुआ था और ( इस कारण ) जो हिमालय की उस चौड़ी शिला के तल सरीखा प्रतीत हो रहा था जिसको गगा की तिरछी बहने वाली तीन धारायें पार कर रही हों। उसकी आँखों पर उलटे मुँह वाली चन्द्रकला के आकार वाली, ( उस भाग पर पड़ी ) लटकती चमड़ी की परत से ढीली हुई भौंहें लटक रही थीं। वह ऋषि गगा की विशुद्ध धारा को उगलते जन्हु राजा सरीखा दिखायी दे रहा था। क्योंकि उस ( के शरीर ) का अग्रभाग, निरन्तर मन्त्र पाठ करते रहने के कारण होठ खुला रहने से उस ( के मुँह ) से निकली तथा सत्य की कोंपलें-सी प्रतीत होतीं अथवा उसकी इन्द्रियों की स्वच्छ भावनाओं सी प्रतीत होतीं अथवा ( उसकी सहज ) करुणा रूपी रस की धाराओं-सी प्रतीत होतीं दन्त-किरणों से श्वेत हो गया था। वह

अनवरतसोमोद्गारसुगन्धिनिश्वासावकृष्टैर्मूर्तिमद्भिः शापाक्षरैरिव सदा मुखभाग-सन्निहितैः परिस्फुरद्भिरलिभिरविरहितम्, अतिकृशतया निम्नतरगण्डगर्तमुन्नततरहनु-घोणमाकरालतारकमवशीर्यमाणविरलनयनपक्ष्ममालमुद्गतदीर्घरोमरुद्धश्रवणविवरमाना-भिलम्बकूर्चकलापमाननमादधानम्, अतिचपलानामिन्द्रियाश्वानामन्तःसयमन-रज्जुभिरिवाततामिः कण्ठनाडीभिर्निरन्तरावनद्धकन्धरं समुन्नतविरलास्थिपञ्जरमंसा-वलम्बियज्ञोपवीतं वायुवशजनिततनुतरङ्गभङ्गमुत्प्लवमानमृणालमिव मन्दाकिनीप्रवाह-

---

जाह्नवीत्युच्यते। मुखनिश्वासस्य सौरभ्यातिशयप्रदर्शनद्वारा तमेव विशिनष्टि—अनवरतेत्यादि। अनवरत य सोमपानस्योद्गारस्तेन सुगन्धी यो निश्वास पवनस्तेनावकृष्टैराकर्षितैर्मूर्तिमद्भिर्देह वद्भि शापाक्षरैरिव शापवर्णैरिव। सदेति। सदा सर्वकाल मुखस्य यो भागोऽग्रिमप्रदेशस्तत्र सन्निहितै पार्श्वगै परिस्फुरद्भिर्दीप्यमानैरलिभिर्भ्रमरैरविरहितमवियुक्तमानन मुखमादधानं बिभ्राणम्। अथ मुखविशेषणानि—अतीति। अतिकृशतया निम्नतरो गम्भीरतरो गण्डगर्त कपोलत परो भागो यस्य तत्। उन्नतेति। उन्नततरेऽत्युच्चे हनु चिबुक घोणा नासा च यस्मिंस्तत्। अतिवृद्धलक्षणमेतत्। आकरालेति। आकरालेषद्भ्का तारका कनीनिका यस्य तत्। अवेति। अवशीर्यमाणा क्षीयमाणा विरलानिबिडा नयनयोर्नेत्रयो पक्ष्ममाला रोम-राजिर्यस्मिंस्तत्। उद्गतेति। उद्गतानि प्रादुर्भूतानि यानि दीर्घरोमाणि तेन रुद्धमावृतं श्रवण-योर्विवर रन्ध्र यस्मिंस्तत्। आनाभीति। आनाभि नाभिपर्यन्त लम्ब प्रलम्ब कूर्चकलाप आस्यलोमसमूहो यस्मिंस्तत्। अतीति। अतिचपलानामतिपारिप्लवानामिन्द्रियाश्वानां करण तुरगमानामन्तर्मध्ये संयमनरज्जुभिरिव नियन्त्रणरश्मिभिरिवातताभिर्विस्तीर्णाभि. कण्ठनाडीभिर्ग-लस्नायुभिरिव निरन्तरम् अवनद्धा सम्बद्धा कन्धरा ग्रीवा यस्मिंस्तवविधमकलुष निर्मलमङ्ग शरीर मुद्वहन्त धारयन्तम्। समुन्नतेति। समुन्नतमुच्चं विरल पेलवमस्थिपञ्जर कङ्कालं यस्मिंस्तथा।

---

ऋषि उन भौंरों से कभी विरहित नहीं रहता था जो निरन्तर आई सोमरस की डकारों (की सुगन्ध) से सुगन्धित निश्वासों से आकृष्ट थे और जो उसके मुख प्रदेश के समीप रहते हुए नाचते हुए साक्षात् शरीरधारी शापाक्षरों सरीखे प्रतीत होते थे। उसकी अत्यन्त कृशता के कारण उसका मुँह ऐसा था कि उसमें कपोलों के गड्ढे बहुत नीचे (गहरे) थे, उसमे ठोडी और नाक बहुत ऊँचे थे, उसमे आँखों की पुतलियाँ कुछ-कुछ भयानक प्रतीत होती थीं, उसमें आँखों की पलकों के बाल (एक-एक करके) बिखर रहे थे और इसीलिये बहुत विरले हो गये थे, उसमें कानों के भीतर उगे हुए लम्बे रोओं से कानों के छेद रुक गये थे और जिस पर नाभि तक लटकी घनी दाढ़ी थी। चपल इन्द्रिय रूपी घोड़ों को भीतर ही भीतर नियन्त्रित करने के लिये प्रयुक्त लगामों-सी प्रतीत होतीं दूर तक फैली हुई कण्ठशिरा उसकी गर्दन पर खूब घनी फैली हुई थीं। वह एक (श्वेत) शरीर धारण किये हुए था, जिसका ककाल इतना उभरा हुआ था कि एक-एक हड्डी अलग-अलग (विरल) (दिखायी देती) थी और उसमें कन्धे पर श्वेत यज्ञोपवीत लटका हुआ था, (इसलिये वह शरीर ऐसा लगता था कि वह वायु के बल से उत्पन्न छोटी-छोटी लहरियों वाला और तैरते हुए बिस तन्तुओं वाला गगा नदी का विशुद्ध

मकलुषमङ्गमुद्वहन्तम्, अमलस्फटिकशकलघटितमक्षवलयमत्युज्ज्वलस्थूलमुक्ताफलग्रथितं सरस्वतीहारमिव चलदङ्गुलिविवरगतमावर्तयन्तम्, अनवरतभ्रमिततारकाचक्रमपरमिव ध्रुवम्, उन्नमता शिराजालकेन जरत्कल्पतरुमिव परिणतलतासञ्चयेन निरन्तरनिचितम्, अमलेन चन्द्रांशुभिरिवामृतफेनैरिव गुणसन्तानतन्तुभिरिव निर्मितेन मानससरोजलक्षालितशुचिना दुकूलवल्कलेनाद्वितीयेनेव जराजालकेन सञ्छादितम्,

---

अंसेति। अंसावलम्बि भुजान्तरावलम्बि यज्ञोपवीतं यज्ञसूत्रं यस्मिन्। वायुवशेति। वायुवशेनानिलमाहात्म्येन जनिता उत्पादितास्तनवः सूक्ष्मास्तरगभङ्गाः कल्लोलविघटनानि यस्मिन्। उत्प्लवेति। उत्प्लावल्येन प्लवमानानि वहमानानि मृणालानि बिसानि यस्मिन्नेवंभूतं मन्दाकिनीप्रवाहमिव गङ्गौघमिव। अत्र तरंगास्थ्नोः श्वेतकृशत्वं यज्ञोपवीतमृणालयोश्च श्वेतसूक्ष्मत्वं साधर्म्यमिति भावः। किं कुर्वन्तम्। अक्षवलयं रुद्राक्षमालामावर्तयन्तं परिवर्तयन्तम्। अथाक्षवलयस्य विशेषणे—अमलेति। अमलानि विशदानि यानि स्फटिकशकलानि तैर्घटितं निर्मितम्। अत्युज्ज्वलेति। अत्युज्ज्वलान्यतिविशदानि स्थूलानि यानि मुक्ताफलानि मौक्तिकानि तैर्ग्रथितं गुम्फितं सरस्वतीहारमिव सरस्वत्या भारत्या हारमिव मुक्ताकलापमिव। अत्र स्फटिकाक्षवलयस्यातिनिर्मलत्वान्मुक्ताफलोपमानम्। चलदिति। चलन्त्यो या अङ्गुलयस्तासां विवरं रन्ध्रं तत्र गतं प्राप्तम्। अनवरतेति। अनवरतं निरन्तरं भ्रमितं पर्यटितं तारकाचक्रं नक्षत्रसमूहो यस्मिन्नेवंभूतमपरं द्वितीयं ध्रुवमिवोत्तानपादजमिव। अत्र स्फाटिकाक्षवलयतारकाणां शुचिवर्तुलत्वमेव साधर्म्यम्। उपविष्टस्य मुनेः स्थिरत्वाद्ध्रुवसाधर्म्यमिति। पुनर्विशिनष्टि—उन्नमतेति। उन्नमतोपरि स्फुरता शिराजालकेन शिरा धमनयस्तासां जालकेन समूहेन निरन्तरं निचितं व्याप्तम्। उच्छूनस्नायुसमूहेनात्यन्तव्याप्तविग्रहमित्यर्थः। केन कमिव। परिणता पाकं गता या लता वल्ल्यस्तासां संचयेन समूहेन। निचितमिति शेषः। जरत्कल्पतरुमिव वृद्धमन्दारमिवेत्युत्प्रेक्षा। अमलेनेति। अमलेन निर्मलेन दुकूलवल्कलेन। दुकूलेन सदृशं वल्कलमिति मध्यमपदलोपी समासः। तेन सञ्छादितमावृतम्। केनेव। अद्वितीयेनापूर्वेण जराजालकेनेव विस्रसासमूहेनेवेत्युत्प्रेक्षा। दुकूलवल्कलं विशिनष्टि—चन्द्रेति। चन्द्रांशुभिरिव शशिज्योत्स्नाभिरिवामृतफेनैरिव पीयूषडिण्डीरैरिव गुणानां विख्यातपश्चरणादीनां संताना समूहास्त

---

प्रवाह ही हो। स्वच्छस्फटिक के खण्डों से निर्मित एवं अत्यन्त चमकीले, बड़े बड़े गोल मोतियों से बने सरस्वती देवी के हार-सी प्रतीत होती हुई अक्षमाला को हिलती हुई अंगुलियों के अन्तराल में वह घुमा रहा था, और इस कारण वह उस दूसरे ध्रुव-सरीखा प्रतीत होता था जिसके चारों ओर तारकाओं का चक्र सदा घूमता रहता है। अत्यन्त उभरी हुई (अर्थात् स्पष्ट दिखायी देती) हुई शिराओं के समूह से वह एक ऐसे वृद्ध कल्पतरु-सरीखा बना हुआ था जो पूर्णतया प्रवृद्ध लताओं के जाल से खूब घना ढका हुआ हो। उसका शरीर रेशमी-से वल्कल वस्त्र से ढका हुआ था—जो वल्कल वस्त्र मानो चन्द्रमा की किरणों का अथवा अमृत की फेनों का अथवा उसके अनेक गुणरूपी तन्तुओं का बना हुआ था। तथा मान सरोवर के जल में धोया जाकर पवित्र हुआ था और (श्वेत होने के कारण) ऐसा प्रतीत होता था कि

आसन्नवर्तिना मन्दाकिनीसलिलपूर्णेन त्रिदण्डोपविष्टेन स्फाटिककमण्डलुना विकच-पुण्डरीकराशिमिव राजहंसेनोपशोभमानम्, स्थैर्येणाचलाना गाम्भीर्येण सागराणां तेजसा सवितुः प्रशमेन तुषाररश्मेर्निर्मलतयाम्बरतलस्य सविभागमिव कुर्वाणम्, वैनतेयमिव स्वप्रभावोपात्तद्विजाधिपत्यम्, कमलासनमिवाश्रमगुरुम्, जरच्चन्दन-तरुमिव भुजङ्गनिर्मोकधवलजटाकुलम्, प्रशस्तवारणपतिमिव प्रलम्बकर्णवालम्,

---

एव तन्तव सूत्राणि तैरिव निर्मितेन रचितेन। मानसेति। मानससरोजलवजलं तेन क्षालित धौतमत एव शुचिना निर्मलेन। पुनस्तमेव मुनिं विशिनष्टि—स्फाटिककमण्डलुनोपशोभमान विराजमानम्। अथ कमण्डलु विशिनष्टि—आसन्नेति। आसन्नवर्तिना समीपस्थेन। मन्दाकिनीति। मन्दाकिनी गङ्गा तस्या सलिल तेन पूर्णेन भृतेन। त्रिदण्डेति। त्रिदण्ड-त्रिपादिका तत्रोपविष्टेन स्थापितेन। मुनेर्धवलीकृतविग्रहवरवर्णनात्कमण्डलोश्च शुभ्रत्व-वर्णनात्तदुपमानमाह—विकचेति। राजहंसेन विकचपुण्डरीकराशिमिव सितसिताम्भोज-समूहमिवेत्युत्प्रेक्षा। पुनर्मुनिं प्रकारान्तरेण विशिनष्टि—स्थैर्येणेति। स्थैर्येण स्थिरतयाचलानां पर्वतानाम्, गाम्भीर्येण गाम्भीर्यगुणेन सागराणां समुद्राणाम्, तेजसा प्रतापेन सवितु सूर्यस्य, प्रशमेनोपशमेन तुषाररश्मेश्चन्द्रस्य, निर्मलतया स्वच्छतयाम्बरतलस्य सविभागमिव स्वकीय-वस्तुन परेभ्य किञ्चिद्विभज्य प्रदानमिव कुर्वाण विदधानम्। अचलादीनां स्थैर्यादयो गुणा अनेनैव सविभागीकृता सन्तीति भाव। अथान्यसादृश्यद्वारा तमेव विशेषयन्नाह—वैनतेय-मिति। वैनतेयो गरुडस्तद्वदिव स्वस्यात्मीयस्य य प्रभावो माहात्म्य तेनोपात्तमङ्गीकृत द्विजेषु ब्राह्मणेष्वाधिपत्य प्रभुत्व येन स तम्। पक्षे द्विजेषु पतत्रिष्वाधिपत्य मुख्यत्व येनेति विग्रह.। कमलेति। कमलासनो ब्रह्मा तमिवाश्रमो मुनिस्थान तत्र गुरु श्रेष्ठम्। पक्ष आश्रमा ब्रह्म-चारिप्रभृतयस्तेषा गुरु प्रवर्तकम्। वर्णाश्रमाश्च ब्रह्मणैव प्रवर्तिता। जरदिति। पुरातने परिमलविशेषाधिक्याज्जरद्विशिष्टचन्दनतरुग्रहणम्। तत्रैव भुजगबाहुल्यम्। अतएव भुजगस्य यो निर्मोक कञ्चुकस्तद्वद्धवला या जटा तयाकुल व्याप्तम्। पक्षे निर्मोक एव जटेति विग्रह।

---

मानो वह दूसरा ही जरा का आवरण हो। (अपने) समीपवर्ती, गगाजल से भरे, तिपाई पर रखे स्फटिक निर्मित कमण्डलु से वह ऐसा सुशोभित था जैसे कि (श्वेत) राजहंस से खिले कमलों की क्यारी हो। वह अपनी दृढ़ता से पर्वतों के साथ, गम्भीरता से समुद्रों के साथ, चमक से सूर्य के साथ, अपनी मृदुता से मृदुकिरण चन्द्रमा के साथ, स्वच्छता से आकाश के साथ मानो बँटवारा करता प्रतीत होता था। अपनी शक्ति से (द्विज) ब्राह्मणों का सम्राट् बना हुआ वह, (द्विजों) पक्षियों का स्वामी बना हुआ विनता पुत्र गरुडसरीखा था, चार आश्रमों—जीवन की चार अवस्थाओं के उपदेष्टा कमलासन (ब्रह्मा) की भाँति वह उस आश्रम का गुरु होने के कारण आश्रम-गुरु था, जैसे पुराना चन्दन का वृक्ष साँपों की केंचुलियो से श्वेत हुई जडों वाला होता है वैसे वह भी केंचुलियों जैसी श्वेत जटाओं से आवृत था। खूब लम्बे (अर्थात् सामान्य से अधिक लम्बे) कानों और पूँछ वाले अच्छी नसल के हाथी की

बृहस्पतिमिवाजन्मसंवर्धितकचम्, दिवसमिवोद्यदर्कबिम्बभास्वरमुखम्, शरत्काल-मिव क्षीणवर्षम्, शन्तनुमिव प्रियसत्यव्रतम्, अम्बिकाकरतलमिव रुद्राक्षवलय-ग्रहणनिपुणम्, शिशिरसमयसूर्यमिव कृतोत्तरासङ्गम्, बडवानलमिव सन्ततपयो-भक्षम्, शून्यनगरमिव दीनानाथविपन्नशरणम्, पशुपतिमिव भस्मपाण्डुरोमाश्लिष्ट-शरीरं भगवन्तं जाबालिमपश्यम्।

---

शेष पूर्ववत्। प्रशस्तेति। प्रशस्त सर्वलक्षणोपेतो वारणपतिर्गजनायकस्तद्वदिव प्रलम्बा कर्णयोर्बाला केशा यस्येति विग्रह। पक्षे प्रलम्बौ लम्बमानौ कर्णौ श्रवणौ वालश्च वालधिर्यस्मिन्। बृहस्पतीति। बृहस्पति सुरगुरुस्तमिव आजन्म जन्ममर्यादीकृत्य संवर्धिता वृद्धिं प्रापिता कचा केशा येनेति स तम्। पक्षे कचनामा बृहस्पते पुत्र इति पुराणे प्रसिद्धम्। शेष पूर्ववत्। दिवसेति। दिवसो वसरस्तद्वदिवोद्यदुद्गच्छदर्कबिम्ब सूर्यमण्डल तद्वद्भास्वर दीप्त मुखमानन यस्य स तम्। पक्ष उद्यदर्कबिम्बेन भास्वरं मुखमादिर्यस्येति विग्रह। शरदिति। शरत्कालो घनात्ययसमयस्तद्वदिव क्षीणानि गतानि वर्षाणि हायनानि यस्य स तम्। पक्षे क्षीर्णं स्वल्पत्व प्राप्त वर्षं वृष्टिर्यस्मिन्। शान्तन्विति। शन्तनुर्भीष्मपिता तद्वदिव प्रियमिष्ट सत्यमेव व्रत यस्य स तम्। पक्षे प्रियो वल्लभ. सत्यव्रतो भीष्मो यस्येति विग्रह। कथा चात्र—महाभारतानुगतानुसन्धेया अम्बिकेति। अम्बिका पार्वती तस्या करतलं पाणितलं तद्वदिव रुद्राक्ष. फलविशेषस्तद्वलयस्य कटकस्य यद्ग्रहण तत्र निपुणम्। सर्वदा तदावर्तनेन कृताभ्यासमित्यर्थ। पक्षे रुद्र ईश्वरस्तस्याक्षमिन्द्रिय लोचनं वर्तुलत्वादेव यद्वलय तस्य ग्रहणं

---

भाँति उसके कानो पर के बाल लम्बे थे। जन्म से ही अपने पुत्र कच को पालने वाले बृहस्पति की भाँति वह भी अपने जन्म से ही लम्बे बालों वाला होने के कारण 'आजन्म सवर्धित कच' था उदय होते सूर्य बिम्ब से चमकते आदि भाग (मुख) वाले दिन की भाँति उदय होते सूर्य से तेजस्वी मुख वाला वह भी 'उद्यदर्कबिम्बभास्वरमुख' था। जैसे वर्षा बन्द होने के कारण शरद् काल 'क्षीणवर्ष' हो जाता है—वह (अपनी आयु के) वर्षों के क्षीण हो जाने से 'क्षीणवर्ष' हो गया था। शन्तनु को जैसे (अपना पुत्र) भीष्म प्रिय था और इस कारण वह प्रियसत्यव्रत था वैसे ही वह ऋषि सत्य वचन प्रिय होने से प्रियसत्यव्रत था। पार्वती की हथेली जैसे (रुद्राक्ष) शिवजी की गोल आँखों को पकड़ने में निपुण होने के कारण रुद्राक्ष-वलय-ग्रहण निपुण है वैसे ही वह अपनी रुद्राक्ष माला को पकड़ने में चतुर था। शिशिर ऋतु का सूर्य उत्तर दिशा का सग करता है—इसलिये कृतोत्तरासग होता है—उसने अपने शरीर पर उत्तरीय वस्त्र धारण किए हुए था। वडवानल सदा (समुद्री) जल को भक्षण करता रहता है—इसलिये सततपयोभक्ष कहलाता है, वह सदा दुग्ध का भक्षण करता था। (जनता से) शून्य नगर जैसे दीन, स्वामि रहित तथा टूटे-फूटे घरों वाला होता है, वह गरीबों, असहायों और दुखियों का आश्रय था। और शिवजी जैसे भस्म से श्वेत तथा उमा (पार्वती) से आलिङ्गित शरीर वाले रहते हैं वैसे ही उसका शरीर भस्म से (अथवा भस्म-सरीखे) पाण्डुर बालों वाला था।

अवलोक्य चाहमचिन्तयम्—'अहो प्रभावस्तपसाम्। इयमस्य शान्तापि मूर्तिरुत्तप्तकनकावदाता परिस्फुरन्ती सौदामिनीव चक्षुषः प्रतिहन्ति तेजांसि। सततमुदासीनापि महाप्रभावतया भयमिवोपजनयति प्रथमोपगतस्य। शुष्कनलकाश-

---

पिधान तत्र निपुण चतुरम्। रतै चन्द्रकलाप्रकाशस्यानिवार्यत्वेन लज्जावशात्पार्वत्या तृतीय लोचन करतलेन पिहितमिति भाव। शिशिरेति। शिशिरसमय शीतकालस्तस्य यः सूर्यो भगवांस्तद्वदिव कृतो विहित उत्तरासङ्गो बृहतिका येन स तम्। पक्ष उत्तरस्या दिश सङ्ग· सश्लेषो येनेति विग्रह। वडवेति। वडवानल और्वस्तमिव सतत निरन्तर पय एव क्षीरमेव भक्ष यस्य स तम्। पक्षे पय पानीय तदेव भक्ष यस्येति भाव। शून्येति। शून्यमुद्वसितं यन्नगर पुर तद्वदिव। शून्ये धनिनां निवासायोग्यत्वाद्दीनादिग्रहणम्। तत्र दीनान्यशोभावन्त्य-नाथान्यप्रभूणि विपन्नान्यविद्यमानभावानि शरणानि गृहाणि यत्र नगर इति। अन्यत्र दीना दु खाभिभूता अनाथा स्वामिरहिता विपन्ना इव विपन्ना मृतकल्पा व्याध्यादिपरिभूतास्तेषा शरण परित्राणहेतुम्। पशुपतिमिवेति। पशुपति शम्भुस्तमिव भस्मवत्पाण्डुराण्यतिवार्धक्यात्तानि रोमाणि तैराश्लिष्ट शरीर यस्य तम्। पक्षे भस्मवत्पाण्डुरोमा गौरी तया चाश्लिष्टमर्धाङ्गीकृत शरीर यस्येति विग्रह। अन्वयस्तु प्रागेवोक्त।

जाबालि निरीक्ष्य किं कृतवानित्याह—अवलोक्येति। अवलोक्य निरीक्ष्य। च पुनरर्थे। अहमचिन्तयमेवं विचारितवान्। चिन्ता त्वेवं चिन्तयन्तमेव मामित्यवधिकम्। तामेवाह—अहो इत्याश्चर्ये। तपसा प्रभावो माहात्म्यम्। इयमस्य मुने शान्तापि मूर्ति· शरीरमुग्रप्राबल्येन तप्तमुष्णीकृत यत्कनक सुवर्ण तद्वदवदाता निर्मला परिस्फुरन्ती देदीप्यमाना सौदामिनीव विद्युदिव चक्षुषो नेत्रस्य तेजांसि महांसि प्रतिहन्ति प्रतिघात करोति। आभिमुख्येन गच्छन्तीनां नयनरश्मीनां बलवद्वेगसौदामिनीतेजसा प्रतिनिवृत्तिरनुभवसिद्धैवेति भाव। इत्र स्वभाववर्णनम्। विरोधोऽपि शान्तस्योत्तप्तकनकावदाततेति विरोध। सततेति। सतत निरन्तरमुदासीनापि मध्यस्थापि महाप्रभावतयात्युग्रप्रतापतया प्रथमोपगतस्या-पूर्वागतस्य भयमिव भीतिमिवोपजनयति। अन्येषां करोतीत्यर्थ। अत्रापि मध्यस्थस्य भयोत्पादकत्वमिति विरोध। उभयत्रोत्प्रेक्षा। शुष्केति। तनु स्वल्प तपो येषां तेषामपि तपस्विनां तेजो नित्य सर्वदा प्रकृत्या स्वभावेनासहिष्णवसहनशील भवति। कीदृशम्। शुष्काणि

---

और उस ( जाबालि ) को देखकर मैंने ( मन-ही-मन ) सोचा :—"तपस्या का प्रभाव निश्चय ही आश्चर्यजनक है। यह इसका शरीर यद्यपि सौम्य है तथापि तपाये हुए सोने की भाँति देदीप्यमान है और इसीलिये ( आकाश में ) दमकती बिजली की भाँति आँख की ज्योति पर प्रहार करता है, दृष्टि को चौंधियाता है। और यद्यपि यह ( शरीर ) सदा उदासीन निरपेक्ष रहता है, तथापि अपनी अत्यन्त शक्तिमत्ता से उसको देखने के लिये प्रथम बार आये हुए व्यक्ति में मानो भय उत्पन्न करता है। स्वल्प तप वाले तपस्वियों का तेज, सूखे सरकण्डों पर अथवा

कुसुमनिपतितानलचटुलवृत्ति नित्यमसहिष्णु तपस्विनां तनुतपसामपि तेजः प्रकृत्या भवति। किमुत सकलभुवनतलवन्दितचरणानामनवरततपःक्षपितमलानां करतलामलकवदखिलं जगदालोकयतां दिव्येन चक्षुषा भगवतामेवंविधानामघक्षयकारिणाम्। पुण्यानि हि नामग्रहणान्यपि महामुनीनाम्, किं पुनर्दर्शनानि। धन्यमिदमाश्रमपदमयमधिपतिर्यत्र। अथवा भुवनतलमेव धन्यमखिलमनेनाधिष्ठितमवनितलकमलयोनिना। पुण्यभाजः खल्वमी मुनयो यदहर्निशमेनमपरमिव नलिनासनमपगतान्य-

---

यानि नलकाशकुसुमानि यत्र निपतितो योऽनलो वह्निस्तद्वच्चटुला त्वरिता वृत्तिर्यस्य तत्। एतस्य पर्यवसितार्थमाह—किमुतेति। एवविधानामघक्षयकारिणां पापविनाशकर्तॄणां किमुत किमाश्चर्यम्। अथ तानेव विशिनष्टि—सकलेति। सकलभुवनतलैर्वन्दितानि नमस्कृतानि चरणानि येषां ते तथा तेषाम्। अनवरतेति। अनवरतं तपसा क्षपिता क्षयं प्रापिता मला पापानि यैस्ते तथा तेषाम्। करतलेति। करतलामलकवत्पाणिस्थधात्रीफलवद्दिव्येन चक्षुषा ज्ञानलोचनेनाखिलं समग्रं जगद्विष्टपमालोकयतां पश्यतां भगवतां माहात्म्यवतामेवंविधानां पूर्वोक्तगुणविशिष्टानाम्। हि निश्चितम्। अपक्षयकारिणां पापविनाशकानाम्। महामुनीनामिति। महातपस्विनां नामग्रहणान्यप्यभिधानोच्चारणमात्राण्यप्यायुष्ट्वं तत्कारणकार्योपचारात्पुण्यानि पुण्यजनकानि। दर्शनानीति। दर्शनानि तेषामवलोकनानि समग्रपापापहारकाणीत्यर्थे किं पुनर्भण्यते। अवश्यं तदपहारकाणीत्यर्थः। धन्यमिति। इदं प्रत्यक्षमाश्रमपदं मुनिस्थानं धन्यं कृतपुण्यम्। अत्रार्थे हेतुमाह—यत्रेति। यस्मिन्नाश्रमपदेऽयं महान्मुनिरधिपतिर्नेता। अथवेति पक्षान्तरे। अवनीति। अवनितलकमलयोनिना भुवनतलब्रह्मणानेन प्रत्यक्षोपलभ्यमानेन मुनिनाधिष्ठितमाश्रितं भुवनतलमेव जगतीतलमेव धन्यं कृतपुण्यम्। 'सुकृती पुण्यवान्धन्यः' इति हैमः। आश्रमस्य तदन्तःपातित्वादिति भावः। तच्छिष्याणां धन्यतां प्रतिपादयन्नाह—पुण्येति। खलु निश्चयेन। अमी मुनयः पुण्यभाजः सुकृतभाजः। यदिति हेत्वर्थे। अहर्निशं ब्रह्माणमपरमिवान्यमिव नलिनासनं कमलयोनिं समुपासते सेवां कुर्वते। तानेव शिष्यान्विशिनष्टि—अपेति। अपगतो दूरीभूतोऽन्यव्यापारस्तदितरकार्यं येभ्यस्ते तथा। मुखेति। मुखस्य वदनस्य

---

कास पर अथवा फूलों पर गिरी हुई आग की-सी क्रिया करने वाला होने से, ( दूसरे तेजों को ) कभी सहन नहीं करता, फिर भला सारे ससार भर में पूजित चरणों वाले, निरन्तर की गयी तपस्या द्वारा ( अपने ) पाप को नष्ट किये हुए, अपनी दिव्य दृष्टि द्वारा सारे ससार को अपनी हथेली पर रखे आँवले-सा ( छोटा ) देखने वाले इस ( जाबालि ) के सदृश दिव्य पुरुषों के तेज का तो क्या कहना ! महामुनियों के नाम का ( तो केवल ) दुहराना ही पुण्य कार्य है। फिर उनके दर्शन करते रहना तो ( और भी अधिक ) पुण्य कार्य है। जहाँ का यह ( जाबालि ) अधिपति है, वह यह आश्रम धन्य है। अथवा पृथ्वी के इस कमलयोनि ब्रह्मा-से अधिष्ठित यह सारा भूमण्डल ( संसार ) ही धन्य है। निश्चय ही ये मुनिजन पुण्य के भागी हैं जो दिन-रात, दूसरे ब्रह्मा के सदृश इसकी संगति में पुण्य कथायें सुनते हुए और इसके मुख को देखने में

व्यापारा मुखावलोकननिश्चलदृष्टयः पुण्याः कथाः शृण्वन्तः समुपासते। सरस्वत्यपि धन्या यास्य तु सततमतिप्रसन्ने करुणाजलनिस्यन्दिन्यगाधगाम्भीर्ये रुचिरद्विज-परिवारा मुखकमलसम्पर्कमनुभवन्ती निवसति हंसीव मानसे। चतुर्मुखकमलवासिभिश्चतुर्वेदैः सुचिरादिवेदमपरमुचितमासादितं स्थानम्। एनमासाद्य शरत्कालमिव कलिजलदसमयकलुषिताः प्रसादमुपगताः पुनरपि जगति सरित इव सर्वविद्याः। नियतमिह सर्वात्मना कृतावस्थितिना भगवता परिभूतकलिकालविलसितेन धर्मेण

---

मर्थान्मुनिरिति शेष। तस्य यदवलोकन निरीक्षण तेन निश्चला निमेषरहिता दृष्टिर्येषा ते तथा। किं कुर्वन्तः। पुण्या पवित्रा कथा किंवदन्ती शृण्वन्त आकर्णयन्त। तद्वदनागताया सरस्वत्या श्लाघा कुर्वन्नाह—सरस्वतीति। सरस्वत्यपि भारत्यपि धन्या श्लाघ्या। तु पुनरर्थे। या अस्य मुनेर्मुखमेव कमल नलिनं तस्य सपर्क सबन्धमनुभवन्ती साक्षात्कुर्वन्ती मानसे मनसि निवास करोति। उभयो साम्यमाह—हंसीति। यथा मानसे सरसि हसी मराली निवसति तथेयम-पीत्यर्थ। अत्र प्रसन्नेत्यादिविशेषणानि मानसे मनसि सरसि च स्वबुद्ध्या योजनीयानि। अतीति। अतिशयेन प्रसन्ने प्रसादगुणयुक्ते। करुणेति। करुणा परदु खप्रहाणेच्छा सैव जल तस्य तयोर्वा निस्यन्दिनि स्राविणि। अगाधेति। अगाधमतलस्पर्श गाम्भीर्यं गम्भीरता यस्मिन्। रुचिरेति। रुचिरा मनोज्ञा ये द्विजा दन्तास्त एव परिवार परिच्छदो यस्या सेति भारत्या विशेषणम्। चतुरिति। चत्वारि यानि मुखकमलानि तत्र वासिभि स्थायिभिश्चतुर्वेदैर्ऋग्यजु प्रभृतिभि सुचिरादिव चिरकालादिवेदमपर द्वितीयम्। कमलस्य कदाचित्सकोचसभवात्। उचित योग्य स्थानमासादित प्राप्तम्। एनमिति। एनं मुनिं शरत्कालमिव घनात्ययसमयमिवासाद्य प्राप्य जगति लोके पुनरपि द्वितीयवारमपि सर्वविद्याश्चतुर्दशविद्या प्रसाद नैर्मल्यमुपगता प्राप्ता। का इव। सरितो नद्य इव। यथा शरत्कालं प्राप्य ता एव नैर्मल्य भजन्ति। उभयोरेकविशेषण माह—कलीति। कलिरेव कलौ वा यो जलदसमयो मेघकालस्तेन कलुषिता मलिनीकृता।

---

स्थिर आँखें किये हुए, सारे दूसरे काम छोड़े हुए—उपस्थित रहते है। (वाग्देवी) सरस्वती भी धन्य है, क्योंकि वह इसके कमल सदृश मुख का सम्यक् अनुभव करती हुई और (बात करते समय उसके) सुन्दर दाँतों से घिरी हुई, उसके अत्यन्त प्रशान्त, करुणा-प्रवाह को बहाते हुए, अथाह गम्भीर मन मे रहती है—मानो वह वह हंसी हो जो सुन्दर पक्षियों से घिरी हुई, कमलों के सम्पर्क को अनुभव करती हुई, सदा पूर्णतया स्वच्छ जल वाले, जल से परिपूर्ण अथाह मान सरोवर में रहती है। ब्रह्मा के कमल-सदृश चार मुखों के निवासी चार वेदों ने निश्चय, बहुत देर मे ही, यह दूसरा उचित निवास-स्थान प्राप्त किया है। इसको प्राप्त करके ससार की सारी विद्याएँ, जो कलियुग रूपी वर्षा ऋतु से मलिन हो गयी थीं अब फिर वैसे ही स्वच्छ हो गयी हैं जैसे कि वर्षा ऋतु मे मैली हुई नदियाँ शरत् ऋतु में फिर स्वच्छ जल वाली हो जाती हैं। निश्चय ही भगवान् धर्म यहाँ पूरे रूप में रहता हुआ, कलियुग की चेष्टाओं को (जिनसे धर्म चौथाई रह जाता है) पराजित किये हुआ, सत्ययुग का स्मरण नहीं करता।

न स्मर्यते कृतयुगस्य। धरणितलमनेनाधिष्ठितमालोक्य न वहति नूनमिदानीं सप्तर्षिमण्डलनिवासाभिमानमम्बरतलम्। अहो महासत्त्वेयं जरा यास्य प्रलयरविरश्मिनिकरदुर्निरीक्ष्ये रजनिकरकिरणपाण्डुशिरोरुहे जटाभारे फेनपुञ्जधवला गङ्गेव पशुपतेः क्षीराहुतिरिव शिखाकलापे विभावसोर्निपतन्ती न भीता। बहलाज्यधूमपटलमलिनीकृताश्रमस्य भगवतः प्रभावाद्भीतमिव रविकिरणजालमपि दूरतः परिहरति तपोवनम्। एते च पवनलोलपुञ्जीकृतशिखाकलापा रचिताञ्जलय इवात्र

---

नियतमिति। नियत निश्चितमिहास्मिन्नाश्रमे सर्वात्मना सर्वप्रकारेण कृतावस्थितिर्येन स तथा तेन भगवता माहात्म्यवता। परीति। परिभूत न्यक्कृत कलिकालस्य विलसित चेष्टित येनैवंभूतेन धर्मेण न स्मर्यते। कृतयुगस्येति कर्मणि षष्ठी 'मातु स्मरति' इतिवत्। धरणीति। नूनं निश्चितमनेन मुनिना धरणीतलमधिष्ठितमालोक्य निरीक्ष्याम्बरतलं व्योमतलमिदानीं साम्प्रत सप्तर्षिमण्डलनिवासाभिमानमिति सप्तर्षीणां कश्यपप्रभृतीना यन्मण्डल समूहस्तस्य यो निवासोऽवस्थान तेन योऽभिमानोऽहंकारस्त न वहति न धत्ते। अत्र बहूना ऋषीणां सत्त्वात्। अहो इत्याश्चर्ये। महासत्त्वा महाधैर्येय जरा विस्रसा यास्य मुनेर्जटाभारे सटासमूहोपरि निपतन्ती पतन कुर्वती न भीता न त्रस्ता। अत्रार्थे उपमानद्वयं प्रदर्शयति—पशुपतीति। पशुपतेरीश्वरस्य जटाभारे सटासमूहे गङ्गेव स्वर्णदीव। क्षीरेति। विभावसोर्वह्नेः शिखाकलापे ज्वालासमूहे क्षीराहुतिरिव क्षीरस्य दुग्धस्याहुति। वह्नौ प्रक्षेप इवेत्यर्थः। गङ्गां विशिनष्टि—फेनेति। फेनस्य डिण्डीरस्य य पुञ्ज समूहस्तेन धवलोज्ज्वला। इयमपि धवला भवति। जटां विशिनष्टि—प्रलयेति। प्रलय कल्पान्तस्तस्मिन्यो रवि सूर्यस्तस्य यो रश्मिनिकर. किरणसमूहस्तद्वत् दुर्निरीक्ष्ये विलोकयितुमशक्ये। रजनीति। रजनिकरश्चन्द्रस्तस्य किरणा मयूखास्तद्वत्पाण्डूनि श्वेतानि शिरोरुहाणि केशा यस्मिन्। बहलेति। बहल निबिडं यदाज्य सर्पिस्तस्य धूमपटल तेन मलिनीकृत श्यामतां प्रापित आश्रमो यस्यैवंविधस्य भगवतो मुने प्रभावान्माहात्म्याद्भीतमिव त्रस्तमिव रविकिरणजाल सूर्यरश्मिसमूहस्तपोवनं मुनिस्थानं दूरत परिहरति दूर एव त्यजति। मालिन्यस्य तमःप्रतिनिधीभूतस्य सूर्यरश्मिभिर्विरोधात्। मालिन्याश्रमाधिपतेर्मुने प्रभावाद्भीतिरुचितैवेति

---

निश्चय ही इस से अधिष्ठित भूमण्डल को देख कर आकाश सप्तर्षि नाम के नक्षत्र मण्डल के अपने में रहने के गर्व को अब अनुभव नहीं करता है। आश्चर्य है, यह फेन पुञ्ज-सरीखी श्वेत वृद्धावस्था तो बड़ी बलवती है जो इसके प्रलयकालीन सूर्य की किरणों के सदृश कठिनता से देखे जाने योग्य, चन्द्रमा की किरणों के समान श्वेत हुए, घने जटासमूह पर, शिवजी की जटाओं पर गंगा के समान अथवा अग्नि की शिखाओं पर दूध की आहुति के समान गिरती हुई नहीं डरती है। (आहुति दिये हुए) प्रभूत घृत के धुएँ से मैले किये हुए आश्रम वाले भगवान् (जाबालि) के प्रभाव से मानो भयभीत होकर सूर्य की किरणों का समूह इस तपोवन को दूर से ही छोड़ देता है। और ये वायु से प्रकम्पित होकर एकत्रीकृत बहुत-सी शिखाओं वाली (पवित्र) अग्नियाँ मानो हाथ जोड़ कर ही, इसके प्रति अपनी प्रीति के कारण, मन्त्रों से

मन्त्रपूतानि हवींषि गृह्णन्त्येतत्प्रीत्याशुशुक्षणयः। तरलितदुकूलवल्कलोऽयं चाश्रम-लताकुसुमसुरभिपरिमलो मन्दमन्दचारी सशङ्क इवास्य समीपमुपसर्पति गन्धवाहः। प्रायो महाभूतानामपि दुरभिभवानि भवन्ति तेजांसि। सर्वतेजस्विनामयं चाग्रणीः। द्विसूर्यमिवाभाति जगदनेनाधिष्ठितं महात्मना। निष्कम्पेव क्षितिरेतदवष्टम्भात्। एष प्रवाहः करुणारसस्य, सन्तरणसेतुः संसारसिन्धोः, आधारः क्षमाम्भसाम्, परशुस्तृष्णालतागहनस्य, सागरः सन्तोषामृतरसस्य, उपदेष्टा सिद्धिमार्गस्य, अस्त-गिरिरसद्ग्रहकस्य, मूलमुपशमतरोः, नाभिः प्रज्ञाचक्रस्य, स्थितिवंशो धर्मध्वजस्य,

---

भाव। एते चेति। एते समीपवर्तिन आशुशुक्षणयो वह्नय। पवनेति। पवनेन वायुना लोलश्चपल पुञ्जीकृत समूहीकृतः शिखाकलापो ज्वालासमूहो येषां ते तथा। तथा रचिताञ्जलय इव विहिताञ्जलय इव। एतत्प्रीत्यैतन्मुनिस्नेहेन मन्त्रपूतान्यृचापवित्राणि हवींषि होतव्यानि गृह्णन्ति स्वीकुर्वन्ति। 'अग्निर्वैश्वानरो वह्नि शिखावानाशुशुक्षणि' इत्यमर। गन्धेति। गन्धवाहो वायुरस्य मुने समीपं पार्श्वे सशङ्क इव भीताशय इवोपसर्पति गच्छति। अथ साशङ्कत्वे हेतुं प्रदर्शयन्नाह—तरलितेति। तरलितानि कम्पितानि दुकूलवल्कलानि येन स तथा। अयमिति सार्शनप्रत्यक्ष। आश्रमेति। आश्रमलताकुसुमानां सुरभि परिमलो यस्मिन्नत एव मन्दमन्दचारी शनै शनै सञ्चरमाण। प्राय इति। प्रायो बाहुल्यार्थेऽव्ययम्। महाभूतानामपि पृथिव्यादीनामपि तेजांसि महांसि दुरभिभवानि दु खेनाभिभवितु शक्यानि भवन्ति। अयं चेति। अयं च मुनि सर्वतेजस्विना समग्रधामवतामग्रणीर्मुख्य। अनेनेति। अनेन मुनिना महात्मना प्रकृष्टस्वरूपेणाधिष्ठितमाश्रित जगद्द्विसूर्यमिव द्वौ सूर्यौ यत्र तद्वदिव। निष्कम्पेति। एतस्य मुनेरवष्टम्भादालम्बात्क्षितिर्वसुधा निष्कम्पेव निर्वेपथुरिव। अथ च कियन्ति विशेषणानि रूपकालङ्कृतिद्वारा प्रदर्शयन्नाह—एषेत्यादि। एष मुनि करुणारसस्य प्रवाह ओघ। संसार-सिन्धोर्भवाम्भोधे संतरणे सेतु सेतुबन्ध। क्षमाम्भसा क्षान्तिसलिलानामाधारोऽम्भसा बन्ध। तृष्णैव लता तद्गहनस्य परशु कुठार। सन्तोष एवामृतरस. पीयूषद्रवस्तस्य सागर समुद्र।

---

पवित्र की गयी हवियों को ग्रहण करती हैं। और इसके रेशमी से वल्कल वस्त्रों को हिलाता, आश्रम ( में उगी हुई ) लताओं के पुष्पों की गन्ध से सुगन्धित हुआ यह वायु धीरे धीरे चल रहा है और इसके समीप डरता सा ही पहुँचता है। साधारणतया तो, पाँच महाभूतों के तेज भी कठिनता से पराभव करने योग्य होते हैं और यह तो सभी तेजस्वियों का मुखिया है। इस महात्मा से अधिष्ठित यह ससार मानो दो सूर्यों वाला प्रतीत होता है। इसके द्वारा अधिष्ठित यह पृथ्वी मानो स्थिर ही प्रतीत होती है। यह तो ( इससे बहती ) करुणारस की नदी सरीखा प्रतीत होता है, ससाररूपी समुद्र को पार करने का पुल सरीखा प्रतीत होता है, क्षमारूपी जलों का भण्डार-सरीखा है, तृष्णारूपी लताओं (वृक्षों) के वन को काटने के लिये कुल्हाड़ी सरीखा है, सन्तोषरूपी अमृत का स्रोतभूत सागर ही है, सिद्धियों ( आध्यात्मिक ससिद्धियों ) के मार्ग को बतलाने वाला है; दुष्ट ( भूल भरे ) विचाररूपी ग्रहों का अस्ताचल-सरीखा—उनको नष्ट कर देनेवाला है, शांतिरूपी वृक्ष का मूल है, बुद्धिरूपी चक्र का केन्द्र है; धर्मरूपी पताका का

तीर्थं सर्वविद्यावताराणाम्, वडवानलो लोभार्णवस्य, निकषोपलः शास्त्ररत्नानाम्, दावानलो रागपल्लवस्य, मन्त्रः क्रोधभुजङ्गस्य, दिवसकरो मोहान्धकारस्य, अर्गलाबन्धो नरकद्वाराणाम्, कुलभुवनमाचाराणाम्, आयतनं मङ्गलानाम्, अभूमिर्मदविकाराणाम्, दर्शकः सत्पथानाम्, उत्पत्तिः साधुतायाः, नेमिरुत्साहचक्रस्य, आश्रयः सत्त्वस्य, प्रतिपक्षः कलिकालस्य, कोशस्तपसः, सखा सत्यस्य, क्षेत्रमार्जवस्य, प्रभवः पुण्यसञ्चयस्य, अदत्तावकाशो मत्सरस्य, आरातिर्विपत्तेः, अस्थानं परिभूतेः, अननुकूलोऽभिमानस्य, असम्मतो दैन्यस्य, अनायत्तो रोषस्य, अनभिमुखः सुखानाम्। अस्य भगवतः

---

सिद्धिमार्गस्य मोक्षपदव्या उपदेष्टोपदेशक । असद्ग्रहकस्याशुभग्रहस्यास्तगिरिरस्ताचल । उपशमतरोः शमताद्रुमस्य मूल बुध्नः। प्रज्ञाचक्रस्य प्रतिभाचक्रस्य नाभिर्मध्यप्रदेश । धर्मध्वजस्य सुकृतकेतो स्थितिवशोऽवस्थानवेणु । सर्वविद्यावताराणा समग्रविद्याप्रदेशाना तीर्थं घट्ट । लोभार्णवस्य लिप्सासमुद्रस्य वडवानल और्वं । शास्त्ररत्नाना सिद्धान्तमणीना निकषोपल कषणपट्ट । रागपल्लवस्येच्छाकिसलयस्य दावानलो वनवह्नि.। क्रोधभुजगस्य कोपसरीसृपस्य मन्त्र.। मोहान्धकारस्याज्ञानतिमिरस्य दिवसकर सूर्य । नरकद्वाराणा दुर्गतिद्वाराणामर्गलाबन्ध परिघबन्ध । आचाराणा चरिताना कुलभुवन मूलगृहम्। मङ्गलाना श्रेयसामायतनं गृहम्। मदविकाराणामहंकारवृत्तीनामभूमिरूषरक्षेत्रम्। सत्पथाना शोभनमार्गाणा दर्शक उपदेष्टा। साधुतायाः शुभावस्थोत्पत्ति । उत्साह. प्रगल्भता स एव चक्र तस्य नेमिर्धारा। सत्त्वस्य धैर्यस्याश्रय आधार । कलिकालस्य कलियुगस्य प्रतिपक्ष शत्रु । तपस प्रसिद्धस्य कोशो भाण्डागारम्। सत्यस्य सखा मित्रम्। आर्जवस्य मार्दवस्य क्षेत्र सस्योत्पत्तिस्थलम्। पुण्यसचयस्य धर्मसमूहस्य प्रभव उत्पत्तिस्थलम्। मत्सरस्येर्ष्याया अदत्तावकाश । विपत्तेरापदोऽरातिः शत्रु.। परिभूते पराभवस्यास्थानमपदम्। अभिमानस्याहकृतेरननुकूलोऽहितकारक । दैन्यस्यासमतो-

---

आधारभूत दण्ड है, समग्रज्ञानरूपी सीढ़ियो से युक्त तीर्थस्थान ( घाट ) है, लोभरूप समुद्र को पीनेवाला समुद्राग्नि है, शास्त्ररूपी रत्नों को परखने की कसौटी है, आसक्तिरूप पत्रावलि के लिये वनाग्नि है, क्रोधरूपी सर्प को वश मे करने के लिये मन्त्र है, मोहरूपी अन्धकार का विनाशक सूर्य है, नरकरूपी दरवाजों को रोकने की अर्गला है, शुद्ध आचार-व्यवहारों का निवासस्थान है, और सभी मागलिक वस्तुओं का ( मानो ) निवासस्थान ही है। इसमे आवेग तो पनपते ही नहीं हैं, सन्मार्गों का वह दर्शक है, भलाई का तो उत्पत्तिस्रोत ही है, उत्साह ( शक्ति ) रूपी चक्र की ( आश्रयभूत ) नेमि नाभि है, महत्ता का आश्रय ( उत्पत्तिस्थान ) है, कलियुग का शत्रु है, तप का कोषगृह है, सत्य का मित्र है, सीधेपन का उत्पत्ति स्थान-क्षेत्र है, पुण्य कर्मों का स्रोत है, ईर्ष्या को कभी ( मन में ) अवसर नहीं देता, अभाग्य का शत्रु है, अपमान को स्थान नहीं देता; अभिमान के अनुकूल कभी नहीं होता—कभी अभिमान नहीं करता, तुच्छता अथवा दीनता का मित्र नहीं है, क्रोध के वशीभूत नहीं होता और ऐन्द्रियिक सुखों की ओर कभी नहीं आकर्षित होता। इस महाराज की कृपा से ही इस तपोवन में कहीं

प्रसादादेवोपशान्तवैरमपगतमत्सरं तपोवनम्। अहो प्रभावो महात्मनाम्। अत्र हि शाश्वतिकमपहाय विरोधमुपशान्तात्मानस्तिर्यञ्चोऽपि तपोवनवसतिसुखमनुभवन्ति। तथा हि। एष विकचोत्पलवनरचनानुकारिणमुत्पतच्चारुचन्द्रकशतं हरिणलोचनद्युति-शबलमभिनवशाद्वलमिव विशति शिखिनः कलापमातपाहतो निःशङ्कमहिः। अयमुत्सृज्य मातरमजातकेसरैः केसरिशिशुभिः सहोपजातपरिचयः क्षरत्क्षीरधारं पिबति कुरङ्गशावकः सिंहीस्तनम्। एष मृणालकलापाशङ्किभिः शशिकरधवलं सटा-

---

ऽस्वीकृत। रोषस्थानायत्तोऽनधीन। सुखानामनभिमुख पराङ्मुख। अस्येति। अस्य भगवतो मुने प्रसादादेव माहात्म्यादेव उपशान्त शान्तिं प्राप्त वैर विरोधो यस्मिन्। अपेति। अपगतो दूरीभूतो मत्सर परगुणोत्कर्षासहन यस्मिन्नेवंभूत तपोवनम्। वर्तत इति क्रियाध्याहार। अत्रार्थे साधारण कारणमाह—अहो इति। अहो इत्याश्चर्ये। महात्मना महानुभावानां प्रभावो माहात्म्यम्। एतदेव विशेषतो दर्शयन्नाह—अत्रेति। हि निश्चितम्। अत्र तपोवने शाश्वतिकं सदातनं विरोध वैरमपहाय दूरीकृत्योपशान्तात्मान प्रशान्तात्मानस्तिर्यञ्चोऽपि पशवोऽपि तपोवनवसतिसुख मुनिस्थाननिवाससातमनुभवन्त्यनुभवविषयीकुर्वन्ति। तदेव दर्शयन्नाह—तथेति। तथा हि। एषोऽहि. सर्पो विकच विकसित यदुत्पलं नीलकमल तस्य वन तस्य या रचना निर्मितिस्तदनुकरोत्येवंशीलं तत्तथा। उत्पतदिति। उत्पतदूर्ध्वं गच्छच्चारु मनोहारि चन्द्रकशत मेचकशत यस्मिन्। हरिणेति। हरिणस्य मृगस्य या लोचनद्युतिर्नेत्रकान्तिस्तद्वच्छ-बल कर्बुरमेवंभूत शिखिनो मयूरस्य कलापं प्रचालकमातपेन सूर्यालोकेनाहत पीडितो निःशङ्क निर्भय विशति प्रविशति। कमिव। अभिनव प्रत्यग्र सादा शष्पाणि सन्त्यत्रेति शाद्वलो हरित-प्रदेशस्तमिव। अयमिति। अयं कुरङ्गशावको मातरमम्बामुत्सृज्य विहायाजातकेसरैरनुत्पन्नसटै केसरिशिशुभिरिभारिबालकै सह समुपजात समुत्पन्न परिचय संस्तवो यस्यैवंभूत सिंहीस्तन पिबति पानं करोति। क्षरन्तीति। क्षरन्ती स्रवन्ती क्षीरधारा यस्मिन्। 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्व। एष इति। एष समीपवर्ती। मृणालेति। मृणालानां बिसानां कलापं समूहमा-

---

भी वैर और ईर्ष्या नहीं हैं। महात्माओं की शक्ति आश्चर्यजनक होती है। निश्चय ही यहाँ अपना सदातन विरोधभाव छोड़ कर, शान्तात्मा हुए, पशु भी तपोवन में रहने का सुख अनु-भव करते हैं। जैसे कि—यह साँप, सूर्य की (प्रखर) धूप से दुखी हुआ, निर्भय होकर मयूर की पूछ (की छाया) में, प्रविष्ट हो रहा है कि वह कोई ताजी हरी घास का वह भूभाग हो कि जो पूर्णतया विकसित कमल वन जैसा है, जिसमें सैकड़ों सुन्दर चक्राकार स्थान चमक रहे हैं और जो हरिण की आँखकी सी चमक से रंगबिरंगा बना हुआ है। यह एक हरिणशिशु माता को छोड़ कर, बिन अयालों के सिंह शिशुओं से परिचित हुआ दूध की धार बहाते, सिंही के स्तन को चूँष रहा है। यह एक सिंह चन्द्रकिरण से श्वेत अपने अयाल समूह

भारमामीलितलोचनो बहुमन्यते द्विरदकलभैराकृष्यमाणं मृगपतिः । इदमिह कपिकुलमपगतचापलमुपनयति मुनिकुमारकेभ्यः स्नातेभ्यः फलानि। एते च न निवारयन्ति मदान्धा अपि गण्डस्थलीभाञ्जि मदजलपाननिश्चलानि मधुकरकुलानि सञ्जातदयाः कर्णतालैः करिणः। किं बहुना तापसाग्निहोत्रधूमलेखाभिरुत्सर्पन्तीभिरनिशमुपपादितकृष्णाजिनोत्तरासङ्गशोभाः फलमूलभृतो वल्कलिनो निश्चेतनास्तरवोऽपि सनियमा इव लक्ष्यन्तेऽस्य भगवतः। किं पुनः सचेतनाः प्राणिनः' इति।

---

शङ्कत इत्येवंशीलास्तै । द्विरदेति। द्विरदा गजास्तेषां कलभा बालकास्तैराकृष्यमाणमवकृष्यमाणं शशिकरश्चन्द्रस्तद्वद्धवल शुभ्र सटाभार केसरकलापम्। आमीलिते। आ ईषन्मीलिते लोचने येनैवभूतो बहुमन्यते। सुखत्वेन जानातीत्यर्थः। इदमिति। इहास्मिंस्तपोवन इदम्। अपेति। अपगत चापल चाञ्चल्यं यस्यैवंभूतं कपिकुलं वानरयूथम्। स्नातेभ्य कृताप्लवेभ्य। मुनीति। मुनीनां तपस्विनां कुमारका बालास्तेभ्यः फलानि सस्यान्युपनयति ढौकयति। एते चेति। एते करिणो हस्तिनो मदान्धा अपि मदोन्मत्ता अपि गण्डस्थलीभाञ्जि करटस्थलभाञ्जि। मदेति। मदजलस्य दानवारिण पान प्राशन तेन निश्चलानि स्थिराणि मधुकराणां भ्रमराणा कुलानि समूहान् सजातदया समुत्पन्नकरुणाः कर्णतालै श्रवणचपेटैर्न निवारयन्ति न दूरीकुर्वन्ति। किं बह्विति। किं बहुना किं बहु जल्पितेन। स्तोकेनैवोच्यत इति भाव। तापसेति। उत्सर्पन्तीभिरूर्ध्वं व्रजन्तीभिस्तापसानां यदग्निहोत्र तस्य या धूमलेखा दहनकेतनराजयस्ताभिरनिशं निरन्तरम्। उपेति। उपपादिता विहिता कृष्णं श्यामं यदजिन चर्म तस्योत्तरासङ्गो वैकक्ष्य तस्य शोभा येषां ते तथा फलमूलभृतो वल्कलिनो निश्चेतना ज्ञानरहिता अस्य भगवतस्तरवोऽपि वृक्षा अपि सनियमा इव व्रतिन इव लक्ष्यन्तेऽवलोक्यन्ते। सचेतना ये प्राणिनो मनुजादयस्तेषां किं पुन किं भण्यते किं कथ्यते। ते त्वेतादृशा भवन्त्येवेति भाव।

---

को बिसतन्तु का समूह समझते हस्तिशिशुओं द्वारा खींचे जाते हुए का आँखे मीचे हुए आनन्द ले रहा है। यह बन्दरों का झुण्ड यहाँ अपनी चञ्चलता को छोड़े हुआ, स्नान किये हुए मुनिबालकों को फल लाकर दे रहा है। और ये मद से मत्त हाथी भी अपनी कनपटियों पर बैठे हुए तथा मद पीकर निश्चल हुए भौरों को दयापूर्ण हुए अपने कानों की फड़फड़ाहटों से नहीं हटा रहे हैं। इससे अधिक और क्या कुछ कहा जाय? ऊपर की ओर उठती हुई तपस्वियों के (किये हुये) अग्निहोत्रों के धुएँ की पक्तियों से दिन रात कृष्णचर्म निर्मित उत्तरीय वस्त्रों की शोभा—वैसा रूप—प्रदर्शित करते इस भगवान् के वृक्ष भी ऐसे प्रतीत होते हैं कि उन्होंने कोई नियम व्रत-धारण कर रखा हो क्योंकि ये फलमूल उत्पन्न करते हैं और छालें धारण किये हुए हैं (व्रती मुनिजन फल-मूल खाकर रहते हैं वल्कलवस्त्र पहनते हैं)। चेतनावान् प्राणियों के विषय में (कि वे व्रत धारण करते हैं) तो कहने की कुछ आवश्यकता ही नहीं है।"

एवं चिन्तयन्तमेव मां तस्यामेवाशोकतरोरधश्छायायामेकदेशे स्थापयित्वा हारीतः पादावुपगृह्य कृताभिवादनः पितुरनतिसमीपवर्तिनि कुशासने समुपाविशत्। आलोक्य तु मां सर्व एव मुनयः 'कुतोऽयमासादितः शुकशिशुः' इति तमासीनमपृच्छन्। असौ तु तानब्रवीत् 'अयं मया स्नातुमितो गतेन कमलिनीसरस्तीरतरुनीडनिपतितः शुकशिशुरातपजनितक्लान्तिरुत्तप्तपांसुपटलमध्यगतो दूरनिपतनविह्वलतनुरल्पावशेषायुरासादितस्तपस्विदुरारोहतया च तस्य वनस्पतेर्न शक्यते स्वनीडमारोपयितुमिति जातदयेनानीतः। तद्यावदयमप्ररूढपक्षतिरक्षमोऽन्तरिक्षमुत्पतितुं तावदत्रैव

---

अथ हारीत किं कृतवानित्याह—एवमिति। एव पूर्वोक्तप्रकारेण चिन्तयन्त मां तस्यामेवाशोकतरोरधश्छायायामेकदेशे एकस्मिन्प्रदेशे स्थापयित्वा संस्थाप्य हारीत हारीतनामा मुनि। पादाविति। पादौ चरणावुपगृह्य पादयो पतित्वा। कृतेति। कृत विहितमभिवादन येनैवंभूत पितुर्जनकस्यानतिसमीपवर्तिनि कुशासने दर्भविष्टरे समुपाविशदुपविष्टवान्। आलोक्येति। आलोक्य निरीक्ष्य। तु पुनरर्थे। मां सर्व एव समग्रा एव मुनय· ऋषय· कुत कस्मात्प्रदेशादय शुकशिशुरासादित प्राप्त इति तमासीनमुपविष्ट हारीत मुनिमपृच्छन्प्राक्षु। असौ हारीत। तु पुनरर्थे। तान्मुनीनब्रवीदुवाचेत्यर्थ। किमुवाचेत्याह—अयमिति। अय शुकशिशुर्मया स्नातु स्नानार्थमितोऽस्मात्प्रदेशात् गतेन प्राप्तेन। कमलिनीति। कमलिनीसर पद्मसरस्तस्य तीरतरु प्रतीरवृक्षस्तस्मिन्यो नीड कुलायस्तस्मान्निपतित स्रस्त। आतपेति। आतपेनालोकेन जनितोदिता क्लान्ति श्रमाधिक्य यस्य स तथा। उत्तप्तेति। उत्तप्त उष्णीभूतो य पांसुपटलो धूलीसमूहस्तस्य मध्यगतोऽभ्यन्तरवर्ती। दूरेति। दूराद्विशालान्निपतनमध - स्संयोगफलिका क्रिया तेन विह्वल व्याकुल तनुर्देहो यस्य स तथा। अल्पेति। अल्प स्वल्पमवशेषमायुर्जीवित यस्यैवंभूत आसादितो लब्ध। तपस्वीति। तपस्विभिर्मुनिभिर्दुरारोहतया दु खेनारोढु शक्यतया तस्य वनस्पते शाल्मलीवृक्षस्य स्वनीड स्वकुलायमारोपयितु स्थापयितु न शक्यते न समर्थीभूयत इति हेतो। जातदयेनेति। जातोत्पन्ना दया करुणा यस्यैवंभूते-

---

जब मैं इस प्रकार सोच ही रहा था कि हारीत मुझे अशोक वृक्ष की उसी छाया में एक ओर रख कर, पावों को छूकर पिता का अभिवादन करके, उसके अत्यन्त समीप स्थापित कुशासन पर बैठ गया। मुझे देखकर तो सभी मुनियों ने बैठे हुए उस हारीत से पूछा "यह तोते का बच्चा कहाँ से मिला?'—उसने उनसे कहा—"जब मैं स्नान करने के लिये इस स्थान से गया तब मैंने इसको पाया। यह कमल-सरोवर के तटवर्ती वृक्ष पर स्थित (अपने) घोंसले से गिरा हुआ था। सूर्य की ऊष्मा से दुखी यह तपी हुई धूल के ढेर मे पड़ा था, दूर से (ऊँचाई से) गिरने के कारण इसके शरीर की शक्ति जाती रही थी और इसमें बहुत ही कम जीवन शेष था। मैंने इस पर दया की और इसको यहाँ ले आया, कारण कि हम तपस्वियों द्वारा उस वृक्ष पर चढ़ना कठिन था इसलिये इसको इसके अपने घोंसले में नहीं रखा जा सकता था। इसलिये जब तक यह अपने पख पूर्णतया नहीं बढ़ने के कारण आकाश में उड़ने

कस्मिंश्चिदाश्रमतरुकोटरे मुनिकुमारकैरस्माभिश्चोपनीतेन नीवारकणनिकरेण फलरसेन च संवर्ध्यमानो धारयतु जीवितम्। अनाथपरिपालनं हि धर्मोऽस्मद्विधानाम्। उद्भिन्नपक्षतिस्तु गगनतलसञ्चरणसमर्थो यास्यति यत्रास्मै रोचिष्यते। इहैव वोपजातपरिचयः स्थास्यति' इत्येवमादिकमस्मत्सम्बद्धालापमाकर्ण्य किञ्चिदुपजातकुतूहलो भगवाञ्जाबालिरीषदावलितकन्धरः पुण्यजलैः प्रक्षालयन्निव मामतिप्रशान्तया दृष्टया दृष्ट्वा सुचिरमुपजातप्रत्यभिज्ञान इव पुनःपुनर्विलोक्य 'स्वस्यैवाविनयस्य फलमनेनानुभूयते'

---

नानीतोऽस्मानीत। मयेति पूर्वोक्तमेवेति न पुनरुच्यते। तद्यावदिति। तदिति हेत्वर्थे। यावत् यावत्कालम्। अयमिति पूर्वोक्त। अप्ररूढेति। अप्ररूढाऽनुत्पन्ना पक्षतिः पक्षमूलं यस्य स। अक्षमेति। अन्तरिक्षमाकाशमुत्पतितुमक्षमोऽसमर्थ। तावदिति। तावत्कालम्। अत्रैवेति। अत्रैवकारोऽन्ययोगव्यवच्छेदार्थं। कस्मिंश्चिदिति। कस्मिंश्चित् अनिर्दिष्टनामन्याश्रमतरुकोटरे मुनिवसतिवृक्षनिष्कुहे मुनिकुमारकैस्तापसशिशुभिरस्माभिश्चोपनीतेन आनीतेन। नीवारेति। नीवारो वनव्रीहिस्तस्य कणनिकरेण सस्यसमूहेन फलरसेन सस्यद्रवेण च संवर्ध्यमानो वृद्धिं प्राप्यमाणो धारयतु दधातु जीवितं प्राणितम्। अनाथेत्यादि। हि यस्माद्धेतोरस्मद्विधानां तपस्विनामनाथपरिपालनं दीनजनरक्षणं धर्म आचार। तु पुनरर्थे। उद्भिन्नेति। उद्भिन्ना प्रकटीभूता पक्षतिर्यस्यैवंभूत। गगनेति। गगनतलमाकाशतलं तत्र सञ्चरणं गमनं तत्र समर्थः क्षम। यत्रेति। यत्र यस्मिन्देशेऽस्मै शुकशिशवे रोचिष्यते रुचिरभिलाष उत्पत्स्यते तत्र यास्यति गमिष्यति। रुच्यर्थानां धातूनां योगे चतुर्थी। इहैवेत्यनास्थायाम्। उपजातपरिचय संजातसंस्तव स्थास्यत्यवस्थानं करिष्यति। इत्येवमादिकमस्मत्संबद्धमिति मद्विषयकमालापं प्रश्नोत्तररूपमाकर्ण्य श्रुत्वा। किंचिदिति। किंचिदीषदुपजातमुत्पन्नं कुतूहलमाश्चर्यं यस्य स तथा भगवान्माहात्म्यवान् जाबालि जाबालिनामा मुनि। ईषदिति। ईषत्किंचिदावलिता नमिता कन्धरा ग्रीवा यस्य स तथा। इदं तु सावधानलक्षणम्। पुण्येति। पुण्यजलैः पवित्रपानीयैः प्रक्षालयन्निव धावयन्निव मामतिप्रशान्तयातिप्रसन्नया दृष्ट्या दृशा सुचिरं चिरकालं दृष्ट्वा विलोक्य। उपेति। उपजातं समुत्पन्नं प्रत्यभिज्ञानम् 'सोऽयं देवदत्त' इत्याकारकं ज्ञानं यस्य स तथा तद्वदिव पुन-

---

में असमर्थ रहेगा तब तक यहाँ ही किसी वृक्ष की खोह में मुनिकुमारों तथा मेरे द्वारा लाये गये नीवार (धान्य) कणों के समूह से और फलोंके रस से पाला गया जीवन धारण करे। अनाथों की रक्षा करना हमारे-जैसों का धर्म है ही। जब इसके पंख बढ़ जायेंगे और आकाश में उड़ने के योग्य हो जायगा तब यह जहाँ चाहेगा वहाँ जा सकेगा। अथवा यदि यह हमारा (इतना) परिचित हो जायगा तो यहीं पर रहेगा। जब भगवान् जाबालि ने यह तथा मेरे सम्बन्ध में ऐसी ही दूसरी बातें सुनीं तो उसकी उत्सुकता कुछ कुछ जाग्रत हुई, और अपनी गर्दन कुछ झुका कर उसने मुझे देर तक अपनी प्रशान्त दृष्टि से देखा—मानो इस प्रकार उसने मुझे पुण्य जलसे स्नान करा दिया हो, और मानो मुझे उसने पहचान लिया हो इसलिये बार-बार मुझे देख कर कहा—"यह अपने ही दुष्कर्मों का फल भोग रहा है।" कारण कि

इत्यवोचत्। स हि भगवान्कालत्रयदर्शी तपःप्रभावाद्दिव्येन चक्षुषा सर्वमेव करतलगतमिव जगदवलोकयति। वेत्ति जन्मान्तराण्यतीतानि। कथयत्यागामिनमप्यर्थम्। ईक्षणगोचरगतानां च प्राणिनामायुषः संख्यामावेदयति। सर्वैव सा तापसपरिषच्छ्रुत्वा विदिततत्प्रभावा 'कीदृशोऽनेनाविनयः कृतः, किमर्थं वा कृतः, क वा कृतः, जन्मान्तरे वा कोऽयमासीत्' इति कौतूहलिन्यभवत्। उपनाथितवती च तं भगवन्तम् 'आवेदय, प्रसीद भगवन्, कीदृशस्याविनयस्य फलमनेनानुभूयते। कश्चायमासीज्जन्मान्तरे। विहगजातौ वा कथमस्य सम्भवः। किमभिधानो वायम्। अपनयतु नः कुतूहलम्। आश्चर्याणां हि सर्वेषां भगवान्प्रभवः'।

---

पुनर्वारंवार विलोक्य निरीक्ष्य स्वस्यैवात्मन एवाविनयस्याशिष्टाचारस्य फल भोगोऽनेन शुकशिशुनानुभूयते साक्षात्क्रियत इति तानवोचदब्रवीत्। कथ मुनिर्जानातीत्याशयेनाह—स हीति। यत। हि निश्चितम्। स भगवान्। कालेति। कालत्रयस्यातीतानागतवर्तमानलक्षणस्य दर्शी पश्यक। तप इति। तप प्रभावाद्दिव्येन ज्ञानात्मकेन चक्षुषा दृष्ट्या सर्वमेव समग्रमेव जगत्करतलगतमिव हस्तन्यस्तमिवावलोकयति पश्यति। वेत्तीति। अतीतानि गतानि जन्मान्तराणि भवान्तराणि वेत्ति जानाति। कथयतीति। आगामिनं भाविनमर्थमपि कथयति ब्रवीति। ईक्षणेति। ईक्षणगोचरगतानां नयनपथप्राप्तानां प्राणिना सत्त्वानामायुषो जीवितव्यस्य सख्यां परिमाणमावेदयति निवेदयति। सर्वैवेति। सर्वैव समग्रैव सा तापसपरिषन्मुनिसभा श्रुत्वाकर्ण्य। पूर्वोक्तमिति शेष। विदितेति। विदितो ज्ञातस्तस्य जाबालिमुने' प्रभावो माहात्म्य यया सा तथेति कौतूहलिनी कौतुकवत्यभवदित्यन्वय। इतिशब्दवाच्यमाह—कीदृश इति। कीदृश कीदृगविनयोऽपराधविशेषोऽनेन शुकशिशुना कृतो विहित। किमर्थं किंप्रयोजन वा कृत। क वा कस्मिन्प्रदेशे कृत। जन्मान्तरे भवान्तरेऽय क आसीदभवत्। सर्वत्र वाशब्दो विकल्पार्थः। उपेति। उपनाथितवती। 'नाथृ याचने' इत्यस्य धातो रूपम्। याचितवतीत्यर्थं। च पूर्वोक्तसमुच्चये। तं भगवन्त जाबालिमुनिम्। किं याचितवतीत्याशयेनाह—आवेदयेति। हे

---

वह भगवान् जाबालि अपने तप की शक्ति द्वारा तीनों कालों ( भूत, वर्तमान, तथा भविष्यत् ) को देख सकता है, अपनी दिव्य दृष्टि से सारे ही जगत् को ऐसे देखता है कि मानो वह (उसकी) हथेली पर ही रखा हुआ हो। वह ( किसी भी व्यक्ति के ) सभी बीते हुए ( पहले ) जन्मों को जान लेता है, भावी घटनाओं को भी बता देता है—और वह अपनी दृष्टि के क्षेत्र में आये प्राणियों की आयु की मात्रा की भी भविष्य वाणी कर देता है। इन कारणों से वे सभी एकत्रित तपस्वी जिन्होंने उसकी बात सुनी और उसकी शक्ति को जानते थे—यह जानने के लिये उत्सुक होगये कि 'इसने कैसे दुष्कर्म किये थे, क्यों किये थे और अपने जीवन में यह कौन था आदि। उस परिषत् ने उस दिव्य ऋषि से पूछा—"भगवन् कृपया बताइये, यह किस किस दुष्कर्म का फल भोग रहा है। अपने पूर्व जन्म मे यह कौन था। पक्षि जाति में इसका जन्म कैसे हुआ। इसका क्या नाम है। कृपया हमारी उत्सुकता को दूर कीजिये। आप तो सभी आश्चर्यों ( अथवा आश्चर्यजनक वस्तुओं ) के स्रोत हैं।"

इत्येवमुपयाच्यमानस्तपोधनपरिषदा स महामुनिः प्रत्यवदत्—'अतिमहदिद-माश्चर्यमाख्यातव्यम् । अल्पशेषमहः । प्रत्यासीदति च नः स्नानसमयः । भवतामप्यति-क्रामति देवार्चनविधिवेला । तदुत्तिष्ठन्तु भवन्तः । सर्वं एवाचरन्तु यथोचित दिवसव्या-पारम् । अपराह्णसमये भवता पुनः कृतमूलफलाशनाना विस्रब्धोपविष्टानामादितः प्रभृति सर्वमावेदयिष्यामि योऽयम्, यच्चानेन कृतमपरस्मिञ्जन्मनि, इह च लोके यथास्य सम्भूतिः । अय च तावदपगतक्लमः क्रियतामाहारेण । नियतमयमप्यात्मनो

---

भगवन्, आवेद्य कथय । प्रसीद प्रसन्नो भव । पूर्वोक्ताभिप्रायस्थप्रश्नाननुवदन्नाह—कीदृशा-स्येति । कीदृशस्य किंरूपस्याविनयस्य फलमनेनानुभूयते । कश्चेति । जन्मान्तरेऽय क आसीत् । विहगेति । विहगजातौ पक्षिजातौ कथमिति केन प्रकारेण अस्य सभव उत्पत्ति । किमिति । अय किमभिधान किंनामा । अपनयत्विति । नोऽस्माकं कुतूहलमाश्चर्यमपनयतु दूरीकरोतु । आश्चर्याणामिति । हि भगवान्, सर्वेषां समग्राणामाश्चर्याणा कुतूहलानां प्रभव उत्पत्तिस्थानम् । अपूर्वार्थज्ञापक इति यावत् ।

इत्येवमिति । इत्येवम् अनेन प्रकारेण तपोधनपरिषदा मुनिसभयोपयाच्यमान प्रार्थ्य-मान स महामुनि प्रत्यवदत्प्रत्यवोचत् । अतीति । इदमाश्चर्यमतिमहदतिमहीयस्तयाख्यातव्य कथनीयम् । मयेति शेष । अल्पेति । अहर्दिनमल्पशेषमल्पावशिष्टम् । प्रत्येति । नोऽस्माकं स्नानसमय आप्लवकाल प्रत्यासीदति विलम्बितो भवति । भवतामिति । भवतामपि युष्माक मपि देवार्चनविधिवेला देवपूजाक्षणोऽतिक्रामत्युल्लङ्घिता भवति तदिति हेत्वर्थे । उत्तिष्ठन्तूत्थान कुर्वन्तु भवन्तो यूयम् । सर्व एवेति । यथोचित यथायोग्य दिवसव्यापार दिनकृत्यमाचरन्तु समाचरन्तु । अपराह्णेति । अपराह्णसमये द्विप्रहरानन्तरसमये भवता युष्माकम् । पुनरिति । पुन द्वितीयवार कृत विहित मूलफलयोरशन भक्षण यैस्ते तथा तेषाम् । विस्रब्धेति । विस्रब्ध सावधानं यथा स्यात्तथोपविष्टानां स्थितानाम् । आदित इति । आदित प्रारम्भतः प्रभृति सर्वं वृत्तान्तमावेदयिष्यामि निवेदयिष्यामि । योऽयमिति । यश्चाय पूर्वजन्मन्यासीत् । यच्चानेना-परस्मिञ्जन्मनि परभवे कृतम् । इह चेति । इह लोके यथा येन प्रकारेणास्य सम्भूतिरुत्पत्ति. । अयं चेति । तावदादावयं शुक आहारेणाशनेनापगतक्लमो व्यपगतपरिश्रम. क्रियतां विधीयताम् ।

---

उस तपस्वि-परिषद् द्वारा इस प्रकार प्रार्थित उस महामुनि ने उत्तर दिया—"यह आश्चर्यजनक कथा जिसको आप मुझसे वर्णन करने के लिये कह रहे हैं—बहुत लम्बी है और दिन थोड़ा रह गया है और हमारे स्नान का समय हो गया है और आपका देवपूजा के कृत्यों को करने का समय भी बीत रहा है । इसलिये आप लोग उठ जावें । अपने प्रथागत दैनिक कृत्य को पहले समाप्त करलें । मध्याह्न बीत जाने पर जब आप मूलों और फलों को खाये हुए आराम से बैठे हुए होंगे तब मै आरम्भ से सारी कथा सुनाऊँगा कि यह कौन है, पहले जन्म में इसने क्या किया, और इस लोक में इसका जन्म कैसे हुआ और इस बीच इसको खाना खिलाना चाहिये, जिससे इसकी थकावट दूर हो जाय । यह निश्चित है कि जब मैं इसकी कथा

जन्मान्तरोदन्तं स्वप्नोपलब्धमिव मयि कथयति सर्वमशेषतः स्मरिष्यति' इत्यभिदधन्नेवोत्थाय सह मुनिभिः स्नानादिकमुचितदिवसव्यापारमकरोत्।

अनेन च समयेन परिणतो दिवसः। स्नानोत्थितेन मुनिजनेनार्घविधिमुपपादयता यः क्षितितले दत्तस्तमम्बरतलगतः साक्षादिव रक्तचन्दनाङ्गराग रविरुद्वहत्। ऊर्ध्वमुखैरर्कबिम्बविनिहितदृष्टिभिरुष्मापैस्तपोधनैरिव परिपीयमानतेजःप्रसरो विरलातपस्तानिमानमभजत्। उद्यत्सप्तर्षिसार्थस्पर्शपरिजिहीर्षयेव संहृतपादः पारावतपादपाट-

---

नियतेति। नियत निश्चित मयि कथयत्यय शुक अपि आत्मन स्वकीयस्य जन्मान्तरोदन्त परभववृत्तान्त स्वप्नोपलब्धमिव स्वप्नदृश्यवत्सर्वं समग्रमशेषत आमूलचूलत स्मरिष्यति स्मरणविषयीकरिष्यति। इतीति। इति पूर्वोक्तमभिदधदेव कथयन्नेवोत्थायोत्थान कृत्वा। सहेति। सह सम मुनिभिस्तपस्विभिरुचित योग्य दिवसव्यापार स्नानादिकमकरोन्निर्ममे।

अनेन चेति। अनेन समयेन मध्याह्नसमयकर्तव्यकर्मणा परिणत. परिपाकं गतो दिवस। परिणते दिवसे सूर्यस्य रक्तत्वात्तद्वर्णनमाह—स्नानोत्थितेनेति। अम्बरतलगतो रविस्त रक्तचन्दनाङ्गराग साक्षादिव प्रत्यक्षसिद्धमुनिप्रत्यर्पितमूर्तिरूपेणैवोदवहदधारयत्। त कम्। य स्नानोत्थितेन मुनिजनेन तपस्विवर्गेणार्घविधिं रक्तचन्दनरक्तपुष्पादिना पूजाविधिमुपपादयता निष्पादयता क्षितितले दत्तोऽर्पित । सूर्यायेति शेष । सायकाले सूर्यस्य रक्तत्वान्मुनिप्रदत्तो राग. किमनेन साक्षादिव गृहीत इत्युत्प्रेक्षा। ऊर्ध्वमुखैरिति। ऊर्ध्वमुखैरूर्ध्वाननै। अर्केति। अर्कबिम्बे सूर्यबिम्बे विनिहिता स्थापिता दृष्टियैस्ते तथा तैरुष्मापैरुष्मा वह्निज्वाला तस्यानुकारिभिस्तपोधनै रिव परिपीयमान आस्वाद्यमानस्तेज प्रसर कान्तिप्रचारो यस्य स तथा। विरलेति। विरल स्वल्प आतप आलोको यस्य स तथा तनिमान तनोर्भावस्तनिमा तमभजत्। क्षीणत्व प्रापेत्यर्थं। उद्यदिति। उद्यदुदय प्राप्नुवन्य सप्तर्षिसार्थं सप्तर्षिसमूहस्तेन य स्पर्श

---

का वर्णन कर रहा होऊँगा—तब यह भी अपने सारे पूर्वजन्म के वृत्तान्त को पूर्णतया इस प्रकार स्मरण कर लेगा कि मानो ( उसी को वह पुन ) स्वप्नमे देख रहा हो।"—ज्यों ही उसने यह बात कही त्यो ही वह उठ खड़ा हुआ और मुनियों के साथ साथ स्नान समेत अपने सामान्य दैनिक कृत्य किए।

इतनी देर मे दिन ढल गया। स्नान करने के पश्चात् ( सूर्यकी ) पूजा करते हुए मुनियों ने यहाँ पृथ्वी पर जो लाल चन्दन का लेप अर्पित किया था ऐसा प्रतीत हुआ कि आकाश में पहुँचने पर उसी को सूर्य ने धारण कर लिया। दिन पतला पड़ गया ( अर्थात् समाप्ति पर आ गया )। इसकी धूप कम हो गयी, मानो इसके सारे तेज का प्रसार अपने मुखों को ऊपर की ओर किये हुए तथा अपनी आँखो को सूर्य बिम्ब पर टिकाये हुए, ( सूर्य की ) ऊष्मा पी लेने का व्रत धारण किये हुए मुनियों द्वारा पी लिया गया हो। सूर्य, जिसने मानो उदय होते हुए सप्तर्षि समूह के स्पर्श से बचाना चाहते हुए अपने पाँवों अर्थात् किरणों को समेट लिया था, और जो अब कबूतर के पाँवों के रग का हो गया था, आकाश से नीचे की ओर

ष्टरागो रविरम्बरतलादवालम्बत । आलोहितांशुजालं जलशयनमध्यगतस्य मधुरिपोर्विगलन्मधुधारमिव नाभिनलिन प्रतिमागतमपरार्णवे सूर्यमण्डलमलक्ष्यत । विहायाम्बरतलमुन्मुच्य च कमलिनीवनानि शकुनय इव दिवसावसाने तरुशिखरेषु पर्वताग्रेषु च रविकिरणाः स्थितिमकुर्वत । आलग्नलोहितातपच्छेदा मुनिभिरालम्बितलोहितवल्कला इव तरवः क्षणमदृश्यन्त। अस्तमुपगते च भगवति सहस्रदीधितावपरार्णवतलादुल्लसन्ती विद्रुमलतेव पाटला सन्ध्या समदृश्यत। यस्यामावध्यमानध्यानम्, एकदेशदुह्यमान-

सम्बन्धस्तस्य या परिजिहीर्षा परिहर्तुमिच्छा तया सहता सकोचिता पादा येन स तथा । पारावत इति । पारावत कलरवस्तस्य पादौ चरणौ तद्वत्पाटल· श्वेतरक्तो रागो यस्मिन्नेवंविधो रवि सूर्य । अम्बरतलादित्यवधौ पञ्चमी । अवालम्बतालम्बत । तदनन्तरमालोहितांशुजालमीषद्रक्तकिरणसमूह सूर्यमण्डलं रविबिम्बमलक्ष्यतैक्ष्यत । कमिव । अपरेति । अपरार्णवे पश्चिमसमुद्रे प्रतिमागत स्वमूर्तिरूपेणागत बहिर्निःसृत जलशयनमध्यगतस्य मधुरिपो कृष्णस्य नाभिनलिनमिव नाभिपद्ममिव । तदेव विशिनष्टि—विगलदिति । विगलन्ती स्रवन्ती मधुधारा परागश्रेणिर्यस्मात्स तत् तथा । विहायेति । अम्बरतलमाकाशतलं विहाय त्यक्त्वा कमलिनीवनानि नलिनीखण्डान्युन्मुच्य च शकुनय इव पतत्रिण इव दिवसावसाने सायकाले तरुशिखरेषु वृक्षाग्रेषु पर्वताग्रेषु च रविकिरणा सूर्यरश्मय स्थितिमवस्थानमकुर्वत कृतवन्तः । तत्कालीनतरुशोभामाह—आलग्नेति । आलग्नेषत्सम्बन्ध प्राप्ता लोहितातपस्य रक्तालोकस्य मध्येमध्ये छेदा रचनाविशेषा येषा ते तथा । अतएव 'भक्तिच्छेदैरिव विरचिता भूतिमङ्गे गजस्य' इति । मुनिभिस्तपस्विभिरालम्बिता आश्रिता अतएव लोहितवल्कला इव तरवो वृक्षा क्षण स्वल्पकालमदृश्यन्तावलोक्यन्त । सन्ध्यावस्थां प्रदर्शयन्नाह—अस्तेति । अस्तमुपगतेऽदृश्यता प्राप्ते भगवति सहस्रदीधितावपरार्णवतलात्पश्चिमसमुद्रतलादुल्लसन्त्यूर्ध्वमागच्छन्ती विद्रुमलतेव रक्तकन्दवल्लीव पाटला श्वेतरक्ता सन्ध्या सायकाल समदृश्यत समालोक्यत । यस्यामिति । यस्या सन्ध्यायामेव-

लटक गया। लाल-लाल हुई किरणों वाला सूर्यमण्डल पश्चिमी महासागर में प्रतिबिम्बित हो गया और इसका प्रतिबिम्बित चित्र ऐसा दिखायी दिया कि मानो अपनी जलशय्या मे ( आराम से ) पड़े विष्णु की नाभि ( से उत्पन्न ) कमल ( लाल-लाल ) मधु की धारा बहा रहा हो। दिनकी समाप्ति पर सूर्य की किरणें आकाश को छोड़ कर वृक्षों के ऊपर तथा पर्वतों के अग्रभागों पर इस प्रकार स्थित हो गयीं जैसे कि दिन की समाप्ति पर पक्षी कमलिनियों के वनों को छोड़ कर वृक्षों तथा पर्वतों की चोटियों पर जा बैठते हैं। आश्रम के जिन वृक्षों पर धूप के लाल लाल धब्बे पड़े हुए थे वे क्षणभर के लिये ऐसे दिखायी पड़े कि उन पर मुनियों ने ( अपने ) लाल-वल्कल वस्त्र लटका दिये हों और जब सूर्य पूर्णतया अस्त हो गये तब लाल सन्ध्या पश्चिमी महासमुद्र तल से ऊपर आती हुई ( लाल ) मूँगे की लता-सरीखी दिखायी दी। उस सन्ध्याकाल मे आश्रम ऐसा हो गया कि जिसमे ( मुनियों द्वारा ) ध्यान लगाया जा रहा था, एक स्थान पर ( एक ओर ) दुही जाती यज्ञ धेनुओं के दूध की ध्वनि से अत्यन्त

होमधेनुदुग्धधाराध्वनितधन्यतरातिमनोहरम्, अग्निवेदिविकीर्यमाणहरित्कुशम्, ऋषिकुमारिकाभिरितस्ततो विक्षिप्यमाणदिग्देवताबलिसिक्थमाश्रमपदमभवत्। कापि विहृत्य दिवसावसाने लोहिततारका तपोवनधेनुरिव कपिला परिवर्तमाना सन्ध्या तपोधनैरदृश्यत। अचिरप्रोषिते सवितरि शोकविधुरा कमलमुकुलकमण्डलुधारिणी हंससितदुकूलपरिधाना मृणालधवलयज्ञोपवीतिनी मधुकरमण्डलाक्षवलयमुद्वहन्ती कमलिनी दिनपतिसमागमव्रतमिवाचरत्। अपरसागराम्भसि पतिते दिवसकरे वेगोत्थित-

---

विषमाश्रमपदमभवत्। बभूवेत्यर्थः। कीदृशम्। आबध्येति। आबध्यमान क्रियमाण ध्यानमेकप्रत्ययसंततिर्यस्मिन्। अनस्त गत एव सूर्ये सध्यावन्दनार्थयोरुक्तत्वाद्ध्यानग्रहणम्। एकेति। एकदेश एकस्मिन्प्रदेशे दुह्यमाना या होमधेनवो होमार्थं गावस्तासां दुग्धधारा पय श्रेणी तत्र यद्ध्वनित शब्दित तेन धन्यतर सदतिमनोहरमतिरम्यम्। अग्नीति। अग्निवेद्या वह्निस्थापनचतुरस्रभूमिकायां विकीर्यमाणा विक्षिप्यमाणा हरित्कुशा नीलदर्भा यस्मिन्। ऋषीति। ऋषिकुमारिकाभिर्मुनिपुत्रीभिरितस्ततो विक्षिप्यमाणानि समन्ताद्विकीर्यमाणानि दिग्देवतानां बलिसिक्थानि बलिसबन्धिसिद्धान्नानि यस्मिंस्तत्तथा। पुनरवस्थान्तरमाह—कापीति। कापि कुत्रचित्प्रदेशे विहृत्य पर्यटनं कृत्वा दिवसावसाने दिनपर्यन्ते कपिला तपोवनधेनुरिव लोहिततारका परिवर्तमाना तपोधनै मुनिभि. सध्याद्दृश्यतालोक्यत। गौरपि कपिलत्वाल्लोहिततारका रक्तकनीनिका। संध्या तु लोहिततारका रक्तनक्षत्रा तत्कालीनोद्गतनक्षत्राणा रक्तत्वात्। अत सध्याधेन्वो सादृश्यादुपमानोमेयभाव। कमलिनीसूर्ययोर्नायिकानायकत्वेन तौ वर्णयन्नाह—अचिरेति। अचिरप्रोषिते तत्कालीनप्रोषिते गते सवितरि श्रीसूर्ये शोकेन विरहेण विधुरा विह्वला कमलिनी दिनपतिसमागमार्थं स्वकीयनायकस्यागमनहेतोर्व्रत नियमविशेषमाचरद्विवाकरोदिव। कमलेति। सकुचितमुखसाम्यात्कमलमुकुलान्येव कमण्डलूनि तान्येव दधातीत्येवशीला सा तथा। हंसेति। श्वेतसाम्याद्धसा एव सितदुकूलानि परिधानमधोंशुक यस्या . सा तथा। मृणालेति। श्वेततन्तुसारूप्यान्मृणालान्येव धवल शुभ्र यज्ञोपवीत यज्ञसूत्रं यस्याः सा तथा। मधुकरेति। नीलतीक्ष्णमुखसाम्यान्मधुकराणा भ्रमराणा यन्मण्डल तदेवाक्षवलयं रुद्राक्षजपमालिका तदुद्वहन्ती धार-

---

मनोहर हो गया, उसमे ( यज्ञ ) वेदियों पर हरी कुशाएँ फैलायी जाने लगीं, और उसमें ऋषि कुमारियों द्वारा दिग्देवताओं के समर्पित बलिपिंड विविध स्थानों पर बिखेरे जाने लगे। ऋषियों ने लालतारों वाली लौटती हुई सध्या को ऐसे देखा कि मानो वह कहीं घूमफिर कर दिन की समाप्ति पर लौटती हुई तपोवन की लाल पुतलियों वाली कपिला धेनु हो। सूर्य की अभी अभी हुई विदाई से हुए शोक से विह्वल कमलिनी ने तो मानो कमल की कली को ( श्वेत ) कमण्डलु के रूप मे धारण किये हुई हसरूप श्वेत वस्त्र पहिने हुई, कमल तन्तुरूप श्वेत यज्ञोपवीत धारण किये हुई, भौंरों की गोलाकार पंक्तियो के रूप मे अक्षमाला पहिने हुई ने, सूर्य समागमार्थ व्रत करना ही आरम्भ कर दिया था। आकाश ( तल ) ने तारों के पुञ्ज को इस प्रकार धारण कर लिया कि मानो वह पश्चिमी महासागर में सूर्य के गिर ( अर्थात्

मम्भःसीकरनिकरमिव तारागणमम्बरमधारयत् । अचिराच्च सिद्धकन्यकाविक्षिप्त सन्ध्यार्चनकुसुमशबलमिव तारकित वियदराजत । क्षणेन चोन्मुखेन मुनिजनेनोर्ध्वंवि प्रकीर्णैः प्रणामाञ्जलिसलिलैः क्षाल्यमानइवागलदखिलः सन्ध्यारागः ।

क्षयमुपागताया सन्ध्याया तद्विनाशदुःखिता कृष्णाजिनमिव विभावरी तिमिरोद्गमम भिनवमवहत् । अवहाय मुनिहृदयानि सर्वमन्यदन्धकारता तिमिरमनयत् । क्रमेण च रविरस्त गत इत्युदन्तमुपलभ्य जातवैराग्यो धौतदुकूलवल्कलधवलाम्बरः सतारान्तः

---

यन्ती । अपरामवस्था वर्णयन्नाह—अपरेति । अपरसागराम्भसि पश्चिमसमुद्रपानीये पतिते दिवसकरे सूर्ये वेगेन रभसोत्थित प्रादुर्भूतमम्भ सीकरनिकर पानीयपृषत्समूह तारागणमिव नक्षत्रवृन्दमिवाम्बरमाकाशमधारयद्दधार । अतिश्वेतरूपत्वसाम्यात्तारा जलबिन्द्वोरुपमानोपमेय भाव । अचिराच्चेति । अचिरात् स्वल्पकालेन सिद्धा विद्यासिद्धास्तेषा कन्यका पुत्र्यस्ताभि विक्षिप्तानि विकीर्णानि यानि सध्यार्चनकुसुमानि सायकालीनपूजार्थमानीतानि पुष्पाणि तै शबलमिव कर्बुरमिव तारकितम् । 'तारकादिभ्य इतच्' । संजाततारकोदय वियदकाशमराजत शोभत । अतीतसध्यावस्था प्रकटयन्नाह—क्षणेनेति । क्षणेन सपद्येव । च समुच्चये । उन्मुखेनोर्ध्वमुखेन मुनिजनेन तापसजनेनोर्ध्वविप्रकीर्णैरूर्ध्व विक्षिप्तै प्रणामाञ्जलिसलिलैर्नमस्कृतिसमयाञ्जलिपानीयै क्षाल्यमान इव प्रक्षाल्यमानोऽखिल समग्रोऽपि सध्यारागोऽगलत्तस्थानात्प्रच्युत ।

क्षयमिति । सध्याया क्षयमुपगताया विनाश प्राप्तायाम् । तदिति । तस्याः स्वसालिच्यास्सखीरूपाया. सध्याया विनाशो ध्वसस्तेन दु खिता कष्टं प्राप्ता विभावरी रजन्यभिनवं प्रत्यग्र तिमिरोद्गम ध्वान्तोदय कृष्णाजिनमिवासितचर्मेवदवहत् । नीलसाम्यात्तिमिरोद्गमस्य कृष्णाजिनसाधर्म्यम् । तिमिरोद्गमस्य कृत्य व्याख्यापयन्नाह—अवहेति । तिमिर ध्वान्तं मुनिहृदयानि तपस्विचेतासि स्वप्रकाशात्मकप्रकाशवन्तीत्यतस्तिमिरस्यावकाशाभावादन्यत्सर्वं प्रौढप्रकाशहीन वस्तुजातमन्धकारतामचाक्षुषतामनयत्प्रापयत् । तदुत्तरकाल चन्द्रेऽपि मित्रवियोगा-

---

उतर ) जाने के कारण उत्पन्न हुए बल से उछल कर बिखरे बल के फुहारों का समूह हो। और शीघ्र ही नक्षत्रों से युक्त आकाश ऐसा शोभित प्रतीत हुआ कि मानो वह सिद्ध कन्याओं द्वारा ( समर्पित ) सन्ध्या के पूजार्थ फूलों से रंग बिरगा हो गया हो। और फिर क्षणभर मे ही सन्ध्या का वह सारा रग सर्वथा ऐसे विलुप्त हो गया कि वह ऊपर को मुह किये हुए मुनियों द्वारा ऊपर को फैंके हुए प्रणाम ( पूजा ) के समय के पानी से धो दिया गया हो ।

जब सन्ध्या नष्ट ( अदृष्ट ) हो गयी तो उसके नष्ट होने से दुखी रात्रि ने अन्धकार ( के एक नये पर्दे ) को ऐसे धारण कर लिया कि मानो वह कृष्ण मृग का चर्म ही हो । अन्धेरे ने मुनियों के हृदयों के अतिरिक्त शेष सभी को काला कर दिया । और क्रमश. यह वृत्तान्त सुनकर कि सूर्य अस्त हो चुका है, अमृतरूप किरणों वाले, बहुत लाल लाल दिखायी देते ( तथा सूर्य की मृत्यु के कारण वैरागी हुआ भी ), आकाश को धोये हुए ( स्वच्छ ), रेशमी वल्कल सा श्वेत बनाये हुए ( तथा रेशमी-सरीखे स्वच्छ वल्कल वस्त्र को धारण किये हुए ), चन्द्रमा ने

पुरपर्यन्तस्थिततनुस्तिमिरतमालवृक्षलेखं सप्तर्षिमण्डलाध्युषितमरुंधतीसंचरणपूतमुपहि-ताषाढमालक्ष्यमाणमूलमेकान्तस्थितचारुतारकामृगममरलोकाश्रममिव गगनतलममृत-

---

वस्थां वर्णयन्नाह—क्रमेणेति। क्रमेण परिपाट्या रवि सूर्योऽस्त गतोऽदृश्यता प्राप्त इत्युदन्त मिति वृत्तान्तमुपलभ्य प्राप्तोऽमृतदीधितिश्चन्द्र । अमरेति। अमरा वसिष्ठादयो मुनयस्तेषां लोक समुदायस्तस्याश्रमो मुनिस्थान तदिव गगनतलमम्बरतलमध्यतिष्ठदधितस्थौ। कीदृक्सूर्य जातेति। जात समुत्पन्न वैराग्य विरक्तता यस्मिन्स तथा तम्। पक्षे विशिष्टो रागस्तस्य भावस्तत्त्वम्। धौतेति। धौत क्षालित दुकूलवल्कलवत्सममेव धवल शुभ्रमम्बर यस्मिन्। पक्षे दुकूलवल्कलवत् धवल शुभ्रमम्बरमाकाशं यस्मिन्। सतारेति। तार शक्तिविशेष प्रणवो ब्रह्म च। तदुक्तमन्यत्र 'इदं तारत्रय प्रोक्तमगम्यागमनादृते'। एतद्वृत्तौ 'तारत्रय प्रणवशत त्रयम्'। इत्याह विज्ञानेश्वर । तथा सह्वर्तमान यदन्त पुरमिति पुरस्य शरीरस्यान्तर्मध्य कुण्डलिनी नाडीविशेष । 'क्वचिद्माद्यन्तस्य परत्वम्' इति पुरस्य परनिपात । तस्या पर्यन्त सहस्रार कमल तत्र योगसामर्थ्यात्स्थित लैङ्गिक तनुर्यस्य स तथा। पक्षे तारा अश्विन्यादयस्ताभि सह वर्तमान यदन्त पुरमवरोधस्तस्य पर्यन्त सन्निधिस्तत्र स्थिता तनु शरीर यस्य स तथा। अथाश्रमसाम्येन गगनतल विशेषयन्नाह—तिमिरेति । श्यामत्वसाम्यात्तिमिरवच्छयामा ये तमालवृक्षास्तेषा लेखा पङ्क्तिर्यस्मिन्। पक्षे तिमिराण्येव तमालवृक्षा इति विग्रह । शेष पूर्ववत्। सप्तर्षीति। सप्तर्षिसदृशा ये ऋषयो नारदाद्यास्तेषा मण्डल समूह । 'मण्डल श्वसमूहयो.' इति धरणि । तेनाध्युषितमाश्रितम्। पक्षे सप्तर्षय सप्ततारका । शेष प्राग्वत्। अरुंधतीति। अरुधती वसिष्ठपत्नी तस्या सचरण परिभ्रमण तेन पूत पवित्रम्। पक्षेऽरुधती ताराविशेष । शेष प्राग्वत्। उपहितेति । उपहित सनिहित आषाढ पालाशदण्डो यस्मिन्। 'पालाशो दण्ड आषाढ' इत्यभिधानचिन्तामणि । पक्ष आषाढा पूर्वाषाढानक्षत्रम्। आलक्ष्येति । आसमन्ताल्लक्ष्यमाणानि विलोक्यमानानि मूलानि वसुधान्तर्गतवृक्षप्रदेशा यस्मिन्। पक्षे मूल मूलनक्षत्रम्। शेष प्राग्वत्। एकान्तेति। एकान्ते विजने स्थिताश्चारवो

---

अपनी ताराओं सहित ( अथवा पत्नियों समेत, जिनके मध्य तारा थी ) आकाश पर ऐसे आसन जमाया कि मानो वह आकाशतल, जिसके दूरस्थ किनारों पर तमाम वृक्षो की ( पतली ) रेखा सी अन्धेरे की रेखा दिखायी दे रही थी, जो सप्तर्षि मण्डल द्वारा अधिष्ठित था, जो अरुन्धती नक्षत्र के चलने फिरने के कारण पवित्र हो गया था, जिसमें आषाढ नक्षत्र मडल उपस्थित था, जिसमे मूल नक्षत्र दिखायी दे रहा था और जिसके एक प्रदेश मे मृग नक्षत्र मण्डल अपने चमकते तारों के साथ उपस्थित था, मानो कोई ऐसा देवलोक का आश्रम हो कि जिसकी सीमाओं पर अन्धकार की रेखा सरीखी तमाल वृक्षों की पक्ति हो, जिसमें सात महर्षियों का मण्डल रहता हो, जो ( वसिष्ठ की पत्नी ) अरुन्धती के सचरण ( अर्थात् ) उसके वहाँ रहने से पवित्र हो गया हो, जिसमें पलाश वृक्ष के डडे रखे हों, जिसमें ( वृक्षों की मध्य ) जड़ें दिखायी दे सकती हों, और जिसके एक प्रदेश में सुन्दर कनीनिकाओं वाले हरिण

दीधितिरध्यतिष्ठत्। चन्द्राभरणभृतस्तारकाकपालशकलालंकृतादम्बरतलात्त्र्यम्बकोत्त-माङ्गादिव गङ्गा सागरानापूरयन्ती हंसधवला धरण्यामपतज्ज्योत्स्ना। हिमकरसरसि विकचपुण्डरीकसिते चन्द्रिकाजलपानलोभादवतीर्णो निश्चलमूर्तिरमृतपङ्कलग्न इवा दृश्यत हरिणः। तिमिरजलधरसमयापगमानन्तरमभिनवसितसिन्दुवारकुसुमपाण्डुरै-र्णवागतैरवगाह्यन्त हंसैरिव कुमुदसरांसि चन्द्रपादैः। विगलितसकलोदयराग रजनि-करबिम्बमम्बरापगावगाहधौतसिन्दूरमैरावतकुम्भस्थलमिव तत्क्षणमलक्ष्यत। शनै-

---

मनोहराकृतयस्तारकामृगा श्वेतमृगा यस्मिन्। पक्षे तारकारूप मृगो नक्षत्रम्। तस्यामेव विभावर्या चन्द्रे जातवैराग्योपमानमम्बरमण्डले चाश्रमरूपके मुक्त्वा ज्योत्स्नायां गङ्गारूपको पयोगिगगनतले त्र्यम्बकोत्तमाङ्गोपमानमाह। **चन्द्रेति**। चन्द्र एवाभरण बिभर्तीति चन्द्रा भरणभृत्तस्मात्। **तारकेति**। तारका एव कपालशकलानि कर्परखण्डानि तैरलंकृत भूषित यस्मात्। अम्बरतलादित्यवधौ पञ्चमी। त्र्यम्बकोत्तमाङ्गादिवेश्वरमौलेरिव गङ्गा जाह्नवी। **सागरानिति**। अगस्तिगण्डूषेण शुष्कान् सागरान् समुद्रानापूरयन्ती परिपूर्णीकुर्वती। चन्द्रोदयेन सागराणां पूरण प्रसिद्धम्। हंसवद्धवला शुभ्रा ज्योत्स्ना चन्द्रिका धरण्या पृथिव्याम पतत्पपातेत्यर्थः। अथ च चन्द्रमृगोऽप्येतादृशोऽभूदित्याह—**हिमकरेति**। हिमकरश्चन्द्र स एव सरस्तस्मिन्। तदेव विशिनष्टि—**विकचेति**। विकचानि विकस्वराणि यानि पुण्डरीकाणि तद्वत्सिते शुभ्रे। अन्यदपि सरो विकचपुण्डरीकैः सित भवति अतस्तदुपमानम्। **चन्द्रिकेति**। चन्द्रिका ज्योत्स्ना सैव जलं पानीय तस्य पानमास्वादन तस्य लोभो गर्धस्तस्मादवतीर्णो मध्य-प्रविष्ट। **निश्चलेति**। निश्चला निस्पन्दा मूर्तिर्यस्य स तथा। **अमृतेति**। कृष्णत्वसाम्यात्कलङ्क एवामृतपङ्कस्तत्र लग्न इवान्तर्निगीर्ण इव हरिणो मृगोऽदृश्यतालक्ष्यत। चन्द्रोदयजनित शोभातिशय वर्णयन्नाह—**तिमिरेति**। कृष्णत्वसाम्यात्तिमिरमेव जलधरसमयस्तस्यापगमानन्तर निवृत्त्यनन्तरम्। **अभीति**। अभिनवानि प्रत्यग्राणि सितानि शुभ्राणि यानि सिन्दुवारस्य

---

विद्यमान हों। चन्द्रमारूप अलकार को धारण किये हुए तथा तारों के सदृश (चमकते) कपाल खण्डों से सुशोभित शिवजी के सिर से गिरती, हंसों-से श्वेत हुई, समुद्रों को भरती हुई गगा सरीखी, हंसों जैसी श्वेत और समुद्रों में ज्वार भाटे उत्पन्न करती चान्दनी, चन्द्रमा को एक आभूषण की भाँति धारण किये हुए और तारों रूप ठीकरों से सुशोभित आकाश से पृथ्वी पर आ गिरी। उस समय हरिण (चन्द्रमा पर मृगाकृति चिह्न), स्थिर आकृति वाला दिखायी दिया मानो वह जब खिले हुए कमलों से श्वेत हुए चन्द्रमारूप सरोवर में चादनी रूप जल को पीने के लोभ से उतरा तो अमृत के कीचड़ में चिपक गया हो। अन्धकार रूपी वर्षाऋतु के बीत जाने पर समुद्र पर आये हुए हंसों सरीखी, सिन्धुवार के ताजे और श्वेत फूलों सी श्वेत चन्द्रमा की किरणें कुमुदों से भरे तालाबों मे प्रविष्ट हो गई। उस समय, इसके उदय समय की लालिमा के अदृश्य हो जाने पर चन्द्रबिम्ब ऐसा दिखायी दिया कि मानो वह ऐरावत का वह कपोल स्थल हो जिस पर से सिन्दूर आकाश गगा में स्नान करने से धुल गया

जनयति हि मे मनसि महत्कौतुकमस्याः समुत्सर्पन्नसाधारणसौरभोऽयमनाघ्रातपूर्वो गन्धः' इति। स तु मामीषद्विहस्याब्रवीत्—'बाले, किमनेन पृष्टेन प्रयोजनम्। अथ कौतुकमावेदयामि। श्रूयताम्—

अस्ति त्रिभुवनप्रख्यातकीर्तिरत्युदारतया सुरासुरसिद्धवृन्दवन्दितचरणयुगलो महामुनिर्दिव्यलोकनिवासी श्वेतकेतुर्नाम। तस्य च भगवतः सुरलोकसुन्दरीहृदयानन्दकरम्, अशेषत्रिभुवनसुन्दरम्, अतिशयितनलकूबर रूपमासीत्। स कदाचिद्देवतार्चनकमलान्युद्धर्तुमैरावतमदजलबिन्दुबद्धचन्द्रकशतखचितजला हरहसितसितस्रोतस

स त्विति। स मा प्रतीषद्विहस्य किंचित्स्मित कृत्वाब्रवीदवोचत्। बाले इति। हे बाले हे कुमारिके, अनेन पृष्टेन किं प्रयोजन कोऽर्थ। अथेति। चेदर्थे। कौतुकमाश्चर्यं तदावेदयामि कथयामि। श्रूयतामाकर्ण्यताम्।

अस्तीति। नामेति कोमलामन्त्रणे। दिव्यलोकनिवासी स्वर्गलोकवसनशील श्वेतकेतुर्महामुनिरस्ति। त्रिभुवनेति। त्रिभुवने त्रिविष्टपे प्रख्याता विख्याता कीर्तिर्यशो यस्य स तथा। अत्युदारेति। अत्युदारतयात्युत्कृष्टतया। सुरेति। सुरा देवा, असुरा दैत्या, सिद्धा योगमन्त्रादिसामर्थ्ययुक्तास्तेषा वृन्द समूहस्तेन वन्दितं नमस्कृत चरणयुगल पादयुग्म यस्य स तथा। तस्येति। तस्य श्वेतकेतोर्भगवत। सुरेति। सुरलोकस्य या सुन्दर्यः स्त्रियस्तासा हृदयानि चित्तानि तेषामानन्दकर प्रमोदोत्पादकम्। अशेषेति। अशेष यत्त्रिभुवन त्रिविष्टपं तस्मात्सुन्दर हृद्यम्। अतीति। नलकूलबरात्कुबेरपुत्रादतिशयितमतिशयितनलकूबरम्। 'सुतोऽस्य नलकूबर' इति कोश। 'क्वचिदमाद्यन्तस्य परत्वम्' इति नलकूबरस्य परप्रयोग। अतिशयितोऽतिक्रान्तो नलकूबरो येनेति बहुव्रीहिर्वा। नलकूबररूपापेक्षयात्युत्कृष्टरूपमित्यर्थः। एवविधं रूपं सौन्दर्यमासीदभूत्। स इति। कदाचित्कस्मिंश्चित्समये स श्वेतकेतुर्देवतानामर्चनं पूजन तदर्थं कमलानि नलिनान्युद्धर्तुमुत्पाटयितु मन्दाकिनी स्वर्धुनीमवततारावतीर्णवान्। अथ मन्दाकिनी विशेषयन्नाह—ऐरावतेति। ऐरावतो हस्ति-

इसकी यह फैलती हुई सुगन्ध, जो ( मुझसे ) पहले कभी नहीं सूँघी गयी है, मेरे मनमें, निश्चय ही, बड़ी उत्सुकता उत्पन्न कर रही है।" और उसने थोड़ा हसकर मुझसे कहा—"( तुम्हारे द्वारा ) पूछी गयी इस बात से कौन सा प्रयोजन सिद्ध होगा ? ( अर्थात् कोई नहीं )। फिर भी यदि उत्सुकता है तो मैं बताता हूँ। सुनिये—

स्वर्गीय प्रदेशों के निवासी, तीनों लोकों में ख्यात यशवाले, अपने हृदय की विशालता के कारण देवताओं तथा राक्षसों के समूह द्वारा पूजित पाँवों वाले, एक महामुनि श्वेतकेतु हैं और उन भगवान् का ( शारीरिक ) सौन्दर्य, देवताओं तथा राक्षसों ( दोनों ही ) के लोकों की सुन्दरी स्त्रियों के हृदयों को आनन्द देने वाला, सम्पूर्ण तीनों भुवनों ( की सुन्दरता ) से अधिक सुन्दर तथा ( कुबेर के पुत्र ) नल्कूबर ( के रूप ) से भी बढा हुआ था। एक बार ( यह हुआ कि ) वे देवताओं की पूजा करने के लिये ( कुछ ) कमलों को तोड़ने के लिये ऐरावत के मदजल की बूँदों से बने हुए सैकड़ों चन्द्रकों[1] ( चकत्तों ) से व्याप्त जलवाली, शिवजी

१. मयूर की पूँछ पर बने विविध रंगों के चकत्तों के सदृश चकत्ते। जल पर चिकनाई पड़ जाने पर विविध रगो के चमकीले गोल गोल चकत्ते दिखाई देने लगते हैं।

मन्दाकिनीमवततार। अवतरन्तं च तं तदा कमलवनेषु संततसंनिहितविकचसहस्र-पत्रपुण्डरीकोपविष्टा देवी लक्ष्मीर्ददर्श। तस्यास्तु तमवलोकयन्त्याः प्रेममदमुकुलितेनानन्दबाष्पभरतरङ्गतरलतारेण लोचनयुगलेन रूपमास्वादयन्त्या जृम्भिकारम्भमन्थर-मुखविन्यस्तहस्तपल्लवाया मन्मथविकृतं मन आसीत्। आलोकनमात्रेण च समासादितसुरतसमागमसुखायास्तस्मिन्नेवासनीकृते पुण्डरीके कृतार्थतासीत्। तस्माच्च कुमारः समुदपादि। ततस्तमुत्सङ्गे आदाय सा 'भगवन्, गृहाण तवायमात्मजः'

---

मल्लस्तस्य मदजल दानवारि तस्य बिन्दव पृषतास्तैर्बद्ध यच्चन्द्रकशत मेचकशत तेन खचित व्याप्त जल यस्या सा तथा ताम्। हरेति। हर शभुस्तस्य हसित स्मित तद्वत्सित शुभ्र स्रोत. प्रवाहो यस्या सा ताम्। अवेति। तदा तस्मिन्कालेऽवतरन्तमम्बरादागच्छन्त श्वेत केतु मुनि कमलवनेषु नलिनखण्डेषु सतत निरन्तर सनिहिता समीपवर्तिनी विकचानि विकस्वराणि सहस्रपत्राणि यस्मिन्नेवभूत पुण्डरीक सिताम्भोज तत्रोपविष्टासीना लक्ष्मीर्देवी ददर्श दृष्टवती। तस्या इति। तस्या लक्ष्म्यास्त मुनिमवलोकयन्त्या ईक्षण कुर्वन्त्या । तु पुनरर्थक । मन्मथेन कदर्पेण विकृत सविकार मनश्चित्तमासीदभूत्। अथ लक्ष्मीं विशेषयन्नाह—प्रेमेति। प्रेममद प्रीतिमदस्तेन मुकुलितेन कुड्मलितेन। आनन्देति। आनन्देन प्रमोदेन यो बाष्पभरो हर्षनेत्राम्बुसमूह स एव तरङ्ग कल्लोलस्तेन तरला कम्पना तारा कनीनिका यस्मिन्नेवविधेन लोचनयुगलेन नेत्रयुग्मेन रूप सौन्दर्यमास्वादयन्त्या पिबन्त्या । जृम्भकेति। जृम्भिका जृम्भण तस्या आरम्भ आरम्भण तेन यन्मन्थर मुख तस्मिन्विन्यस्त स्थापितो हस्तपल्लवो यया सा तस्या । आलोकनेति। आलोकनमात्रेण केवल निरीक्षणेनैव समासादित प्राप्त सुरतसमागमसुख मैथुनसगमसात यया सा तस्या । तस्मिन्नेवासनीकृते विष्टरता नीते पुण्डरीके कृतार्थता सफलतासीत्। तस्मात्पुण्डरीकात्कुमार समुदपाद्युत्पन्न । तत इति। ततः कुमारोत्पत्तेरनन्तर कुमारकमुत्सङ्गे क्रोड आदाय गृहीत्वा सा लक्ष्मी हे भगवन् हे स्वामिन्, गृहाणाय तवात्मजस्त्वदङ्गज इत्युक्त्वा प्रतिपाद्य तस्मै श्वेतकेतवे त

---

की हँसी के समान श्वेत जलधारा वाली स्वर्ग गगा में उतरे और उतरते हुए उनको, उस समय कमलसमूहों में निरन्तर समीप (विद्यमान) रहने वाली, पूर्णतया खिले हुए तथा सहस्रों पखुड़ियों वाले श्वेत कमलमे बैठी हुई लक्ष्मी ने देख लिया। किन्तु उसको देखती हुई का, प्रेम (से उत्पन्न) आत्मानन्द के कारण आधी बन्द हुई, आनन्द के आँसुओं की बाढ़ से उठी लहरोंसी चचल पुतलियों वाली दोनों आँखों से उसके सौन्दर्य का पान करती हुई का, जम्हाइयों के शुरू हो जाने से अलसाये मुह पर (अपने) पत्ते-सरीखे (अर्थात् कोमल) हाथ को रखे हुई का मन काम से विकृत हो गया। और केवल देखने से ही, मैथुन कालीन सयोग सुख को प्राप्त किये हुई की सफलता[1] उसी आसन बनाये हुए श्वेत कमल पर ही हो गयी। और उस पुण्डरीक से एक कुमार उत्पन्न हो गया। इसके पश्चात् उसको गोदी में

---

1 कृतार्थता = इच्छाप्राप्तिरूपा सफलता।

इत्युक्त्वा तस्मै श्वेतकेतवे ददौ। असावपि बालजनोचिताः सर्वाः क्रियाः कृत्वा तस्य पुण्डरीकसंभवतया तदेव पुण्डरीक इति नाम चक्रे। प्रतिपादितव्रतं च तमागृहीतसकलविद्याकलापमकार्षीत्। सोऽयम्। इयं च सुरासुरैर्मथ्यमानात्क्षीरसागरादुद्गतः पारिजातनामा पादपस्तस्य मञ्जरी। यथा चैषा व्रतविरुद्धमस्य श्रवणसंसर्गमासादितवती तदपि कथयामि। अद्य चतुर्दशीति भगवन्तमम्बिकापतिं कैलासगतमुपासितुममरलोकान्मया सह नन्दनवनसमीपेनायमनुसरन्निर्गत्य साक्षान्मधुमासलक्ष्मीदत्तललितहस्तावलम्बया बकुलमालिकामेखलया कुसुमपल्लवग्रथिताभिराजानुलम्बिनीभिः

---

कुमारकं ददौ दत्तवती। असावपि श्वेतकेतुरपि बालजनोचिता शिशुजनयोग्याः सर्वा क्रिया प्रसवनादिका कृत्वा विधाय। तस्येति। तस्य कुमारस्य पुण्डरीकं सिताम्भोजं तस्मात्संभव उत्पत्तिस्तस्य भावस्तत्ता तया तस्माद्धेतोरेव निश्चयेन पुण्डरीक इति नाम चक्रेऽभिधानं विदधे। कियत्कालानन्तरं स एवं श्वेतकेतु प्रतिपादितव्रतं दत्तदीक्षमागृहीतसकलविद्याकलापं च तं कुमारमकार्षीत्कृतवान्। स कुमारोऽयं पुरोवर्ती दृश्यमानः। इयं चेति। सुरासुरैर्मथ्यमानद्विलोड्यमानात्क्षीरसागराद् दुग्धाम्बुधेः पारिजातनामा पादपो वृक्ष उद्गतो निर्गतस्तस्यैव कर्णावतंसीकृता मञ्जरी। यथेति। येन प्रकारेणैषा मञ्जरी व्रतविरुद्धं नियमविरोध्यस्य श्रवणसंसर्गं कर्णसंबन्धमासादितवती प्राप्तवती तदपि वृत्तान्तं कथयामि निवेदयामि। अद्येति। चतुर्दशी शिवतिथिरिति हेतोरमरलोकात्स्वर्गलोकात्कैलासगतं रजताद्रिप्राप्तं भगवन्तं माहात्म्यवन्तमम्बिकापतिं गौरीनाथमुपासितुं सेवितुं मया सह मत्सार्धम्। प्राप्तौ ल्योत्यायां 'क्रोशेन क्रोशं वानुवाकोऽधीत' इतिवत्। नन्दनवनस्य समीपं समीपेन वानुसरन्गच्छन्निर्गत्य स्वस्थानाद्बहिरागत्य साक्षाद्वनदेवतयारण्याधिष्ठात्र्येमां मञ्जरीमादाय गृहीत्वा प्रणम्य नमस्कृत्याभिहित उक्तः। अथ वनदेवतां विशिनष्टि—मध्विति। मधुमासो वसन्तमासस्तस्य लक्ष्मीः श्रीस्तया दत्तो ललितो मनोहरो हस्तस्तस्यावलम्बो यस्याः सा तया। बकुलेति। बकुल

---

लेकर उसने 'भगवन्! लीजिये, यह आपका पुत्र है'—यह कहकर उस श्वेतकेतु को दे दिया। उसने भी बालकों के लिये उचित सारे कृत्य (उसके लिये) करके पुण्डरीकसे जन्म होने के कारण उसका नाम वही—पुण्डरीक—रख दिया। और (ब्रह्मचर्य)—व्रत धारण किये हुए उसको सम्पूर्ण विद्याओं तथा कलाओं से अवगत करा दिया—(सारी विद्याएँ तथा कलाएँ सिखा दीं) वही यह है। और देव तथा दानवों से बिलोड़े जा रहे समुद्र से निकला पारिजात नाम का एक वृक्ष है, यह (कान में आभूषण की भाति पहनी हुई) उस वृक्ष के बौर की माला है। और यह जिस प्रकार व्रत के विरुद्ध इसके कान के सम्पर्क को प्राप्त हुई वह भी कहता हूँ। आज कृष्णपक्ष की चतुर्दशी है—इस लिये कैलास पर्वत पर स्थित (कैलाशपर्वत निवासी) भगवान् शिव की पूजा करने के लिये देवलोक से मेरे साथ नन्दन वन के छोर पर चलते हुए इसको (वन से) निकलकर (उस समय) साक्षात्—शरीरधारिणी—वसन्त शोभा द्वारा हाथ का सहारा दी गयी, बकुल पुष्पों की माला की मेखला बनाये हुई, पुष्पों और कोंपलों को गूंथकर

कण्ठमालिकाभिर्निरन्तराच्छादितविग्रहया नवचूताङ्कुरकर्णपूरया पुष्पासवपानमत्तया वनदेवतया पारिजातकुसुममञ्जरीमिमामादाय प्रणम्याभिहितः—'भगवन्, सकलत्रिभुवनदर्शनाभिरामायास्तवाकृतेरस्याः सदृशोऽयमलंकारः प्रसीद क्रियताम्। इयमवतसविलासदुर्ललितारोप्यता श्रवणशिखरम्। व्रजतु सफलता जन्म पारिजातस्य' इत्येवमभिदधाना चायमात्मरूपस्तुतिवादत्रपावनमितलोचनस्तामनादृत्यैव गन्तुं प्रवृत्तः। मया तु तामनुयान्तीमालोक्य 'को दोषः सखे, क्रियतामस्याः प्रणयपरिग्रहः' इत्यभिधाय बलादियमनिच्छतोऽप्यस्य कर्णपूरीकृता। तदेतत्कात्स्न्येंन योऽयम्,

केसरस्तस्य मालिका स्रक्सैव मेखला रशना यस्या सा तया। कुसुमेति। कुसुमैश्च पल्लवैश्च ग्रथिताभिर्गुम्फिताभिराजानु आ नळकील यावल्लम्बिनीभि कण्ठमालिकाभिर्निगरणस्रग्भिर्निरन्तरमाच्छादित आवृतो विग्रहो यस्या सा तया। नवेति। नव प्रत्यग्रो यश्चूताङ्कुर आम्राङ्कुरस्तस्य कर्णपूरो यस्या सा तया। पुष्पेति। पुष्पाणां कुसुमानां य आसवो माधवकस्तस्य पान तेन मत्तया क्षीबया। किमभिहित इत्याशयेनाह—भगवन्निति। हे भगवन् स्वामिन्, प्रसीद प्रसन्नो भव। सकलेति। सकल समग्रं यत् त्रिभुवन तस्य दर्शनेऽवलोकनेऽभिरामाया बन्धुराया अस्यास्तवाकृतेराकारस्य सदृशोऽनुरूपोऽलंकार क्रियता विधीयताम्। इयमिति। इयमवतसविलास एव दुरधिगम दुर्ललित क्रीडित यस्या. सैवंविधा मञ्जरी श्रवणशिखर कर्णप्रान्तमारोप्यता स्थाप्यताम्। पारिजातस्य जन्मोत्पत्ति सफलतां सार्थकता व्रजतु गच्छतु। इत्येव पूर्वोक्तप्रकारेणाभिदधाना कथयन्तीम्। अयमिति। पुण्डरीक। आत्मेति। आत्मनो यद्रूप सौन्दर्यं तस्य स्तुतिवाद प्रशसन तस्माद्या त्रपा लज्जा तयावनमिते नम्रीकृते लोचने नेत्रे येनैवंभूतस्तामनादृत्यैवानादर कृत्वैव गन्तु प्रवृत्तो गमनायोद्यतोऽभूत्। मयेति। तां वनदेवतामनुयान्तीमनुव्रजन्तीमालोक्य निरीक्ष्य हे सखे हे मित्र, अस्या मञ्जर्या को दोष। प्रणयेन स्नेहेन परिग्रह स्वीकार क्रियता विधीयतामिति मयाभिधायोक्त्वानिच्छतोऽप्यवाञ्छतोऽपीयम् अस्य कर्णपूरीकृता श्रवणभरणीकृता। तदिति। तस्माद्धेतोस्तदेतत्पृच्छाविषयीकृतं कात्स्न्येंन साकल्येन मया सर्वमावेदित कथितम्। तदेतत्किमित्यभिप्रायेणाह—

बनायी हुए एव घुटनों तक लटक रहे कण्ठहारों द्वारा सर्वथा ढके शरीर वाली, नयी आम की मजरी को कर्णभूषण बनाये हुई, फूलों की मदिरा के पान से मस्त हुई वनकी अधिष्ठात्री देवी ने इस पारिजात पुष्पों के गुच्छे को लेकर प्रणाम करके कहा—"भगवान्! समूचे त्रिभुवन में देखने में आकर्षक इस तुम्हारी आकृति के सर्वथा अनुरूप, इसको आप आभूषण बना लें (आभूषण रूप में पहन लें)। कर्णाभूषण की शोभा (की प्राप्ति) के लिये हठी बनी हुई, (कर्णाभूषण बनने के लिये 'सिर चढ़ी') इस माला को आप अपने कर्ण प्रदेश पर रख लीजिये। पारिजात का जन्म (आज) सफल हो।" और यह मुनिकुमार अपने सौन्दर्य की प्रशसा से (को सुन कर) उत्पन्न लज्जा के कारण नीचे की हुई आंखों वाला, इस प्रकार कहती हुई उसकी उपेक्षा करके ही चलने लगा। किन्तु मैंने उसको पीछे पीछे आती हुई को देखकर कहा—'मित्र! क्या हानि है? आप इसकी इस प्रार्थना को स्वीकार करलें' यह कहकर मैंने इस माला को न चाहते हुए भी इसका कर्णभूषण बना दिया। इस प्रकार मैंने 'यह कौन

यस्य चायम्, या चेयम्, यथा चास्य श्रवणशिखरं समारूढा तत्सर्वमावेदितम्। इत्युक्तवति तस्मिन्स तपोधनयुवा किंचिदुपदर्शितस्मितो मामवादीत्—'अयि कुतूहलिनि, किमनेन प्रश्नायासेन। यदि रुचितसुरभिपरिमला गृह्यतामियम्' इत्युक्त्वा समुपसृत्यात्मीयाच्छ्रवणादपनीय कलैरलिकुलक्कणितैः प्रारब्धरतिसमागमप्रार्थनामिव मदीये श्रवणपुटे तामकरोत्। मम तु तत्करतलस्पर्शलोभेन तत्क्षणमपरमिव पारिजातकुसुममवतंसस्थाने पुलकमासीत्। स च मत्कपोलस्पर्शसुखेन तरलीकृताङ्गुलिजालकात् करतलादक्षमाला लज्जया सह गलितामपि नाज्ञासीत्। अथाह तामसप्राप्तामेव

योऽयमित्यादि। योऽयं कुमार, येयं मञ्जरी, यथा येन प्रकारेणास्य श्रवणशिखरं कर्णप्रान्तं समारूढा प्राप्ता। इतीति। तस्मिन्मुनावित्युक्तवति कथितवति सति। स इति। स पुण्डरीकस्तपोधनयुवा किंचीदीषदुपदर्शितं स्मितमदृष्टरदं हास्यं येनैवभूतो मामवादीत्प्रत्यवोचत्। अयीति सम्बोधने। अयि कुतूहलिनि, अनेन प्रश्नायासेन पृच्छापरिश्रमेण किम्। यदीति। यदि रुचितो रुचिविषयीभूतः सुरभिपरिमलो यस्या एवंविधेयं तदा गृह्यतां ग्रहणविषयीक्रियताम्। इति पूर्वोक्तमुक्त्वा समुपसृत्य समीपमागत्यात्मीयात्स्वकीयाच्छ्रवणात्कर्णादपनीय दूरीकृत्य मदीये श्रवणपुटे तां मञ्जरीमकरोदघटयत्। कलैरिति। कलैर्मनोज्ञैरलिकुलक्कणितैर्मधुकरकुलशब्दितैः। प्रारब्धेति। प्रारब्धा प्रस्तुता रतिसमागमस्य सम्भोगसमागमस्य प्रार्थना याचना ययैवंभूतामिव। एतेन स्वानुरक्ति प्रदर्शिता। मम त्विति। मम तु पुनरर्थकं। तस्य यत्करतलं तत्स्पर्शलोभेन तत्तृष्णया तत्क्षणमवतंसस्थानं उक्तं पुलकं अपरं पारिजातकुसुममिवासीत्। एतेन द्वितीयकर्णेऽपि तच्छोभा सूचिता। स चेति। स पुण्डरीको मत्कपोलस्पर्शसुखेन गल्लास्परप्रदेशाश्लेषसातेन तरलीकृतं कम्पनीकृतमङ्गुलिजालकं यस्यैवंभूतात्करतलाद्धस्ततलाल्लज्जया त्रपया सह गलितां च्युतामप्यक्षमालां जपमालां नाज्ञासीन्न ज्ञातवान्। तदनुरक्तं ज्ञात्वा तस्य पुण्डरीकस्य यो भुजपाशो बाहुपाशस्तेन संदानित. सयतो य. कण्ठग्रह कण्ठालिङ्गनं तज्जनितं यत्सुखं तत्सदृशमिव। अत्रेवशब्दः सादृश्यार्थः। तदुक्तमलंकार-

है? यह किसका (पुत्र) है? यह माला क्या है? और यह कैसे इसके कर्णप्रदेश पर आ पहुँची है' यह सब कुछ पूरा पूरा वर्णन कर दिया है।"—उसके यह कह चुकने पर उस तपस्वी युवक ने कुछ कुछ मुस्कान दिखाकर मुझ से कहा—"अरी! उत्सुकमना कुमारिके! प्रश्न पूछने का कष्ट करने से क्या लाभ है! यदि इसकी भीनी सुगन्ध तुम्हें अच्छी लगती है तो इसको ले लो'—यह कहकर मेरे समीप सरककर अपने कान से (उतार कर उसने वह माला, जिसने अपने ऊपर मडराते भौंरों के मनोहारी शब्दों द्वारा मानो प्रणयसयोग की याचना शुरू कर रखी थी) मेरे कान पर रख दी। किन्तु मेरे कर्णाभूषण के स्थान पर उसके हाथ का स्पर्श प्राप्त करने के लोभ के कारण उसी समय रोमाच हो आया—वह मानो दूसरा पारिजात फूल ही था। और वह मेरे गाल को छू कर प्राप्त हुए सुख के कारण काप गयी सारी अगुलियों वाले हाथ से लज्जा के साथ साथ खिसक कर गिरी हुई अपनी अक्षमाला को नहीं जान पाया। तब मैंने उस अक्षमाला को, पृथ्वी तक न पहुँचती हुई ही को लेकर, अपने

भूतलमक्षमालां गृहीत्वा सलीलं तद्भुजपाशसदानितकण्ठग्रहसुखमिवानुभवन्ती दर्शितापूर्वहारलतालीला कण्ठाभरणतामनयम् ।

इत्थंभूते च व्यतिकरे छत्रग्राहिणी मामवोचत्—'भर्तृदारिके, स्नाता देवी । प्रत्यासीदति गृहगमनकालः । तत्क्रियता मज्जनविधिः' इति । अहं तु तेन तस्या वचनेन नवग्रहा करिणीव प्रथमाङ्कुशपातेनानिच्छया कथंकथमपि समाकृष्यमाणा तन्मुखाल्लावण्यामृतपङ्कमग्नामिव कपोलपुलककण्टकजालकलग्नामिव मदनशरशलाकाकीलितामिव सौभाग्यगुणस्यूतामिव अतिकृच्छ्रेण दृष्टि समाकृष्य स्नातुमुदचलम् । उच्चलि-

शेखरे—'भवन्तीवादिशब्दाश्च सादृश्यप्रतिपत्तये' । अनुभवन्त्यनुभवविषयीकुर्वन्ती कण्ठाभरणता निगरणभूषणतामनयमानीतवती । कीदृशीम् । दर्शिता प्रकटीकृतापूर्वहारलताया लीला यस्या सा ताम् ।

इत्थमिति । इत्थभूत एतादृशे व्यतिकरे परम्परानुरागातिशये छत्रग्राहिण्यातपत्रधारिणी मामवोचदब्रवीत् । किमुवाचेत्याह—भर्त्रिति । हे भर्तृदारिके हे राजपुत्रि, स्नाता कृतस्नाना देवी त्वन्माता वर्तते ।

अथ च गृहगमनकाल सद्मव्रजनसमय प्रत्यासीदति विध्नितो भवति । अतो मज्जनविधि स्नानविधि क्रियता विधीयताम् । अहं त्विति । अह तस्याश्छत्रधारिण्यास्तेन वचनेन प्रथमाङ्कुशपातेनाद्यसृणिप्रहारेण नव प्रत्यग्रो यस्या एवविधा करिणी हस्तिनी तद्वदिव कथंकथमपि महता कष्टेनानिच्छयानीहया समाकृष्यमाणा दृष्टि चक्षुरतिकृच्छ्रेणातिकष्टेन समाकृष्य स्नातुमुदचलमुदव्रजम् । कीदृशीमिव । लावण्यामृतमेव पङ्क कर्दमस्तत्र मग्नामिव । कपोलेति । कपोलयो पुलकलक्षणा ये कण्टकास्तेषा जालक तत्र लग्नामिव । मदनेनेति । मदनस्य कदर्पस्य शरा बाणास्तेषा शलाका ईषिकास्ताभि कीलितामिव यन्त्रितामिव । सौभाग्येति । सुभगस्य भाव सौभाग्य तल्लक्षणो यो गुणस्तेन स्यूतामिवान्योन्यश्लिष्टामिव । उच्चलितायामिति । मध्यु

कण्ठ का अलङ्कार बना लिया, उस समय उस अक्षमाला ने पहले कभी न दिखायी हुई, हार की शोभा को दिखाया और मैंने उस ( पुडरीक ) के बाहुपाश द्वारा जकड़े हुए कण्ठ के आलिंगन सुख सा अनुभव किया ।

जब इस प्रकार का घटनाजाल हो गया तो मेरी छत्रग्राहिणी मुझ से बोली—'राजपुत्री ! रानी स्नान कर चुकी है ! घर जाने का समय निकट आ रहा है, इसलिये आप स्नानविधि पूरी कर लें' किन्तु मैं उसके ( इस ) कथन से जैसे-तैसे विना इच्छा के ही, नयी पकड़ी गयी हथिनी पहले अकुश प्रहार से बिना चाहे हुए ही जैसे खिंचती चली जाती है वैसे ही खिंचती हुई, बड़ी कठिनाई से उसके मुख पर से अपनी आँखों ( दृष्टि ) को हटाकर स्नान के लिये चली । मेरी आँखें उस समय ऐसी थीं कि मानो ( उसके ) सौन्दर्य रूपी कीचड़ मे धँस गयी थीं, मानो ( उसके ) गाल पर के रोमाचरूपी काँटों में फँस गयी थीं, मानो कामदेव के बाणरूपी शलाकाओं द्वारा बिंध गयी थीं, और मानो उसकी सुन्दरता रूपी रस्सी द्वारा ( उसके शरीर से ) सिल गयी थीं । ( इसीलिये मानो

तायां च मयि द्वितीयो मुनिदारकस्तथाविधस्तस्य धैर्यस्खलितमालोक्य किंचित्प्रकटितप्रणयकोप इवावादीत्—'सखे पुण्डरीक, नैतदनुरूपं भवतः। क्षुद्रजनक्षुण्णः क एष मार्गः। धैर्यधना हि साधवः। किं यः कश्चन प्राकृत इव विक्लवीभवन्तमात्मान न रुणत्सि। कुतस्तवापूर्वोऽयमाद्येन्द्रियोपप्लवः, येनास्येव कृतः, क ते तद्धैर्यम्, कासाविन्द्रियजयः, क तद्वशित्वम्, चेतसः क सा प्रशान्तिः, क तत्कुलक्रमागत ब्रह्मचर्यम्, क सा सर्वविषयनिरुत्सुकता, क ते गुरूपदेशाः, क तानि श्रुतानि, क ता वैराग्यबुद्धयः, क तदुपभोगविद्वेषित्वम्, क सा सुखपराङ्मुखता, कासौ तपस्यभिनिवेशः, क सा

---

चालितायां प्रचलितायां सत्याम्। चकार समुच्चयार्थं। द्वितीय कपिञ्जलो मुनिदारकस्तथाविधस्तादृशस्तस्य पुण्डरीकस्य धैर्यस्खलित सत्वस्खलनामालोक्य वीक्ष्य किंचिदीषत्प्रकटित आविष्कृत. प्रणयकोप स्नेहकोपो येन तत्सदृश इवावादीदवोचत्। रोषोक्तावतीव वैरस्य स्यादिति भाव। किं तदित्याह—सखे इति। हे सखे पुण्डरीक, भवतस्तव नैतदनुरूपं योग्यम्। क्षुद्रजना नीचलोकास्तै क्षुण्ण आचीर्णं क एष मार्गं पन्था। भवत इत्यत्रापि सबध्यते। हि यस्मात्कारणात्साधवो मुनयो धैर्यमेव धन द्रव्य येषामेवविधा भवन्ति। य कश्चनानिर्दिष्टाभिधान प्राकृत पामरस्तद्वदिव विक्लवीभवन्त विह्वलीभवन्तमात्मानं क्षेत्रज्ञ किं न रुणत्सि किं न निरोध करोषि। अपूर्वोऽननुभूत आद्य प्रथम इन्द्रियोपप्लव करणोपद्रवोऽय प्रत्यक्षोपलभ्यमानस्तव भवत. कुत। किंनिमित्तक इत्यर्थ। येनेति। येनेन्द्रियोपप्लवेनैवं कृत. शिथिलतां नीतोऽसि। त्वमिति शेष। तदेव दर्शयन्नाह—क्वेत्यादि। ते तव तद्धैर्यं क। तथेन्द्रियाणा करणानामसौ जयो निरोध क। तथा तदनिर्वचनीयस्वरूपं वशित्व स्वतन्त्रत्व क। तथा चेतसश्चित्तस्य सा प्रशान्ति क। तथा तत्कुलक्रमागत कुलपरिपाट्यागत ब्रह्मचर्यं कामविरति क। तथा सा सर्वविषयेषु समग्रेन्द्रियार्थेषु निरुत्सुकता निरुत्साहता क। तथा गुरूणां हिताहितोपदेशदेष्टृणामुपदेशा हितशिक्षा क। तथा तानि पूर्वोक्तानि श्रुतानि ज्ञानानि क। तथा ता सर्वाधिका वैराग्य विरक्तता तस्या बुद्धय' प्रतिभा क। तथा तासामङ्गनानां स्त्रीणामुपभोग

---

बड़ी कठिनता से उसके शरीर पर से हटायी जा रही थीं)। और मेरे चल पड़ने पर दूसरा मुनिकुमार उसके वैसे धीरज छूटने को देखकर, कुछ प्रणय-कोप प्रकट किये हुआ सा बोला—'मित्र, पुण्डरीक! यह बात तुम्हारे लिये उचित नहीं है। यह नीच (अथवा सामान्य) जनों द्वारा चला गया मार्ग है। तपस्वी (साधव.) तो वास्तव में धीरजरूपी धन वाले होते हैं। जिस किसी सामान्य जन की भाँति (आवेग के द्वारा) क्षुब्ध होते हुए अपने आपको तुम क्यों नहीं रोकते हो? आज यह अभूतपूर्व इन्द्रियों की क्षुब्धता तुम्हें कहाँ से प्राप्त हुई है कि जिसने तुम्हारी यह दशा कर दी है? तुम्हारी वह दृढ़ता कहाँ है? इन्द्रियों का वह सयम कहाँ है? मनका वह नियन्त्रण कहाँ है? चित्त की वह शांति कहाँ है? (अपनी) वंशपरम्परा से प्राप्त हुआ वह ब्रह्मचर्य कहाँ है? विषयमात्र के प्रति वह उपेक्षावृत्ति कहाँ है? वे गुरुओं द्वारा दिये गये उपदेश कहाँ हैं? वे ज्ञान कहाँ हैं? वे वैराग्यविचार कहाँ है? विषय भोग के प्रति वह घृणा कहाँ है? विषय सुख के प्रति वह उपेक्षावृत्ति कहाँ है?

भोगानामुपर्यरुचिः, क्व तद्यौवनानुशासनम्। सर्वथा निष्फला प्रज्ञा, निर्गुणो धर्मशास्त्राभ्यासः, निरर्थकः संस्कारः, निरुपकारको गुरूपदेशविवेकः, निःप्रयोजना प्रबुद्धता, निःकारणं ज्ञानम्, यदत्र भवादृशा अपि रागाभिषङ्गैः कलुषीक्रियन्ते, प्रमादैश्चाभिभूयन्ते। कथं करतलाद्गलितामपहृतामक्षमालामपि न लक्षयसि। अहो विगतचेतनत्वमपहृतानामेवम्। इदमपि तावद्ध्रियमाणमनयानार्यया निवार्यतां हृदयम्' इत्येवमभिधीयमानश्च तेन किंचिदुपजातलज्ज इव प्रत्यवादीत्—'सखे कपिञ्जल,

पुनरासेवन तस्मिन्विद्वेषित्वं वैरित्वं क्व। तथा सुखात्सौख्यात्पराङ्मुखता पराचीनता क्व। तथा तपसि व्रतविशेषेऽसावभिनिवेश आग्रह क्व। तथा भोगानां विषयाणामुपरि साऽरुचिरस्पृहा क्व। तथा तदनिर्वचनीयस्वरूप यौवनस्य तारुण्यस्यानुशासनं नियन्त्रण क्व। सर्वथेति। सर्वथा सर्वप्रकारेण प्रज्ञा प्रतिभा निष्फला नि प्रयोजना। निर्गुण इति। धर्मशास्त्राणा स्मृत्यादीनामभ्यासो भूयोभूयस्तदभ्यसन स एव निर्गुण। जाड्यापहारलक्षणगुणरहित इत्यर्थ। निरर्थकेति। संस्कारो ब्राह्मण्यापादनविधि स एव निरर्थक यदुद्दिश्य क्रियते तदनाप्ते। निरूपेति। गुरुपदेशाद्यो विवेक पृथगात्मता स निरर्थक इत्यर्थ। निरिति। प्रबुद्धता प्रेक्षावत्ता नि प्रयोजना निर्हेतुका। निरिति। ज्ञान श्रुतादि नि कारणं निर्निमित्तकम्। यदत्रेति। यदिति हेत्वर्थे। अत्रेति। अस्मिन्नवसरे रागाभिषङ्गैर्भवादृशा अपि त्वत्सदृशा अपि कलुषीक्रियन्ते मलिनीक्रियन्ते। प्रमादैश्चेति। प्रमादैर्विषयादिभिरभिभूयन्ते पराभूयन्ते। चकार' समुच्चयार्थे। तदेव दर्शयति—कथमिति। करतलाद्धस्ततलाद्गलितां च्युतां तथा तयापहृतां गृहीतामक्षमालामपि कथं न लक्षयसि कथं न जानासि। अहो इत्याश्चर्ये। अपहृताना कामपीडितानामेवं पूर्वोक्तप्रदर्शितरीत्या विगतचेतनत्व नष्टचेतनत्वम्। इदमिति। तावदादाविदमपि हृदय चित्तमनयानार्यया ह्रियमाणमाकृष्यमाणं निवार्यतां दूरीक्रियतामित्येवं तेन कपिञ्जलेनाभिधीयमान कथ्यमान किंचिदीषदुपजाता प्रादुर्भूता लज्जा त्रपा यस्य स इव प्रत्यवादीत्प्रत्यवोचत्। सखे

तप के लिये वह उत्कट अभिलाषा कहाँ है? भोगो (विषयभोग) के प्रति वह अरुचि (अप्रीति) कहाँ है? जवानी पर (रखा गया) (अर्थात् जवानी में उठने वाले आवेगों पर रखा गया) वह नियंत्रण कहाँ है? इस ससार में जब आप सरीखों को भी कामनाओं के स्पर्श मैला कर देते हैं और जब आप सरीखे (अपने ही) मूर्खतापूर्ण कृत्यों (प्रमादों) के अधीन हो जाते हैं तो फिर प्रतिभा तो यहाँ सब प्रकार से निष्प्रयोजन ही (सिद्ध हुई) है, व्यक्ति को धर्म-कर्त्तव्य की शिक्षा देने वाले शास्त्रों का स्वाध्याय व्यर्थ (मूर्खता को दूर करना रूप गुण से रहित) सिद्ध हुआ, सस्कार (प्रशिक्षण) व्यर्थ हुआ, वृद्धजनों के उपदेशों द्वारा उत्पादित (हिताहित) विवेक किसी लाभ का सिद्ध नहीं हुआ, प्रबुद्धता निष्फल सिद्ध हुई और ज्ञान निष्प्रयोजन सिद्ध हुआ। यह क्या बात है कि तुम यह भी नहीं देखते कि अक्षमाला हाथ से गिर पड़ी और (उसको कोई) ले गया। आश्चर्य है कि तुम्हारी चेतना कितनी नष्ट हो गयी है। अस्तु, वह (अक्षमाला) तो पहले ही चुरा ली गयी, परन्तु इस दुष्टा कन्या द्वारा चुराकर लिये जाते हुए अपने हृदय को भी तो पहले रोको।" और इस प्रकार कहे

किं मामन्यथा सभावयसि। नाहमेवमस्या दुर्विनीतकन्यकाया मर्षयाम्यक्षमालाग्रहणापराधमिमम्' इत्यभिधायालीककोपकान्तेन प्रयत्नविरचितभीषणभ्रूकुटिभूषणेन चुम्बनाभिलाषस्फुरिताधरेण मुखेन्दुना मामवदत्—'चञ्चले, प्रदेशादस्मादिमामक्षमालामदत्त्वा पदात्पदमपि न गन्तव्यम्' इति। तच्च श्रुत्वाहमात्मकण्ठादुन्मुच्य मकरध्वजलास्यारम्भलीलापुष्पाञ्जलिमेकावलीम् 'भगवन्, गृह्यतामक्षमाला' इति मन्मुखासक्तदृष्टेः शून्यहृदयस्यास्य प्रसारिते पाणौ निधाय स्वेदसलिलस्नातापि पुनः स्नातुम-

इति। हे सखे कपिञ्जल, किमिति प्रश्ने। मामन्यथा तन्मनस्कत्वेन सभावयसि सभावना विषयीकरोषि परमेतस्यां मन्मनोविकृतिर्नास्ति, तथाक्षमालाग्रहणनिमित्तकरोषोऽप्यन्यथा मुनीनां समदर्शित्व न स्यादिति भाव। अथ चेत्कपिञ्जल, तव शङ्कित मनस्तदेतस्या दुर्विनीत कन्यकाया इममक्षमालाग्रहणापराध जपमालास्वीकरणागस नाह मर्षयामि सहिष्ये। इति पूर्वोक्तमभिधायोक्त्वा मुखेन्दुना वक्त्रलक्षणचन्द्रेण मामिति प्रत्यवोचत्प्रत्यब्रवीत्, अथ मुखेन्दु विशेषयन्नाह—अलीकेति। अलीको मिथ्या न तु वास्तव। एवंविधो य कोप क्रोधस्तेन कान्तेन मनोहरेण। प्रयत्नेति। प्रयत्नेन बलात्कारेण। कोपाभावादिति भाव। विरचिता निर्मिता भीषणा भैरवा भ्रूकुटि सकोपभ्रूविकृति सैव भूषण यस्मिन् तेन। चुम्बनेति। चुम्बनं सबन्धविशेषस्तस्याभिलाष इच्छाविशेषस्तेन स्फुरित कम्पितोऽधर ओष्ठो यस्मिन्। किमुवाचेत्याह—चञ्चलेति। हे चञ्चले, अस्मात्प्रदेशादिमामक्षमालामदत्त्वासमर्प्य पदात्पदमपि न गन्तव्यम्। तच्चेति। तत्पूर्वोक्त श्रुत्वाकर्ण्यात्मकण्ठात्स्वकीयनिगरणादह मकरध्वजस्य कदर्पस्य लास्यारम्भलीला नाट्यप्रारम्भक्रीडा तस्या पुष्पाञ्जलिरेवभूतामेकावली मुक्ताप्रालम्बमक्षमालेति कृत्वा हे भगवन्, गृह्यतामुपादीयता इति अस्य मुने प्रसारिते विसारिते पाणौ ता निधाय सस्थाप्य स्वेदसलिलेन श्रमवारिणा स्नातापि कृतस्नानापि पुन पुन स्नातुमवातरमवती

जाते (सचेतन किये जाते) हुए (पुण्डरीक) ने कुछ कुछ लज्जित होकर उत्तर दिया—"मित्र कपिञ्जल! क्यों तुम मुझको गलत समझ रहे हो? (मेरे प्रति गलत आशका क्यों कर रहे हो?)। मै इस दुःशील कन्या के इस अक्षमाला लेने के अपराध को नहीं सहन करूँगा"[1]—यह कहकर उसने अपने कृत्रिम क्रोध द्वारा चमकते, प्रयत्न (करके) बनायी गयी भयानक भौंह से शोभित तथा चुम्बन लेने की इच्छा के कारण फड़फड़ाते निचले होंठ वाले (अपने) चन्द्र-सदृश मुह से कहा—"चञ्चले! (शरारती लड़की!) इस अक्षमाला को न देकर (दिये बिना) इस स्थान ने एक डग भी मत जाना।" और मैंने यह सुनकर कामदेव (के सम्मानार्थ) किये गये नृत्य के आरम्भ में (समर्पित) पुष्पाञ्जलिसरीखी मोतियों की लड़ी को अपने गले से उतारकर "भगवन् अक्षमाला को ले लीजिये' यह (कहते हुए) मेरे मुँह पर लगायी हुई (स्थिर की हुई) आँखों वाले, शून्यहृदय (कुछ भी न सोचते हुए), इस मुनिकुमार के फैलाये हुए हाथ पर मोतियों की माला को रखकर मैं, पसीने में स्नान किये हुई भी पुन. स्नान के लिये सरोवर में उतर गयी। और (सरोवर

१. वर्तमानसामीप्ये वर्तमानवद् वा।

वातरम्। उत्थाय च कथमपि प्रयत्नेन निम्नगेव प्रतीप नीयमाना सखीजनेन बलाद्-म्बया सह तमेव चिन्तयन्ती स्वभवनमयासिषम्। गत्वा च प्रविश्य कन्यान्तःपुर ततः प्रभृति तद्विरहविधुरा किमागतास्मि, किं तत्रैव स्थितास्मि, किमेकाकिन्यस्मि, कि परिवृत्तास्मि, कि तूष्णीमस्मि, कि प्रस्तुतालापास्मि, कि जागर्मि, कि सुप्तास्मि, कि रोदिमि, कि न रोदिमि, कि दुःखमिदम्, कि सातमिदम्, किमुत्कण्ठेयम्, कि व्याधिरयम्, कि व्यसनमिदम्, किमुत्सवोऽयम्, कि दिवस एषः, कि निशेयम्, कानि रम्याणि, कान्यरम्याणीति सर्वं नावागच्छम्। अविज्ञातमदनवृत्तान्ता च क

---

र्णवती। अथ मुनिं विशेषयन्नाह—शून्येति। शून्य हृदय चेतो यस्य स तथा तस्य। तत्र हेतुमाह—मन्मुखेति। मदानने आसक्ता कग्ना दृष्टिर्यस्य स तथा तस्य। उत्थायेति। उत्थान कृत्वा कथमपि महता प्रयत्नेन सखीजनेन वयस्याजनेन बलाद्धठात्प्रतीप पश्चान्नीयमाना प्राप्यमाणा। तत्र दृष्टान्तमाह—निम्नगेति। यथा निम्नगा नदी महाप्रयत्नेनैव पश्चान्नीयते, एवंविधाहमम्बया जनन्या सह सार्धं तमेव मुनिकुमारक चिन्तयन्ती ध्यायन्ती। अत्रैवकारोऽन्ययोगव्यवच्छेदार्थं। तदुक्तम्—'अयोग योगमपरैरत्यन्तायोगमेव च। व्यवच्छिनत्ति धर्मस्य निपातो व्यतिरेचक' इति। स्वभवन निजसद्मायासिषमागतवती। गत्वेति। गत्वैत्य। स्वभवनमिति शेष। कन्यान्त पुर कन्यावरोध प्रविश्य प्रवेश कृत्वा। चकार पुनरर्थक। तत प्रभृति तद्दिनादारभ्य तस्य पुण्डरीकस्य विरहेण वियोगेन विधुरा व्याकुला सत्यहमिति सर्वं नावगच्छ नावगममिति दूरेणान्वय। इतिशब्दार्थमाह—किमाग-तेति। किमित सर्वत्र वितर्कार्थे। अहमागतास्मि गृह समायातास्मि। किमिति पूर्ववत्। तत्रै-वाच्छोदसरस्तीरे स्थितास्मि। किमेकाकिन्यसहायास्मि किं परिवृता परिवारान्वितास्मि। किं तूष्णीमस्मि किं प्रस्तुत प्रारब्ध आलाप सलापो ययैवविधास्मि। किं जागर्मि निद्राक्षय-युक्तास्मि। किं सुप्तास्मि कृतनिद्रास्मि। किं रोदिमि। किं न रोदिमि। किं दु खमिदम्। किं सातमिद सौख्यमिदम्। किमुत्कण्ठेयम्। किमय व्याधिरामय। किमिद व्यसनमत्यासक्ति। किमयमुत्सवो मह। किमेष दिवसो दिनम्। किमिय निशा रात्रि। कानि वस्तूनि रम्याणि

---

मे से ) उठकर ( निकल कर ) जैसे तैसे बलपूर्वक सखियों द्वारा ले जायी गयी, अपने प्रवाह के विपरीत उल्टी ले जायी गयी नदी की भाँति, उसी ( युवा तपस्विकुमार ) का ही ध्यान करती हुई माता के साथ अपने घर चली गयी।

घर जाकर कन्याओं के अन्त·कक्ष में प्रविष्ट होकर उसके वियोगसे दु खिता मैंने यह सब कुछ भी नहीं जाना कि क्या मैं आ गयी हूँ अथवा वहीं पर ठहरी हुई हूँ, क्या अकेली हूँ अथवा घिरी हुई हूँ, क्या मैं चुप हूँ अथवा बातचीत कर रही हूँ क्या मैं जाग रही हूँ अथवा सोरही हूँ, क्या मैं रो रही हूँ अथवा नहीं रो रही हूँ, क्या ( यह सब ) दुख है अथवा सुख है; क्या यह प्रणय के लिये व्यग्रता है अथवा कोई रोग है, क्या यह कोई आपत्ति है अथवा कोई उत्सव है, क्या यह दिन है अथवा रात है, कौन सी वस्तुएँ आकर्षक हैं अथवा कौन सी अना-कर्षक हैं इत्यादि। और ( अभीतक ) कामदेव के वृत्तान्त से अपरिचित होने के कारण—मुझे कहाँ

गच्छामि, किं करोमि, किं शृणोमि, किं पश्यामि, किमालपामि, कस्य कथयामि, कोऽस्य प्रतीकार इति सर्वं च नाज्ञासिषम्। केवलमारुह्य कुमारीपुरप्रासादं विसर्ज्य च सखीजनं द्वारि निवारिताशेषपरिजनप्रवेशा, सर्वव्यापारानुत्सृज्यैकाकिनी मणिजालगवाक्षनिक्षिप्तमुखी, तामेव दिशं तत्सनाथतया प्रसाधितामिव महारत्ननिधानाधिष्ठितामिव अमृतरससारसागरपूरप्लावितामिव पूर्णचन्द्रोदयालङ्कृतामिव दर्शनसुभगामीक्षमाणा, तस्माद्दिगन्तरादागच्छन्तमनिलमपि वनकुसुमपरिमलमपि शकुनिध्वनि-

शोभनानि। कानि च तद्विपरीतानि। अरम्याणीत्यर्थं। अवीति। अविज्ञातोऽनाकलितो मदनस्य कदर्पस्य वृत्तान्त उदन्तो यया सैवभूताहमिति सर्वं नाज्ञासिषं न ज्ञातवती। इति शब्दार्थमाह—क्वेति। क्व गच्छामि व्रजामि। किं करोम्यनुतिष्ठामि। किं शृणोम्याकर्णयामि। किं पश्यामि विलोकयामि किं वदामि। कस्य कथयामि निवेदयामि। कोऽस्य प्रतीकार प्रतिक्रिया। अथ विरहेण विप्रलम्भपुष्टिं प्रदर्शयन्नाह—केवलेति। केवलमन्यनिरपेक्षम्। कुमारीणां पुर इति। पदैकदेशे पदसमुदायोपचारादन्त पुरप्रासादमवरोधगृहमारुह्यारोहण कृत्वा सखीजन सध्रीजन विसर्ज्य दूरीकृत्य द्वारि प्रतोल्यां निवारितो निषिद्धोऽशेष. समग्रः परिजनस्य परिच्छदस्य प्रवेश आगमन यया सा। तथा सर्वव्यापारान्समग्रकृत्यान्युत्सृज्य विमुच्यैकाकिन्यद्वितीया मणिनिर्मितानि जालानि यस्मिन्नेवभूतो यो गवाक्षो वातायनस्तत्र निक्षिप्त स्थापित मुखमानन यया सैवभूता। तामेव मुनिकुमारकाधिष्ठिता दिशं ककुभमीक्षमाणा विलोकमाना। अथ तद्वस्तुजन्यसतोषजनकत्वसाम्येन तामेव दिशमुत्प्रेक्षते—तत्सनाथेति। तत्सहिततयेत्यर्थं। प्रसाधितामिव भूषितामिव। महान्ति रत्नानि यस्मिन्नेवभूत यन्निधान कुनाभिस्तेनाधिष्ठितामाश्रितामिव। अमृतरसेन पीयूषरसेन सार प्रधानो य. सागर समुद्रस्तस्य पूर. प्लवस्तेन प्लावितामिवाकीर्णामिव। पूर्ण समग्रो यश्चन्द्र शशाङ्कस्तस्योदय उद्गमस्तेनालङ्कृतामिव भूषितामिव। दर्शनेऽवलोकने सुभगा मनोहराम्। कामाभिभूतस्य चेतनाचेतनसाधारण्य प्रदर्शयन्नाह—तस्मादिति। तस्मान्मुनिकुमारकाधिष्ठिताद्दिगन्तरादागच्छन्तमायान्तमनिलमपि तथा वनकुसुमपरिमलमप्यरण्यपुष्पगन्धमपि, तथा शकुनि-

जाना चाहिये, मुझे क्या करना चाहिये, क्या सुनना चाहिये, क्या देखना चाहिये, कौन सी बात चीत करनी चाहिये, ( अपना रहस्य विश्वासपूर्वक ) किसको बताना चाहिये, और इसका क्या उपाय है—आदि यह सब नहीं जाना। केवल कुमारियों के निवासस्थानों वाले महल पर चढ़कर और सहेलियों को द्वार पर छोड़ कर, सभी सेवकों के प्रवेश का निषेध किये हुई, अपने (सामान्य) कर्त्तव्यों को छोड़कर, अकेली, मणियों की जालीवाली खिड़की से मुँह बाहर निकाले हुई उसी दिशा को ( जहा वह कुमार था उसी ओर ) देखती हुई खड़ी रह गयी जो दिशा उसके सहित होने के कारण मानों भूषित थी, अथव मानो बहुमूल्य मणियों के भण्डार को धारण किये हुई थी, अथवा मानो तरल अमृत (अमृतरस) के महासमुद्र की बाढ़ से युक्त थी, अथवा मानो (पूर्णिमा के) पूर्ण चन्द्र के उदय से सुशोभित थी और (मुझे) देखने में मनोहर प्रतीत होरही थी। उसी प्रदेश से आती हुई वायु से भी, अथवा किसी जगली फूल की सुगन्ध से भी, अथवा किसी

मपि तद्वार्तां प्रष्टुमीहमाना तद्वल्लभतया तपःक्लेशायापि स्पृहयन्ती, तत्प्रीत्येव गृहीतमौनव्रता स्मरजनितपक्षपाता च तत्परिग्रहान्मुनिवेषस्याग्राम्यता तदास्पदतया यौवनस्य चारुता तच्छ्रवणसंपर्कात्पारिजातकुसुमस्य मनोहरतां तन्निवासात्सुरलोकस्य रम्यता तद्रूपसंपदा कुसुमायुधस्य दुर्जयतामध्यारोपयन्ती दूरस्थस्यापि कमलिनीव सवितुः सागरवेलेव चन्द्रमसः मयूरीव जलधरस्य तस्यैवाभिमुखी, तथैव ता तद्विरहातुरजीवितोद्गमरक्षावलीमिवाक्षावलीं कण्ठेनोद्वहन्ती, तथैव च तया प्रस्तुततद्रहस्या-

---

ध्वनिमपि पतत्रिरुतमपि तस्य पुण्डरीकस्य वार्तां प्रवृत्तिं प्रष्टु प्रश्नविषयीकर्तुमीहमाना वाञ्छमाना तस्य मुनेर्वल्लभतया तप क्लेशायापि स्पृहयन्ती वाञ्छन्ती। अपिशब्द प्रतिकूल्यं निराकरोति। तदायत्ततया प्रतिकूलमप्यनुकूलम्, नुकूलमपि न स्वत, किंतु तदायत्तत्वादित्याह—स्मरेणेति। मुनित्वेन ज्ञातेऽपि स्मरेण कदर्पेण जनितो विहित पक्षपातोऽङ्गीकारो यस्यां सा तथा तस्य मुने प्रीत्या स्नेहेन गृहीतमात्तं मौनव्रत यया सा तेन मुनिना परिग्रह स्वीकारस्तस्मान्मुनिवेषस्य तापसनेपथ्यस्याग्राम्यतां साधुताम्। स एवास्पद यस्य तस्य भावस्तत्ता तया यौवनस्य तारुण्यस्य चारुता मनोहरताम्। तस्य मुनेर्यं श्रवणसंपर्क. कर्णसबन्धस्तस्मात्पारिजातकुसुमस्य कल्पतरुपुष्पस्य मनोहरता मञ्जुलताम्। तस्य मुनेर्निवासस्तस्मात्सुरलोकस्य देवलोकस्य रम्यता चारताम्। तस्य मुनेर्या रूपसपत्सौन्दर्यसमृद्धिस्तया कुसुमायुधस्य दुर्जयतां दुर्जेयतामध्यारोपयन्त्यध्यारोपं कुर्वती। दूरस्थस्यापि दविष्ठस्यापि तस्यैव मुनिकुमारस्याभिमुखी सम्मुखी। कस्य केव। सवितु सूर्यस्य कमलिनीव। तथा चन्द्रमस कुमुदबान्धवस्य सागरवेलेव समुद्रस्याम्भसो वृद्धिरिव। तथा जलधरस्य मेघस्य मयूरीव नीलकण्ठपत्नीव। तथैवेति। तथा तेन कुमारेण कण्ठे न्यस्ता तथैव तस्य विरहेण वियोगेनातुर पीडित यज्जीवित प्राणितं तस्योद्गमो निर्गमस्तस्य रक्षावलीमिवाक्षावलीं जपमाला कण्ठेन निगरणेनोद्वहन्ती धारयन्ती। तथैवेति। तथैव पूर्वोक्तप्रकारेण तया कर्णलग्नया श्रवणप्राप्तया प्रस्तुत. प्रारब्धस्तस्या रहस्या-

---

पक्षी की ध्वनि तक से भी उसका समाचार पूछना चाहती हुई, उसका प्रिय होने के कारण तपस्या के दु ख को भी चाहती हुई, उसकी ( मौन व्रत में ) प्रीति के कारण ही मानो मौन व्रत धारण किये हुई, कामदेव द्वारा ( उस कुमार से सम्बद्ध सभी वस्तुओं में ) पक्षपात (प्रबल रुचि) उत्पन्न किये हुई, उस ( कुमार द्वारा ) अंगीकार ( धारण ) किये रहने के कारण तपस्विवेष को अग्राम्य (सभ्य) मानती हुई, उसका निवासस्थान (आस्पद) होने के कारण यौवन में सुन्दरता का अध्यारोप करती हुई, उसके कान के साथ सम्पर्क होने के कारण पारिजात के फूल में सुन्दरता का, उसका निवासस्थान होने के कारण देवलोक में रमणीयता का, और उसके सौन्दर्य सम्पत्ति के कारण ही कामदेव में अजेयता का अध्यारोप करती हुई मैं वहाँ खड़ी रही, सुदूर स्थित भी उसी की ओर ऐसी मुँह किये हुई खड़ी थी जैसे कि कमल पादप सूर्य की ओर मुंह किये रहता है, सागर का ज्वार चन्द्रमा की ओर और मोरनी बादल की ओर मुँह किये रहती है वह अक्ष माला मैंने अपने गले में पहले की भाँति ही पहनी हुई थी, मानो कि वह उसके वियोग में आतुर प्राणों को निकलने से बचानेवाला तावीज ( रक्षावली ) हो, और ( इस पर गुंजार करते मडराते

लापयेव कर्णलग्नया पारिजातमञ्जर्या तथैव च तेन तत्करतलस्पर्शसुखजन्मना कदम्बमुकुलकर्णपूरायमाणेन रोमाञ्चजालेन कण्टकितैककपोलफलका निष्पन्दमतिष्ठम्।

अथ ताम्बूलकरङ्कवाहिनी मदीया तरलिका नाम मयैव सहागता स्नातुमासीत् सा च पश्चाच्चिरादिवागत्य तथावस्थिता शनैःशनैर्मामवादीत्—भर्तृदारिके, यौ तौ तापसकुमारकौ दिव्याकारावस्माभिरच्छोदसरस्तीरे दृष्टौ, तयोरेको येन भर्तृदुहितुरियं कर्णावतसीकृता सुरतरुमञ्जरी स तस्माद् द्वितीयादात्मनो रक्षन्दर्शनमतिनिभृतपदः

---

लापो यथैवंविधयैव पारिजातमञ्जर्या। तथैव च तेन पूर्वोक्तप्रकारेण तस्य यत्करतलस्पर्शं तस्मादुत्सुखं सात तेन जन्मोत्पत्तिर्यस्यैवंभूतेन कदम्बस्य नीपस्य मुकुलं कुड्मलं तस्य कर्णं पूरायमाणेन कर्णपूरवदाचरणमाणेन रोमाञ्चजालेन रोमहर्षणसमूहेन कण्टकितं कण्टकवदाचरितमेकमद्वितीयं कपोलफलकं यस्याः सा तथा निष्पन्दं निश्चलमतिष्ठं स्थितवती।

अथेत्यानन्तर्ये। मदीया तरलिका। नामेति कोमलामन्त्रणे। ताम्बूलकरङ्कवाहिनी मयैव सह स्नातुमाप्लवं कर्तुमागता समायातासीत्। सा चेति। सा ताम्बूलकरङ्कवाहिनी पश्चान्मद्गृहागमनानन्तरं चिरादिव चिरसदृशादिवागत्यैत्य तथावस्थिताम्। विरहातुरामित्यर्थः। मा शनैः शनैर्मन्दमन्दमवादीदवोचत्। किमुवाचेत्याह—भर्तृ इति। हे भर्तृदारिके हे राजपुत्रि। ताविति। एकः पुण्डरीकस्तस्सहानुगतश्च कपिञ्जल इमौ द्वौ तापसकुमारकौ दिव्याकारौ मनोहराकृती अस्माभिरच्छोदसरस्तीरे यौ दृष्टाववलोकितौ, तयोर्मध्य एकः कपिञ्जलं निराकुर्वन्नाह—येनेति। येन कुमारकेण भर्तृदुहितुर्भवत्या इयं सुरतरुमञ्जरी पारिजातवल्लरी कर्णावतसीकृता श्रवणोत्तंसीकृता। स इति। स मुनिः पुण्डरीकस्तस्मात्कपिञ्जलादात्मनः स्वस्य दर्शनं वीक्षणं रक्षन्गोपयन्नतिनिभृतान्यतिनिश्चलानि पदानि यस्यैवंभूतः कुसुमिताः पुष्पिता या लता वल्लयस्तासां संतानं परम्परा तेन गहनं

---

भौरों के कारण ) मानो उसकी गोपनीय बातों को मुझे बताती सी प्रतीत होती पारिजात मञ्जरी को उसी प्रकार कान पर लगाये निश्चेष्ट खड़ी रही, और उसकी हथेली के छूजाने से उत्पन्न हुए, कदम्ब वृक्ष के खिलती कलियों के बन कर्णाभूषण से प्रतीत होते रोमाञ्चों द्वारा उसी प्रकार रोमाञ्चित, एक चौड़े कपोलवाली मैं निश्चेष्ट खड़ी रह गयी।

आगे सुनिये। मेरी पान की पेटी को उठाने वाली तरलिका नाम वाली मेरे साथ ही स्नान करने के लिये आयी थी। और उसने पीछे से ( मेरी दृष्टि में ) मानो बहुत देरमे आकर उस दशामें स्थित मुझको धीरे धीरे कहा—'कुमारी! वे जो दो दिव्याकृति तपस्वी युवक हमने अच्छोद झील के किनारे पर देखे थे, उनमें से एकने, जिसने यह कल्पवृक्ष की मञ्जरी आपके कान की आभूषण बनायी थी, अपने आपको उस दूसरे से अपने देखे जाने से बचाते हुए ने, अत्यन्त निश्चल तथा निःशब्द डगवाले ने ( अर्थात् बड़ी सावधानता से पैर रखते हुए ने ) पुष्पों से युक्त लतापरम्पराद्वारा अगम्य बने मार्ग में से (निकालकर) (मेरे) समीप पहुँचकर आती हुई मुझको पीछे से आपके विषय में पूछा—'बालिके! यह कन्या कौन है? किसकी सन्तान है?

कुसुमितलतासतानगहनान्तरेणोपसृत्य मामागच्छन्ती पृष्ठतो भर्तृदारिकामुद्दिश्याप्राक्षीत्—'बालिके, केयं कन्यका, कस्य वापत्यम्, किमभिधाना, क्व वा गच्छति' इति। मयोक्तम्—'एषा खलु भगवतः श्वेतभानोरंशुसंभूतायामप्सरसि गौर्यां समुत्पन्ना देवस्य सकलगन्धर्वमुकुटमणिशलाकाशिखरोल्लेखमसृणितचरणनखचक्रस्य प्रणयप्रसुप्तगन्धर्वकामिनीकपोलपत्रलतालाञ्छितभुजतरुशिखरस्य पादपीठीकृतलक्ष्मीकरकमलस्य गन्धर्वाधिपतेर्हंसस्य दुहिता महाश्वेता नाम गन्धर्वाधिवास हेमकूटाचलमभिप्रस्थिता' इति। कथिते च मया किमपि चिन्तयन्मुहूर्तमिव तूष्णीं स्थित्वा विगतनिमेषेण चक्षुषा चिर-

निबिड यदन्तर विचाल तेन मामागच्छन्ती पृष्ठत पश्चाद्भाग उपसृत्य समीपमागत्य भर्तृदारिकामुद्दिश्याश्रित्येत्यप्राक्षीत्प्रश्नमकार्षीत्। कि प्रश्न कृतवानित्याह—बालिके इति। हे बालिके हे कन्यके, केय कन्यका, कस्य वापत्य प्रजा। किमभिधाना किंनाम्नी। क्व वा गच्छति व्रजति। त्वया किमुक्तमित्याह—मयेति। मयेत्युक्त कथितम्। इतिवक्तव्यतामाह—एषेति। एषा खलु निश्चयेन भगवत श्वेतभानोर्गन्धर्वाधिपतेरंशुसभूताया सोममयूखसभूतायामप्सरसि गौर्यां समुत्पन्ना सजाता गन्धर्वाधिपतेर्हंसस्य दुहितात्मजा। अथ हस विशिनष्टि—सकलेति। सकला समग्रा ये गन्धर्वा देवगायनास्तेषा मुकुटेषु मणिदृढबन्धार्थं शलाका स्वर्णमय्यस्तासा शिखराण्यग्राणि तेभ्यो य उल्लेख सघर्षस्तेन मसृणितं श्लक्ष्णीकृत चरणयोर्नखचक्र पुनर्भवसमूहो यस्य स तथा तस्य। प्रणयेति। प्रणयेन स्नेहेन प्रसुप्ता कृतनिद्रा या गन्धर्वकामिन्यस्तासा कपोलपत्रलताभिर्लाञ्छित चिह्नित भुजा एव तरवो वृक्षास्तेषा शिखरमग्र यस्य स तथा तस्य। अनेन सुरतविशेषो द्योतित। पादेति। पादपीठीकृत पदासनीकृत लक्ष्म्या श्रिय करकमल यस्य स तथा तस्य। एतेन दानशौण्डत्व सूचितम्। तस्या यथार्थमभिधानमाह—नामेति कोमलामन्त्रणे। महाश्वेता इति। साम्प्रत क्व गतेति तदाशयमभिप्रेत्याह—गन्धर्वेति। गन्धर्वाणामधिवासो यस्मिन्नेवभूत हेमकूटाचलमभिप्रस्थिता। तदभिमुख चलितेत्यर्थ। इति मया कथित उक्ते सति किमप्यनाकलनीय चिन्तयन्ध्यायन्मुहूर्तमिव घटिकाद्वयसदृशमिव। अत्रापीवशब्द सदृशार्थं। तूष्णीं जोष स्थित्वा विगतनिमेषेण मेषोन्मेषरहितेन चक्षुषा नेत्रेण चिर चिरकाल यावदभिसमुख वीक्षमाणो मा प्रति सानुनय सस्नेहमर्थितामिव

किस नामवाली है? और कहा जाती है?' मैंने कहा—"निश्चय ही यह भगवान् चन्द्रमा की किरणों से उत्पन्न हुई अप्सरा गौरी में समुत्पन्न गन्धर्वराज महाराज हस की पुत्री है, उस गन्धर्वराज की पुत्री है जो कि सारे (अधीनस्थ) गन्धर्वों के मुकुटों की मणियों के अशों की नोकों द्वारा खरोंचे जाने से चिकने हुए चरण नख-मण्डल वाला है, प्रेमपूर्वक ( सटकर ) सोई हुई गन्धर्वस्त्रियों के गलों पर बनी हुई पत्राकृतियों से चिह्नित ( शोभित ) वृक्ष-सदृश ( मजबूत ) भुजाओ के शिखर प्रदेशवाला है, और जिसने लक्ष्मी के कमल सदृश हाथ को अपना पीढा बनाया हुआ है, उस गन्धर्वराज की पुत्री महाश्वेता गन्धर्वों के निवासस्थान हेमकूट पर्वत की ओर चली है।"—'और जब मैंने यह बात कह दी तो कुछ देर तक चुप रहकर, कुछ सोचते हुए से ने, अपलक दृष्टि से मुझ को देर तक घूरते हुए ने, शिष्टतापूर्वक कृपाकाङ्क्षिता-सी दिखाते हुए ने

मभिवीक्षमाणो मां सानुनयमर्थितामिव दर्शयन्पुनराह—'बालिके कल्याणिनि तवाविसंवादिन्यचपला बालभावेऽप्याकृतिरियम्। तत्करोषि मे वचनमेकमभ्यर्थ्यमाना' इति। ततो मया सविनयमुपरचिताञ्जलिपुटया दर्शितादरमभिहितः—'भगवन्, कस्मादेवमभिधत्से। काहम्। महात्मानः सकलत्रिभुवनपूजनीयास्त्वादृशाः पुण्यैर्विना निखिलकल्मषापहारिणीमस्मद्विधेषु दृष्टिमपि न पातयन्ति, किं पुनराज्ञाम्। तद्विश्रब्धमादिश्यतां कर्तव्यम्। अनुगृह्यतामयं जनः' इति। एवमुक्तश्च मया सस्नेहया सखीमिवोपकारिणीमिव प्राणप्रदामिव दृष्ट्या मामभिनन्द्य निकटवर्तिनस्तमालपादपात्पल्लव-

---

मार्गणसदृशमिव दर्शयन्पुनर्द्वितीयवारमित्याह। उवाचेत्यर्थः। इतिवाच्यमाह—बालिके इति। हे बालिके, कल्याणिनी कल्याणं श्रेयो विद्यते यस्या यस्यां वा सैवभूताविसंवादिन्यव्यभिचारिणी। 'यत्राकृतिस्तत्र गुणा भवन्ति' इत्युक्ते। बालभावेऽपि बालस्वभावेऽप्यचपला स्थिरा तवेयमाकृतिराकारः। तदिति हेत्वर्थे। अभ्यर्थ्यमाना प्रार्थ्यमानैकं मे मम वचनं करोषि प्रणयसि। ततः इति। ततोऽनन्तरं सविनयं सप्रश्रयमुपरचितं बद्धमञ्जलिपुटं ययैवभूतया मया दर्शितादरं यथा स्यात्तथेत्यभिहित उक्तः। इतिशब्दवाच्यमाह—भगवन्निति। हे भगवन् हे स्वामिन्, तस्मात्केन हेतुनैव पूर्वोक्तप्रकारेणाभिधत्से कथयसि। काहं बालव्यजनधारिणी। सकलत्रिभुवनपूजनीया समग्रविश्वार्चनीया महात्मानस्त्वादृशा भवादृशा क्व। पुण्यैर्विना धर्मव्यतिरेकेणास्मद्विधेष्वस्मादृशेषु निखिलकल्मषापहारिणीं दृष्टिं न पातयन्ति चक्षुषा नावलोकयन्ति। किं पुनराज्ञामादेशप्रदानम्। दूरापास्तमिति भाव। तत्तस्माद्धेतोर्विश्रब्धं सविश्वासं कर्तव्यं कृत्यमादिश्यतामादेशं दीयताम्। अथ चायं मल्लक्षणो जनोऽनुगृह्यतामनुग्रहविषयीक्रियताम्। एवं पूर्वोक्तप्रकारेण सस्नेहया सप्रेम्णा मयोक्तश्च स मुनिः सखीमिव वयस्यामिवोपकारिणीमिवोपकृतिकर्त्रीमिव प्राणप्रदामिव जीवितदात्रीमिव मां दृशा चक्षुषाभिनन्द्य प्रमोदं जनयित्वैव निकटवर्तिनः समीपस्थात्तमालपादपात्तापिच्छवृक्षात्पल्लवं किसलयमादाय गृहीत्वा तटशि-

---

मुझसे फिर कहा—'बालिके! तेरी यह कल्याणदायिनी आकृति झूठी न ठहरने वाली है तथा बचपन मे भी चञ्चल नहीं प्रतीत हो रही है, तो फिर मुझसे प्रार्थना की गयी तू (यदि मैं तुझसे प्रार्थना करूँ तो) क्या मेरा एक कहा मानेगी?"—इसके पश्चात् विनय पूर्वक हाथ जोड़े हुई मैंने आदर दिखाते हुए (सादर) कहा—"भगवन्! आप ऐसा क्यों कहते हैं, मैं भला क्या हूँ? (मैं तो एक तुच्छ व्यक्ति हूँ) आप सरीखे तीनों लोकों में पूजनीय महापुरुष तो, हमारे सरीखों पर, (हमारे) पुण्यों के विना, सब पापों को दूर करने वाली अपनी दृष्टि को भी नहीं डालते हैं—(हमारे जैसों को देखते तक नहीं हैं) आज्ञा देने का तो कहना ही क्या है। इसलिये आप निश्चिन्त होकर कर्त्तव्य की आज्ञा दीजिये। इस व्यक्ति पर कृपा कीजिये।" इस प्रकार मेरे द्वारा कहे गये उस मुनिकुमार ने स्नेहयुक्त दृष्टि से मेरा ऐसे अभिनन्दन किया कि मानो मैं उसकी मित्र थी, अथवा उसका मैंने कोई उपकार किया हो, अथवा उसको जीवन प्रदान किया हो। अभिनन्दन करने के पश्चात् उसने समीपवर्ती किसी तमाल वृक्ष से पत्ता लेकर उसको तटवर्ती शिला के तल पर छेदकर (इस

मादाय निष्पीड्य तटशिलातले तेन गन्धगजमदसुरभिपरिमलेन रसेनोत्तरीयवल्कलैक-देशाद्विपाट्य पट्टिका स्वहस्तकमलकनिष्ठिकानखशिखरेणाभिलिख्येयं पत्रिका 'त्वया तस्यै कन्यकायै प्रच्छन्नमेकाकिन्यै देया' इत्यभिधायार्पितवान् इत्युक्त्वा च सा ताम्बूलभाजनादाकृष्य तामदर्शयत्। अहं तु तेन तत्सम्बन्धिनालापेन शब्दमयेनापि स्पर्शसुखमिवान्तर्जनयता श्रोत्रविषयेणापि रोमोद्गमानुमितसर्वाङ्गानुप्रवेशेन मदनावेशमन्त्रेणेवावेश्यमाना तस्याः करतलादादाय तां वल्कलपत्रिकां तस्यामिमामभिलिखितामार्यामपश्यम्—

---

लातले तीरप्रस्तरे निष्पीड्य समर्थं तेन निष्पीडनोद्भूतेन गन्धगजा गन्धेभास्तेषां मदो दानं तद्वत्सुरभिः सुगन्धः परिमलो यस्यैवंविधेन रसेनोत्तरीयं यद्वल्कलं तस्यैकदेशादेकप्रदेशात्पट्टिकां प्रसिद्धां विपाट्य द्वैधीकृत्य स्वकीय आत्मीयो यो हस्तः पाणिः स एव कमलं नलिनं तस्य कनिष्ठिका कनीनिका तस्य नखशिखरेण नखराग्रेणेयं पत्रिकाभिलिख्य लिपीकृत्येत्यभिधायेत्युक्त्वार्पितवान्दत्तवान्। इतिशब्दाभिधेयमाह— त्वयेति। त्वया भवत्या तस्यै कन्यकायै महाश्वेतायै एकाकिन्यै अद्वितीयायै प्रच्छन्नं गुप्तं देयार्पणीया। अथ सा च ताम्बूलकरङ्कवाहिनी तरलिका ताम्बूलभाजनात् तां पत्रिकामाकृष्य निष्कास्यादर्शयत् दर्शितवती। अहं त्विति। तु पुनरर्थे। अहमित्यात्मनिर्देशः। तस्यास्तरलिकायाः करतलाद्धस्ततलात्तां वल्कलपत्रिकामादाय गृहीत्वा तस्यामिमामभिलिखितामार्यामपश्यमद्राक्षमित्यन्वयः। कीदृश्यहम्। आवेश्यमानावेशविषयीक्रियमाणा। केन। तस्य पुण्डरीकस्य सम्बन्धिना सम्बद्धेनालापेन संलापेन। किं कुर्वता। शब्दमयेन शब्दात्मकेनापि स्पर्शसुखमिव सश्लेषसातसदृशमिवान्तर्मध्ये जनयता उत्पादयता। अत्रापिशब्दो विरोधद्योतनार्थः। श्रोत्रविषयेणापि कर्णगोचरेणापि रोमोद्गमेन पुलकेनानुमितोऽनुमितिविषयीकृतः सर्वाङ्गेष्वनुप्रवेशो यस्य स तेन। अत्रापिशब्दः पूर्ववत्। वैक्लव्यसादृश्यादाह— मदनावेशमन्त्रेणेव मदनस्य कन्दर्पस्यावेशः प्रवेशस्तदुत्पादकमन्त्रेणेव। अथ तामार्यामाह—

---

प्रकार निकले) उस गन्धहस्ती के मद की सुगन्ध के सदृश (मधुर) गन्ध वाले रस द्वारा उत्तरीय के रूप में पहने हुए वल्कल (छाल) के एक भाग में से एक पट्टी फाड़ कर (उसका) अपने कमल सदृश हाथ की कनिष्ठिका अंगुली के नखाग्र से लिखकर 'यह पत्रिका तू उस कन्या को छिपे छिपे अकेली को (जब वह अकेली हो तब) देना'—यह कहकर मुझे दे दी। और यह कहकर उसने वह पत्रिका पानपात्र में से खींचकर दिखा दी। किन्तु मैंने उसे मुनिकुमार विषयक वार्तालाप से जो शब्दमय होते हुए भी हृदय के भीतर मानो स्पर्शसुख के सदृश सुख उत्पन्न कर रहा था, कान का विषय होते हुए भी जिसका मेरे सब अंगों में अनुप्रवेश (प्रभाव) (मेरे शरीर पर) प्रकट हुए रोमाच से अनुमित हो रहा था, उस आलाप के द्वारा मानो कामोन्माद के प्रवर्तक मंत्र से प्रभावित होती हुई मैंने उस वल्कल पत्रिका को उस (ताम्बूलवाहिनी) की हथेली पर से लेकर उस (पत्रिका) पर लिखा हुआ निम्न आर्याछन्द देखा—

दूर मुक्तालतया बिससितया विप्रलोभ्यमानो मे ।
हंस इव दर्शिताशो मानसजन्मा त्वया नीतः ॥

अनया च मे दृष्ट्या दिङ्मोहभ्रान्त्येव प्रणष्टवर्त्मनः, बहुलनिशयेवान्धस्य, जिह्वोच्छित्त्येव मूकस्य, इन्द्रजालिकपिच्छिकयेवातत्त्वदर्शिनः, ज्वरप्रलापप्रवृत्त्येवासबद्धभाषिणः, दुष्टनिद्रयेव विपविह्वलस्य, लोकायतिकविद्ययेवाधर्मरुचेः, मदिरयेवोन्मत्तस्य, दुष्टावे-

दूरेति । मानसे मनसि जन्म यस्यैवभूतो मनोरथोऽभिलाषो मुक्तालतयैकावल्ल्या विप्रलोभ्यमानो लोभ प्राप्यमाणो दर्शिताशा फलप्राप्तिर्यस्यैवभूतस्त्वया नीतः तदैव समीपे तिष्ठति । त्वामेव विषयीकरोतीति भाव । मानसजन्मत्वसाम्याद्गुत्प्रेक्षते—हंस इवेति । यथा मानसजन्मा हंसो मुक्तावन्निर्मला या लता प्रतत्यस्ताभि प्रकर्षेण लोभ्यमानो दर्शिताशागमनार्थे दिग्यस्यैवभूतोऽन्यत्र नीयते । अथ लता विशेषयन्नाह—बिसेति । बिस मृणाल तद्वच्छुभ्रया धवलयेत्युभयोर्विशेषणम् । अनयेति । अनया पत्रिकया मे मम दृष्ट्या विलोकितया सत्या स्मरातुरस्य मदनातुरस्य मे मम मनसो दोषविकारस्योपचय पुष्टि सुतरामत्यर्थम- क्रियत व्यधीयतेत्यन्वयः । अत्रार्थ उपमानान्तराणि प्रदर्शयन्नाह—दिगिति । दिङ्मोह भ्रान्त्या करणभूतया प्रणष्टवर्त्मन उत्पथगामिन इव । बहुलेति । बहुलनिशया कृष्णपक्षरात्र्यान्धस्येव गताक्षस्यैव । जिह्वेति । जिह्वोच्छित्त्या रसनाकर्तनया मूकस्येव । इन्द्रेति । इन्द्रजालिकस्य मायिकस्य या पिच्छिका यया लोकाना दृग्बन्ध क्रियते, तया अतत्त्वदर्शिन इव यथाजातस्येव । ज्वरेण तापेन य प्रलापस्तद्भाषण तस्य प्रवृत्ति प्रवर्तन तस्यासबद्धभाषिण इव कद्वदस्येव । दुष्टेति । दुष्टनिद्रयानुचितप्रमीलया विषविह्वलस्येव विषार्तस्येव । निद्राया दुष्टत्व च दोषजनकत्वादिति भाव । लोकेति । लोकायतिका नास्तिकास्तेषा विद्यया शास्त्रेणा-

"मृणालतन्तु की भाँति श्वेत मोतियों के हार द्वारा लुभाया जाता हुआ मेरा मानस जन्मा प्रणयावेग, ( सयोग की ) आशा दिखाया जाता हुआ, तूने ऐसे दूर भगा लिया है—जैसे कि मानस सर मे उत्पन्न हस, कमलतन्तु सरीखी श्वेत मणिलता द्वारा लुभाया गया ( जाने की ) दिशा दिखाया जाता हुआ ( अथवा भोजन की आशा से युक्त ) दूर ले जाया जाता है।"

और देखी हुई ( पढी हुई ) इस आर्या ने कामप्रपीडित मेरे मन के रोग के दुष्परिणामों को ऐसे बढा दिया जैसे कि मार्ग भूले हुए ( भटके हुए ) का दोष दिशाओं के ज्ञान के अभाव से हुई अनिश्चितता से बढ जाता है अथवा अन्धे के मन के दोष कृष्णपक्ष की रात्रि से बढ़ जाते हैं, अथवा, गूगे का दुख जीभ के कटने से बढ़ जाता है, अथवा ( स्वभावत ) अतत्त्वदर्शी-वस्तुओं को उनके वास्तविकरूप मे न देखने वाले का दुख इन्द्रजालिक के मयूर के पखों के गट्ठे ( को दृष्टिबन्धार्थ हिलाने ) से बढ जाता है, अथवा सामान्यत. असम्बद्ध बातें करने वाले का दुख बुखार के समय की बकवास की भड़ाँस से बढ़ जाता है, अथवा, विष से दुखी का ( दोष ) क्षुब्ध मनोभावों से लायी गयी—दुष्ट निद्रा से बढ़ जाता है, अथवा ( पहले ही ) धर्म मे रुचि न रखने वाले का ( दोष ) नास्तिक के

शक्रियमेव पिशाचग्रहस्य, दोषविकारोपचयः सुतरामक्रियत स्मरातुरस्य मे मनसः, येनाकुलीक्रियमाणा सरिदिव पूरेण विह्वलतामभ्यगमम्। ता च द्वितीयदर्शनेन कृतमहापुण्यामिवानुभूतसुरलोकवासामिव देवताधिष्ठितामिव लब्धवरामिव पीतामृतामिव समासादितत्रैलोक्यराज्याभिषेकामिव मन्यमाना, सततसन्निहितामपि, दुर्लभदर्शनामिवातिपरिचितामप्यपूर्वामिव सादरमाभाषमाणा पार्श्वावस्थितामपि सर्वलोकस्योपर्येव-

धर्मरुचेरिव पापस्येव। मदिरेति। मदिरया गन्धोत्तमयोन्मत्तस्येव क्षीबस्येव। दुष्टेति। दुष्टो य आवेशोऽभिनिवेशस्तस्य क्रिया कर्म तया पिशाचग्रहस्येव ग्रथिलस्येव। येनेति। येन दोषोपचयेन आकुलीक्रियमाणा पूरेण जलवृद्ध्या सरिदिव तटिनीवाहं विह्वलता व्याकुलतामभ्यगमम-प्रापम्। ता चेति। ता तरलिका पुन पुनर्भूयोभूयोऽहमिति पर्यपृच्छमित्यप्राक्षमिति दूरेणान्वय। इतिशब्दद्योत्यमाह—तरलिकेति। हे तरलिके, कथय निवेदय। स पुण्डरीक कथ केन प्रकारेण त्वया दृष्टोऽवलोकित। किमभिहितासि कथितासि तेन पुण्डरीकेण। कियन्त कालमवस्थितासि विलम्बितासि। तत्र तस्मिन्वने अस्माननुसरन्पृष्ठेऽनुव्रजन्कियत्पन्थानमसौ पुण्डरीक आगत। कीदृश्यहम्। द्वितीयवार मुनेर्दर्शनेनावलोकनेन कृत महत्पुण्य ययैतादृशीमिव। 'आन्महत समानाधिकरणजातीययो' इति महच्छब्दस्यात्वम्। अनुभूत इति। अनुभूतोऽनुभवविषयीकृत सुरलोकवास स्वर्गे निवासो यया तादृशीमिव। देवतयाधिष्ठिताश्रिता तादृशीमिव। लब्धेति। लब्धो वरो देवप्रसादो ययैतादृशीमिव। पीतमिति। पीतमास्वादितममृत पीयूष ययैवभूतामिव। समेति। समासादित प्राप्तत्रैलोक्यस्य राज्यमाधिपत्य तस्याभिषेकोऽभिषिञ्चन ययैवविधामिव ता मन्यमाना चेतसि ज्ञायमाना। पुनरह किं कुर्वाणा। सततमिति। सतत निरन्तर सन्निहितामपि पार्श्ववर्तिनीमपि दुर्लभ दु प्राप दर्शनमवलोकन यस्या एवंविधामिवातिपरिचितामप्यतिसस्तवगोचरीकृतामप्यपूर्वामिवाभिनवामिव सादरमाभाषमाणा जल्पमाना। पुन किं कुर्वन्त्यहम्। पार्श्वे समीपेऽवस्थितामप्यासीनामपि सर्वलोकस्य

सिद्धान्तों के ज्ञान से बढ़ जाता है, अथवा, पागल का पागलपन शराब से बढ़ जाता है अथवा (पहले ही) भूताविष्ट का (दोष) दुष्ट (प्रभाव) को डालने की क्रिया से बढ जाता है।[1] और उस (मानसिक दुख) की वृद्धि से दु:खी की गयी मै ऐसी क्षुब्ध हो गयी जैसे कि बाढ से नदी क्षुब्ध हो जाती है। और मैंने उस (तरलिका) को दूसरी बार (पुण्डरीक के) दर्शन कर लेने के कारण (भविष्य के लिए) पुण्यों का भारी भण्डार सचित किये हुई सी, अथवा देवलोक मे निवास करने के सुख का अनुभव किये हुई-सरीखी, अथवा देवता से अधिष्ठिता सरीखी, वर प्राप्त किये हुई सरीखी, अमृत पिये हुई-सरीखी, तीनों लोकों का राज्याभिषेक प्राप्त किये हुई सरीखी मानती हुई मैंने, निरन्तर समीप स्थित भी उसको दुर्लभ दर्शन वाली समझती हुई ने, अत्यन्त परिचिता को भी अपूर्वा—पूर्वापरिचिता-सी मानती हुई ने, उसके साथ बड़े आदर से बातचीत करती हुई ने (वस्तुत) मेरे बराबर मे स्थित भी उसको सारे ससार के ऊपर ऊँचाई पर स्थित देखती ने, उसको गालो पर तथा लम्बे घुघराले बालों को

१ जन्मनक्षत्र में पापग्रहों के प्रवेश से भूताविष्ट का दोष बढ़ जाता है।

स्थितामिव पश्यन्ती, कपोलयोरलकलताभङ्गेषु च सोपग्रहं स्पृशन्ती, विपरीतमिव परिजनस्वामिसबन्धमुपदर्शयन्ती, 'तरलिके, कथय कथ स त्वया दृष्टः, किमभिहितासि तेन, कियन्त कालमवस्थितासि तत्र, कियदनुसरन्नस्मानसावागतः' इति पुनः पुनः पर्यपृच्छम्। अनयैव च कथया तया सह तस्मिन्नेव प्रासादे तथैव प्रतिषिद्धाशेषपरिजनप्रवेशा दिवसमत्यवाहयम्।

अथ मदीयेनेव हृदयेन कृतरागसविभागे लोहितायति गगनतलावलम्बिनि रविबिम्बे, सरागदिवसकरदर्शनानुरक्ताया कृतकमलशयनायामनङ्गातुरायामिव पाण्डुता

---

समप्रविम्बस्योपर्यवस्थितामिव पश्यन्त्यवलोकयन्ती। कपोलयोर्गल्लात्परप्रदेशयोरलकलताभङ्गेषु सोपग्रहं सानुकूल यथा स्यात्तथा स्पृशन्ती स्पर्शं कुर्वन्ती। विपरीतमिति। मत्समीहितकरणात्व तु स्वामिनी, अहं तु तव परिजन, इति विपरीत संबन्ध। तमिवोपदर्शयन्ती बहिर्वृत्त्या प्रकाशयन्ती। अन्वयस्तु प्रागेवोक्त। अनयैवेति। अनयैव पूर्वोक्तयैव कथया वार्तया तया सह तरलिकया सम तस्मिन्नेव प्रासादे सौधे प्रतिषिद्धो निवारितोऽशेषपरिजनस्य प्रवेश आगमन ययैवभूता दिवस दिनमत्यवाहयमत्यक्रामम्।

अथेत्यानन्तर्ये। सा छत्रग्राहिण्यागत्याकथयदित्यग्रिमग्रन्थसबन्ध। तत्र 'मदीय—' इत्यारभ्य 'युगलेषु' इति पर्यन्त सत्यन्तै सायसमयवर्णनमाह—मदीयेति। मदीयेनेव हृदयेन कृतो रागस्य संविभागो यस्यैवभूते लोहितायति लोहितवदाचरति गगनतलं व्योमतल तत्रावलम्बिनि लम्बायमाने रविबिम्बे सूर्यबिम्बे सति। पुन कस्याम्। आतपलक्ष्म्याम्। किंविशिष्टायाम्। सरागेति। राग आरुण्य रतिश्च तेन सह वर्तमानो यो दिवसकर सूर्यस्तस्य दर्शनेनावलोकनेन तस्मिन्वानुरक्ता तस्यामत एव कृत कमलाना शयन कमलेषु शयन वा यया सा तस्याम्। आरुण्यवशादाह—अनङ्गेति। अनङ्गेन कंदर्पेणातुरामिव पीडितामिव पाण्डुतां श्वेततां व्रजन्त्यामिव। पुन केषु भास्करकिरणेषु रविभानुषु सत्सु। तानेव विशेषयन्नाह—गैरिको धातुमयो

---

उत्साह से (अथवा प्यार से) (सोपग्रहम्[1]) छूती हुई ने, आपसी सेविका-स्वामिनी सबध को (उस समय) इससे उल्टा दिखाती हुई ने, बार बार पूछा—'तरलिके! बता, तूने उसको कैसे देखा? उसने तुझसे क्या-कुछ कहा? वहाँ तू कितनी देर तक रही? हमारे पीछे-पीछे चलता हुआ वह कितनी दूर तक आया?—इत्यादि। और इसी (इसी प्रकार की) बातचीत में, उसके साथ, उसी महल मे, वैसे ही (पहले की भाति) सभी सेवकों के प्रवेश का निषेध किये हुई मैंने सारा दिन बिता दिया।

इसके पश्चात् मानो मेरे हृदय के साथ राग अर्थात् लाल रग और प्रेमोन्माद का बँटवारा किये हुए मानो इसी कारण लाल पड़ते हुए सूर्य बिम्ब के द्वारा क्षितिज का अवलम्बन कर लेने पर (अर्थात् उस समय जब सूर्य अस्त होने लगा) जब धूप की शोभा राग (लाल रग) सहित सूर्य के दर्शन से प्रेमोन्मत्त अथवा लाल होकर कमल पर शयन करने लगी और कामप्रपीडिता की भाँति अधिकाधिक पीली पड़ने लगी, जब सूर्य की किरणें, गेरु पर्वत के जल के

---

१. उपग्रहः=अनुकूलाचरणम।

जीवितमप्यर्पयित्वा न पश्चात्तप्यते। प्रणयिजनप्रत्याख्यानपराङ्मुखी च दाक्षिण्यपरवती महत्ता सताम्। न च तादृशी भवति याचमानाना यादृशी ददता लज्जा। यत्तु सत्यममुना व्यतिकरेण कृतापराधमिव त्वय्यात्मानमवगच्छति कादम्बरी। तदयममृतमथनसमुद्भूताना सर्वरत्नानामेकशेष इति शेषनामा हारोऽमुनैव हेतुना बहुमतो भगवताम्भसांपत्या गृहमुपागताय प्रचेतसे दत्तः। पाशभृतापि गन्धर्वराजाय। गन्धर्वराजेनापि कादम्बर्यै। तयापि त्वद्वपुरस्यानुरूपमाभरणस्येति विभावयन्त्या नभःस्थलमेवोचित

---

तारिता न स्यात्। जीवितमप्यर्पयित्वा न पश्चात्तप्यते न पश्चात्तापं करोति। य सतां सत्पुरुषाणां महत्ता गुरुताप्रणयो विद्यते यस्मिन्नेवभूतो यो जनस्तस्य प्रत्याख्यान निराकरणं तत्र पराङ्मुखी प्रणयिजनाभीष्टप्रदाननिराकरणशीला न भवतीत्यर्थ। तत्र हेतुमाह—दाक्षिण्येति। दाक्षिण्यमनुकूलता तस्या परवती। तदधीनेत्यर्थ। दाक्षिण्यं लज्जाधीन स्यादित्यत आह—नचेति। ददतां वितरण कुर्वतां यादृशी लज्जा त्रपा स्यात्तादृशी याचमानाना नीचाना च न स्यात्। यत्त्विति। तु पुनरर्थे। यत्पूर्वोक्त तत्सत्यम्। ततः किमित्यत आह—अमुनेति। अमुना व्यतिकरेण त्वदागमनसबन्धेन त्वयि कृतापराध विहितागसमिवात्मान कादम्बर्यवगच्छति जानाति। तदयममृतमथनात्समुद्भूतानां प्रकटितानां सर्वरत्नानामेकशेषोऽवशिष्टोऽत शेषनामाय हारोऽमुनैव हेतुनैकशेषत्वेनाम्भसांपत्या भगवता समुद्रेण बहुमतो गृहमुपागताय प्राप्ताय प्रचेतसे वरुणाय दत्तोऽर्पित। पाशभृतापि वरुणेनापि गन्धर्वराजाय दत्त। गन्धर्वराजेनापि कादम्बर्यै दत्त। तयाप्यस्याभरणस्य त्वद्वपुस्त्वदीय शरीरमनुरूप योग्यमिति विभावयन्त्या मनसि विभावना कुर्वन्त्या। एतस्मिन्नर्थे दृष्टान्त प्रदर्शयन्नाह—नभ इति। सुधास्रुत इचन्द्रस्य धाम्नस्तेजसो नभस्थलमेवोचितं योग्य न धरा पृथ्वीत्यवधार्य निश्चित्यानुप्रेषितोऽ-

---

की दासता को स्वीकार कर लेने वाली कन्या को "अनुचित काम करने वाली हो गयी" यह नहीं कहा जाता है। अपने आपको तुम्हें समर्पित करके भी वह ठगी नहीं जाती है। अपना जीवन तक भी समर्पित करके वह पश्चात्ताप नहीं करती। और सज्जनों का बड़प्पन ऐसा होता है कि अपने प्रेमियों का वह प्रतिषेध करने से विमुख होता है (प्रेमियों द्वारा की गयी किसी प्रार्थना को सज्जन अपने महत्त्व के कारण कभी अस्वीकार नहीं करते हैं) एव उनका महत्त्व नम्रता (अथवा शालीनता) के वशीभूत (नम्रता से भरपूर) होता है। और फिर मागने वालों को वैसी लज्जा नहीं आती जैसी कि देने वालों को आती है (क्योंकि देने वाला सोचता है कि उचित दिया गया है या नहीं)। सच बात तो यह है कि कादम्बरी इस (उपहार-प्रेषण के) मामले द्वारा अपने को मानो तुम्हारे प्रति अपराध की हुई सी समझती है। तो यह अमृत-विलोडन से उत्पन्न हुए सब रत्नों में एकमात्र बच गया था—इस कारण 'शेष' नाम का हार भगवान् महासमुद्र द्वारा इसी कारण अत्यधिक आदृत था, और (एक बार) घर पर पधारे वरुणदेवता को महासमुद्र ने दे दिया था। पाशधारी वरुण ने गन्धर्वराज को दिया, गन्धर्वराज ने कादम्बरी को और उसने भी यह समझते हुए कि तुम्हारा शरीर इस आभूषण के अनुकूल है, क्योंकि चन्द्रमा का उचित घर आकाश ही है, पृथ्वी नहीं—यह सोचकर भेजा

सुधास्रुतो धाम्नो न धरेत्यवधार्यानुप्रेषितः। यद्यपि गुणगणाभरणभूषिताङ्गयष्टयो भवादृशाः क्लेशहेतुमितरजनबहुमतमाभरणभारमङ्गेषु नारोपयन्ति, तथापि कादम्बरीप्रीतिरत्र कारणम्। किं न कृतमुरसि शिलाशकल कौस्तुभाभिधान लक्ष्म्याः सहजमिति बहुमानमाविष्कुर्वता भगवता शार्ङ्गपाणिना। न च नारायणोऽत्रभवन्तमतिरिच्यते। नापि कौस्तुभमणिरणुनापि गुणलवेन शेषमतिशेते। न चापि कादम्बरीमाकारानुकृतिकलयाप्यल्पीयस्या लक्ष्मीरनुगन्तुमलम्। अतोऽर्हतीयमिम बहुमान त्वत्तः। न चाभूमिरेषा प्रीतिप्रसरस्य। नियत च भवता लग्नप्रणया महाश्वेतोपालम्भसहस्रैः खेदयित्वा

---

नुप्रहित। यद्यपीति। यद्यपि भवादृशा भवत्सदृशा पुरुषा गुणा शौर्यादयस्तेषां गणा समुदायास्त एवाभरणानि तैर्भूषिता शोभिताङ्गयष्टिर्येषा ते तथा क्लेशहेतु परिश्रमकारणमितरजना प्राकृतजनास्तैर्बहुमतमादरपूर्वक स्वीकृतमाभरणभार विभूषणवीवधमङ्गेषु हस्तपादादिषु नारोपयन्ति न स्थापयन्ति। तथापीति। यद्यप्येवमस्ति तथापि कादम्बरीप्रीतिरत्र हारधारणे कारण नियामकम्। प्रीत्यान्यैरपि तथा कृतमित्याह—किं न कृतमिति। लक्ष्म्या श्रिय सहजं सार्धं समुत्पन्नमिति कृत्वा बहुमान सत्कारमाविष्कुर्वता प्रकटीकुर्वता भगवता शार्ङ्गपाणिना कौस्तुभाभिधान शिलाशकलमुरसि कि न कृत किं न विहितम्। न च नारायणस्तथा करोतु नाम। अहं तु तादृशो न भवामीत्यत आह—न चेति। नारायण कृष्णोऽत्रभवन्त त्वा न चातिरिच्यते नाधिको भवति। तथा च स्वानुरक्तप्रीतिसरक्षणस्वभावसाम्येन त्वमपि स एवेत्यर्थः। न च हारोऽपि कौस्तुभापेक्षया न्यून इत्याह—नापीति। कौस्तुभमणिरणुनापि गुणलवेन शेष शेषनामान हार नाप्यतिशेतेऽतिशयितो न भवति। एव लक्ष्मीसादृश्य कादम्बर्यामानयति—न चेति। लक्ष्मी पद्माकारस्यानुकृतिरनुकरण तस्य कलाशमत्याप्यल्पीयस्यापि कादम्बरीमनुगन्तु सादृश्य कर्तुं नाल न समर्था। अतो हेतोरिय त्वत्तो भवत इय बहुमानमर्हति योग्या भवति। नचेय प्रीतिर्न भवतीत्याह—न च प्रीतिप्रसरस्य प्रीत्युत्कर्षस्यैषाभूमिरस्थानम्, अपि तु स्थानमेव। वैपरीत्ये बाधकमाह—नियतेति। नियत निश्चित भवता त्वया लग्न प्रणय स्नेहो

---

है। यद्यपि आप सरीखे जन (स्वभावत ही) अपने गुणोंरूपी अलकारों से ही अलकृत शरीर वाले हैं—वे कष्टों के स्रोत (केवल) सामान्यजनों (इतरजन) द्वारा ही आदृत (सामान्य) आभूषणों के भार को अपने अगों पर नहीं लादते हैं, तो भी कादम्बरी की तुम्हारे प्रति जो प्रीति है वह इसमें कारण है। (उस प्रीति के कारण इस अलकार को तुम्हें पहन लेना चाहिये)। क्या भगवान् विष्णु ने यह लक्ष्मी के साथ उत्पन्न हुआ है—इसी कारण उसके प्रति बहुत सा आदर प्रकट करते हुए कौस्तुभ नाम के पत्थर के टुकड़े को अपने वक्ष स्थल पर धारण नहीं किया था? और विष्णु आप से बढ़कर नहीं है, और न कौस्तुभमणि ही थोड़े भी गुणाश में, शेष हार से अधिक है। और न ही लक्ष्मी आकृति की समता के थोड़े से भी अंश में कादम्बरी की समता कर सकती है। इस कारण यह (कादम्बरी) आप (के हाथों) से इस अत्यादर के प्राप्त करने योग्य है। और यह प्रेम के फैलाव की अपात्र भी नहीं है। आप द्वारा तोड़ी हुई प्रीति वाली वह (यदि आप उसकी प्रार्थना स्वीकार नहीं करेंगे तो) निश्चय

स्वात्मानमुत्स्रक्ष्यति। अतएव महाश्वेता तरलिकामपीमं हारमादाय त्वत्सकाशं प्रेषितवती। तथापि कुमारस्य सदिष्टमेव। न खलु महाभागेन मनसापि कार्ये कादम्बर्याः प्रथमप्रणयप्रसरभङ्गः' इत्युक्त्वा च ताराचक्रमिव चामीकराचलस्य तटे त तस्य वक्षःस्थले बबन्ध। चन्द्रापीडस्तु विस्मयमानः प्रत्यवादीत्—'मदलेखे, किमुच्यते। निपुणासि। जानासि ग्राहयितुम्। उत्तरावकाशमपहरन्त्या कृतं वचसि कौशलम्। अयि मुग्धे, के वयमात्मनः, के वा वयं ग्रहणाग्रहणस्य वा। गता खल्वियमस्त कथा। सौजन्यशालिनीभिर्भवतीभिरुपकरणीकृतोऽय जनो यथेष्टमिष्टेष्वनिष्टेषु वा

---

यस्या एवविधा महाश्वेता उपालम्भसहस्रै खेदयित्वा खेदमुत्पाद्य स्वात्मान निजात्मानमुत्स्रक्ष्यति त्यक्ष्यति। अतएवास्मो हेतोर्महाश्वेतेम हारमादाय गृहीत्वा त्वत्सकाश भवत्समीप तरलिकां प्रेषितवती प्रहितवती। तथापि महाश्वेतयापि कुमारस्य सदिष्ट कथितमेव। महाभागेन सत्पुरुषेण त्वया कादम्बर्या प्रथमप्रणयप्रसरभङ्गो मनसापि न कार्यो न विधेय। कायवाग्भ्यां तु सर्वथा निषेध एव सूचित। इत्युक्त्वेत्यभिधाय चामीकराचलस्य मेरोस्तटे ताराचक्रमिव नक्षत्रसमूहमिव त हार तस्य वक्ष स्थले बबन्ध। चन्द्रापीडस्तु विस्मयमानो विस्मय कुर्वाण प्रत्यवादीत्प्रत्य-वोचत्। हे मदलेखे, त्वया किमुच्यते। त्व निपुणासि पण्डितासि। अत एव ग्राहयितु स्वीकारयितु जानासि। उत्तरस्य प्रतिवचसोऽवकाश प्रवेशयोग्यतामपहरन्त्या दूरीकुर्वन्त्या वचसि वाग्व्यापारे कौशल पाण्डित्य कृतम्। अयीति कोमलामन्त्रणे। हे मुग्धे, आत्मनो भवदपेक्षया के वयम्। युष्माक देवयोनित्वादिति भाव। अथ च के वा वयं ग्रहणाग्रहणस्य वा। गता खलु निश्चितम्। इयमस्त कथा। सौजन्यशालिनीभि सुजनताशोभिनीभिर्भवती-भिरुपकरणीकृतोऽयं जनो यथेष्टमिष्टेष्वनिष्टेषु वा व्यापारेषु विनियुज्यता प्रेर्यताम्। खलु

---

ही, महाश्वेता को सहस्रों उलहनो से दु खी करके ( अन्त में ) अपने ( जीवन ) को छोड़ देगी। इसीलिये महाश्वेता ने तरलिका को ही इस हार को लेकर तुम्हारे समीप भेजा है। फिर भी उसने ( महाश्वेता ने ) आपको यह सदेश भेजा ही है—"महानुभाव आपको कादम्बरी के प्रथम प्रणय विस्तार का भग मन से भी नहीं करना चाहिये। अर्थात् कादम्बरी की इस प्रणय प्रार्थना को अस्वीकार करने का मन में विचार तक नहीं लाना चाहिये।" यह कहकर उसने हार को उसके वक्ष-स्थल पर ऐसे बाध दिया जैसे कि सुवर्णपर्वत मेरु पर तारा मण्डल बाध दिया हो।

इस पर विस्मित होते हुए चन्द्रापीड ने प्रत्युत्तर दिया—"मदलेखे ! मैं क्या कहूँ ? तुम चतुर हो, तुम जानती हो कि कैसे अपनी बात को स्वीकार कराया जाता है ? उत्तर देने के प्रत्येक स्थान ( अथवा अवसर ) को छीन कर ले जाती हुयी ( तुम ) ने कहने में कुश-लता, वाक् पटुता दिखायी है। अरी सीधी सादी लड़की ! हम अपने ( अपना शासन करने वाले ) कौन हैं, अथवा हम स्वीकृति वा अस्वीकृति के ( स्वामी ) कौन हैं—( हम स्वीकार करने या न करने वाले ) कौन हैं ? यह बातचीत तो अब समाप्ति पर आ ही गयी। यह व्यक्ति ( अर्थात् मैं ) तो सजनतायुक्त आप देवियों ने अपना अनुसेवी ( अथवा अपना साधन ) बना

व्यापारेषु विनियुज्यताम्। अतिदक्षिणायाः खलु देव्याः कादम्बर्या निर्दाक्षिण्या गुणा न कंचिन्न दासीकुर्वन्ति' इत्युक्त्वा च कादम्बरीसबद्धाभिरेव कथाभिः सुचिरं स्थित्वा विसर्जयाबभूव मदलेखाम्। अनतिदूर गताया च तस्या क्रीडापर्वतगतमुदयगिरिगतमिव चन्द्रमस चन्दनदुकूलहारधवल चन्द्रापीड द्रष्टु समुत्सारितवेत्रच्छत्रचामरचिह्ना निषिद्धाशेषपरिजना तमालिकाद्वितीया चित्ररथसुता पुनरपि तदेव सौधशिखरमारुरोह। तत्रस्था च पुनस्तथैव विविधविलासतरङ्गितैर्विकारिविलोकितैर्जहारास्य मनः।

---

निश्चितम्। अतिदक्षिणाया अत्युदाराया। 'दक्षिणे सरलोदारौ' इति कोश.। कादम्बर्या निर्दाक्षिण्या सर्वत्र भ्रमणशीला गुणा कंचित्पुरुषं न दासीकुर्वन्ति। अपि तु सर्वानेव। इत्युक्त्वा चेत्यभिधाय च कादम्बरीसबद्धाभिरेव कथाभि सुचिर स्थित्वा तां मदलेखां विसर्जयाबभूव गृहे गमनायानुज्ञापितवान्। तदनन्तर तस्या मदलेखायामनतिदूर गताया नातिदूर प्राप्तायां चित्ररथसुता कादम्बरी पुनरपि द्वितीयवारमपि तदेव सौधशिखरमारुरोहा रूढा। अत्र सौधशिखर विशेषयन्नाह—क्रीडेति। क्रीडार्थं य पर्वत शैलस्तत्र गतम्। कमिव। उदयगिरिरुदयाचलस्तत्र गतमिव चन्द्रमसम्। चन्दन मलयजम्, दुकूल क्षौमम्, हार शेषाभिधान, एतैर्धवल शुभ्रं चन्द्रापीड द्रष्टु वीक्षितु समुत्सारितानि दूरीकृतानि वेत्रच्छत्रचामरचिह्नानि यया सा। निषिद्धो वर्जितोऽशेष समग्र परिजन परिच्छदो यया सा। तमालिका एव द्वितीया यस्या सा च। तत्रस्था च सौधशिखरगता च पुनस्तथैव पूर्वोक्तरीत्यैव विविधा अनेकप्रकारा ये विलासा भ्रूसमुद्भवास्तैस्तरङ्गितैर्विकारिविलोकितैरस्य चन्द्रापीडस्य

---

लिया है, (अब) इसको (आप ही) किन्हीं भी सुखदायक अथवा कष्टदायक कार्यों में इच्छानुसार लगा सकती हैं। स्वय अत्यन्त उदार कादम्बरी के अनौपचारिक गुण किस व्यक्ति को अपना दास नहीं बना लेते हैं—अर्थात् सभी को दास बना लेते है।"[1] यह कहकर और कादम्बरी से सम्बद्ध बातचीत मे बहुत देरतक ठहर कर, उसने मदलेखा को बहुत दूर गयी हुई होने के पहले ही, क्रीडा-पर्वत पर स्थित तथा चन्दन (के उबटन) रेशमी श्वेत वस्त्र तथा (शेष नामक) हार के कारण श्वेत चन्द्रापीड को मानो कि उदय पर्वत पर स्थित तथा चन्दन के उबटन, रेशमी वस्त्र और हार के समान श्वेत प्रतीत होते चन्द्रमा को ही देखने के लिए बेंत, छत्र तथा चँवर (राज) चिह्नों को छोड़े हुई, सभी सेवकों को अपने साथ आने को प्रतिषेध किये हुई, तमालिका ही जिसकी दूसरी (सगिनी) थी, अर्थात् अकेली तमालिका को ही साथ लिये हुई, चित्ररथ की पुत्री (कादम्बरी) फिर उसी महल के शिखर पर चढ़ गई। और वहाँ (खुली छत पर) उसने फिर वैसे ही अपनी नानाविध ललित चेष्टाओं से चित्र चित्रित अथवा प्रभावित (तरङ्गितै) प्रणयोन्मादी (विकारी) दृष्टियों के द्वारा इस (चन्द्रापीड) के मन को अपना बन्दी बना लिया। जैसे कि, कुछ समय के लिये तो (अथवा अभी

---

१. 'निर्दाक्षिण्यम्' पाठ में यह अर्थ होगा कि कादम्बरी के गुण किस (मेरे सरीखे) अनुदार को भी अपना दास नहीं बना लेते हैं।

तथाहि मुहुर्मुहुर्नितम्बबिम्बन्यस्तवामहस्तपल्लवा प्रावृतांशुकानुसारप्रसारितदक्षिणकरा निश्चलतारका लिखितेव, मुहुर्जृम्भिकारम्भदत्तोत्तानकरतलतया तद्गोत्रस्खलनभिया निरुद्धवदनेव, मुहुरंशुकपल्लवताडितनिःश्वासामोदलुब्धमधुकरमुखरतया प्रस्तुताह्वानेव, मुहुरनिलगलितांशुकसम्भ्रमद्विगुणीकृतभुजयुगलप्रावृतपयोधरतया दत्तालिङ्गनसञ्ज्ञेव, मुहुः केशपाशाकृष्टकुसुमपूरिताञ्जलिसमाघ्राणलीलया कृतनमस्कारेव, मुहुरुभयतर्जनीभ्रमितमुक्ताप्रालम्बतया निवेदितहृदयोत्कलिकोद्गमेव, मुहुरुपहारकुसुम-

मनो जहार हृतवती। तदेव दर्शयति—तथा हीति। मुहुर्मुहुर्वारंवार नितम्बबिम्ब आरोहबिम्बे न्यस्त स्थापितो वामहस्तपल्लवो यया सा। प्रावृत परिधानीकृत यदंशुक तदनुसारेण प्रसारितो दक्षिणकरो यया सा। निश्चलेति। निश्चला स्थिरा तारका कनीनिका यस्या सा। अत एव लिखितेव चित्रितेव। मुहुरिति। जृम्भिकारम्भे जृम्भाया प्रारम्भे दत्त यदुत्तान करतलं तस्य भावस्तत्ता तया। तस्य चन्द्रापीडस्य गोत्रमभिधान तस्य स्खलन तस्माद्या भी भीतिस्तया निरुद्धवदनेव। मुहुरिति। अंशुकपल्लवेन ताडितो यो नि श्वासामोदस्तत्र लुब्धा ये मधुकरा भ्रमरास्तैर्मुखरो वाचालस्तस्य भावस्तत्ता तया प्रस्तुत प्रारब्धमाह्वान यया सैवंविधेन। मुहुरिति। अनिलेन गलितानि यान्यंशुकान्युत्तरीयाणि तेषा सम्भ्रमो विलासस्तेन द्विगुणीकृत यद् भुजयुगलं तदेव प्रावृतमुत्तरीय ययो पयोधरयोस्तयोर्भावस्तत्ता तया दत्तालिङ्गनसञ्ज्ञा सकेतो यया सैवंविधेव। मुहुरिति। केशपाशादाकृष्टानि यानि कुसुमानि तेन पूरितो योऽञ्जलिस्तस्य समाघ्राणलीलया कृत्वा कृतनमस्कारेव विहितप्रणामेव। पुन करयोरलीकप्रदेशाभिमुखीकरणेन तदुत्प्रेक्षा। मुहुरिति। उभयतर्जनीभ्रमितो यो मुक्ताप्रालम्बो मुक्तालता तस्य भावस्तत्ता तया निवेदितो ज्ञापितो हृदयस्योत्कलिका हृल्लेख तस्या उद्गम प्रादुर्भावो यया सैवविधेव। यथा हारो मया भ्राम्यते तथोत्कलिकया मच्चित्तमिति भाव। मुहुरिति। उपहारस्योपचारस्य

तो ) वह अपने गोल कूल्हे पर अपने बाँये कोमल हाथ को रखे हुई, पहने हुए रेशमी वस्त्र ( की किनारी ) के साथ साथ फैलाये हुए दाँये हाथ वाली तथा निश्चल ( तारका ) दृष्टि से देखती हुई ऐसी प्रतीत हुई कि मानो ( किसी चित्र मे ) चित्रित की गयी हो, अभी जम्भाइयाँ आरम्भ हो जाने के कारण उलटी हथेली रख देने के कारण ऐसी प्रतीत हुई कि मानो उसका नाम ( गोत्र ) ( मुँह से ) निकल जाने की आशका से ही उसने मुँह बन्द कर लिया हो, अभी, उसके रेशमी वस्त्र के अचल से ताडित, उसके श्वास की सुगन्ध के लोभी भौरों द्वारा उत्पादित शब्द के कारण वह ऐसी प्रतीत हुई कि मानो उसने उसको ऊँची आवाज में बुलाना आरम्भ कर दिया हो, वायु द्वारा खिसके हुए वस्त्र द्वारा उत्पादित अस्त व्यस्तता में दुहरे किये हुए ( मोड़े हुए ) बाहुयुगल से ढके स्तन होने के कारण अभी वह ऐसी प्रतीत हुई कि मानो उसने आलिङ्गन का सकेत ( सज्ञा ) दे दिया हो, अपने जूड़े से खींचे हुए फूलों से भरी हुई अजलि को सूँघने के हाव-भाव के कारण ( अर्थात् हावभाव से सूँघने के कारण ) अभी ऐसी प्रतीत हुई कि मानो ( चन्द्रापीड को ) नमस्कार किये हुए हो, दो अगुलियों ( तर्जनियों ) पर घुमाये मोतियों के हार के कारण, अभी वह ऐसी प्रतीत हुई कि मानो हृदय में उत्कण्ठा की उत्पत्ति

स्खलनविधुतकरतलतया कथितकुसुमायुधशरप्रहारवेदनेव, मुहुर्गलितरसनानिगडपतितचरणतया सयम्यार्पितेव मन्मथेन, मुहुश्चलितोरुविधृतशिथिलदुकूला, क्षितितलदोलायमानांशुकैकदेशाच्छादितकुचा, चकितपरिवर्तनत्रुट्यत्त्रिवलीलता, समस्तचिकुरकलापसकलनाकुलकरतला, कटाक्षक्षेपधवलीकृतकर्णोत्पल विलक्ष्यमाणस्मितसुधाधूलिधूसरितकपोल साचीकृत्य वदनमनेकरसभङ्गिभङ्गुर विलोकयन्ती, तावदवतस्थे यावदुपसहृतालोको लोहितो दिवसो बभूव ।

---

यानि कुसुमानि तेभ्य स्खलनेन विधुत कम्पित यत्करतल तस्य भावस्तत्ता तया कथिता कुसुमायुधो मदनस्तस्य शरप्रहारवेदना पीडा यया सैवभूतेव । मुहुरिति । गलिता स्रस्ता या रसना कटिमेखला सैव निगडोऽन्दुकस्तत्र पतितौ यौ चरणौ तयोर्भावस्तत्ता तया सयम्य बद्ध्वा मन्मथेनार्पितेव । मुहुरिति । चलिताभ्यामूरुभ्यां यथाकथंचिद्विधृतमपि शिथिल दुकूल यस्या सा । क्षितितले दोलायमानोंऽशुकस्योत्तरीयस्यैकदेशस्तेनाच्छादितौ कुचौ यया सा । चकित ससभ्रम यत्परिवर्तन तेन त्रुट्यन्ती त्रिवलीलता यस्या सा । समस्ता समग्रा ये चिकुरा कुन्तलास्तेषा कलाप समूहस्तस्य सकलन स्वकीयस्थले स्थापनं तेनाकुल व्याक्षिप्त करतल यस्या सा । किं कुर्वती । वदन मुख साचीकृत्य वक्रीकृत्यानेके रसास्तेषां भङ्गी रचनाविशेषस्तेन भङ्गुर वक्र यथा स्यात्तथा विलोकयन्ती । अथ वदन विशेषयन्नाह—कटाक्षेति । कटाक्षाणा क्षेपस्तेन धवलीकृतं कर्णोत्पल यस्मिन् । विलक्ष्यमाण यत्स्मित तदेव सुधा तस्या धूलिस्तया धूसरितौ कपोलौ यस्मिन् । तावदवतस्थे यावदुपसहृत एकीभूत आलोको यस्मिन्नेवविधो लोहितो रक्तो दिवसो बभूव । एतेन सध्यासमयो जात इति ज्ञापितम् ।

---

को बताये हुई हो, पूजार्थ ( स्थापित ) फूलों से ठोकर खाकर ( दु ख से ) पटके ( उछाले ) हाथों के कारण अभी वह ऐसी प्रतीत हुई कि मानो उसने कामदेव के बाणों की चोट की पीड़ा कह दी हो, उसकी खिसकी हुई मेखला रूप साकल से बँधे पाँवों के कारण वह अभी ऐसी प्रतीत हुई कि मानो मन्मथ ने बाँधकर चन्द्रापीड को समर्पित कर दी हो, और अभी अपनी थरथराती जघाओं द्वारा कसकर धारण किये हुए ढीले वस्त्र वाली, धरातल पर लटकते आँचल के एक भाग से स्तनों को ढके हुई हड़बड़ाकर मुड़ने से पृथक् पृथक् होती ( अथवा ऐंठती ) दिखायी देती त्रिवली लता वाली, कन्धों पर अस्त व्यस्त रूप मे पड़े केशसमूह को एकत्रित करने मे व्यस्त हाथों वाली, कटाक्षपात से श्वेत किये हुए कर्ण पर पहने कमल वाले तथा लजीली ( विलक्ष ) मुस्कुराहटरूपी चूने की धूल से धूसरित गालों वाले मुँह को टेढ़ा करके, विविध भावनाओं ( रसों—प्रेम आदि ) के पेचीदे रूपों से वक्र करके देखती हुई। और इस प्रकार वह वहाँ तब तक बैठी रही जब कि दिन अपने प्रकाश को समेटे हुए ( अथवा समेट कर ) लाल हो गया ( अर्थात् सायकाल हो गया ) ।

अथ हृदयस्थितकमलिनीरागेणेव रज्यमाने राजीवजीवितेश्वरे सकललोकचक्रवालचक्रवर्तिनि भगवति पूष्णि क्रमेण च दिनपरिलम्बनरोषरक्ताभिः कामिनीदृष्टिभिरिव सङ्क्रामितशोणिम्नि व्योम्नि संहृतशोचिषि जाते जरठहारीतहरितवाजिनि, रविविरहमीलितसरोजसंहतिषु, हरितायमानेषु कमलवनेषु, श्वेतायमानेषु कुमुदखण्डेषु, लोहितायमानेषु दिङ्मुखेषु, नीलायमाने शर्वरीमुखे, शनैः शनैश्च पुनर्दिनश्रीसमागमाशाभिरिवानुरागिणीभिः सहैव दीधितिभिरदर्शनतामुपगते भगवति गभस्तिमालिनि, तत्कालविजृम्भितेन च कादम्बरीहृदयरागसागरेणेवापूरिते सन्ध्यारागेण

---

अथ प्रदोषसमयं वर्णयन्नाह—अथेति। जातायामदर्शनक्षमायां वेलायां कादम्बरी सौधशिखरात्क्रीडापर्वतकनितम्बाच्च चन्द्रापीडोऽवततारेत्यन्वयः। कस्मिन्सति। रागेणानुरज्यमाने सति रक्तता प्राप्यमाणे सति। रक्तत्वमाम्यादाह—हृदयस्थितो यः कमलिनी रागस्तेनेव राजीवानां कमलानां जीवितं तस्येश्वरः स्वामी तस्मिन्सकलः समग्रो यो लोकस्तस्य चक्रवालं पटलं तस्य चक्रवर्तिनि सार्वभौमे भगवति माहात्म्यवति। जरठः परिणत एवंविधो यो हारीतो मृदङ्कुरस्तद्वद्धरिता नीला वाजिनो यस्य स तस्मिन्। पुनः कीदृशे। संहृतशोचिव्यात्तदीधितौ एवंविधे पूष्णि सूर्ये जाते सति। तथा क्रमेण च परिपाट्या दिनस्य सूर्यस्य परिलम्बनमस्तसमयस्तेन रोषो नायको दत्तसंकेतोऽद्यापि नागत एवंरूपस्तेन रक्ताभिः कामिनीदृष्टिभिरिव सङ्क्रामिता शोणिमा रक्तिमा यस्मिन्नेवंविधे व्योम्न्याकाशे सति। पुनः केषु। रविरिति। रविः सूर्यस्तस्य विरहो वियोगस्तेन मीलिता सङ्कुचिता या सरोजसंहतयः कमलराजयस्तासु। पुनः केषु। कमलवनेषु नलिनखण्डेषु हरितायमानेषु नीलायमानेषु सत्सु। तथा कुमुदखण्डेषु कैरववनेषु गौरवद्वदाचरमाणेषु। प्रफुल्लितत्वादिति भावः। तथा लोहितायमानेषु रक्तायमानेषु दिङ्मुखेषु सत्सु। तथा नीलायमाने हरितायमाने शर्वरीमुखे प्रदोषे। शनैः शनैः पुनः पुनर्दिनश्रिया यः समागमस्तस्याशाभिरिवानुरागिणीभिर्दीधितिभिः सह भगवति गभस्तिमालिनि सूर्येऽदर्शनतामदृश्यतामुपगते प्राप्ते सति। पुनः सन्ध्यारागेण जीवलोके आपूरिते सति। केनेव।

---

इसके पश्चात् जब कमलों का जीवन स्वामी, सारे संसार चक्र का सम्राट् भगवान् सूर्य, हृदय में स्थित कमलिनी के प्रति राग (लाली और अनुराग) से (अर्थात् हृदय में अनुभूत प्रेम के कारण) ही मानो लाल होने लगा और धीरे धीरे मानो दिन के अस्त होने में देरी करने के कारण उत्पन्न क्रोध से ही लाल हुई स्त्रियों की दृष्टियों द्वारा जब आकाश लाल हो गया, जब पूर्णतया प्रवृद्ध (जरठ) हारीत (पक्षियों) के समान हरे अश्वों वाले सूर्य ने अपनी चमक को समेट लिया, सूर्य के वियोग के कारण बन्द हुई कमल पंक्तियों वाले कमलवन हरे-हरे होने लगे, जब रात्रिकमलवन (रात के समय खिलने के कारण) श्वेत होने लगे, दिग्देश लाल होने लगे, जब रात्रि का आरम्भिक भाग—अर्थात् सध्या काली दिखायी देने लगी, जब कि फिर दिन की चमक दमक के साथ समागम की आशा बाँधे हुई होने के कारण ही मानो लाल (साथ ही प्रेमोन्मादिनी बनी हुई) अपनी किरणों समेत भगवान् सूर्य धीरे-धीरे अदृश्य हो गये और जब मृत्युलोक सध्याकालीन लाल प्रकाश से, मानो कि उस समय उमड़े हुए (विजृम्भित)

जीवलोके, कुसुमायुधानलदह्यमानहृदयसहस्रधूम इव जनितमानिनीनयनवारिणि विस्तीर्यमाणे तरुणतमालत्विषि तिमिरे, दिक्करिकरावकीर्णसीकरासार इव श्वेतायमानतारागणे गगने, जाताया चादर्शनक्षमाया वेलाया सौधशिखरादवततार कादम्बरी, क्रीडापर्वतकनितम्बाच्च चन्द्रापीडः। ततोऽचिरादिव गृहीतपादः प्रसाद्यमान इव कुमुदिनीभिः कलुषमुखीः, कुपिता इव प्रसादयन्नाशाः प्रबोधशङ्कयेव परिहरन्सुप्ताः कमलिनीः, लाञ्छनच्छलेन निशामिव हृदयेन समुद्वहन्, रोहिणीचरणताडनलग्नम-

---

तत्कालविजृम्भितेन तदात्वप्रसृतेन कादम्बर्या हृदयरागस्तल्लक्षणो य सागर. समुद्रस्तेनेव। पुन कस्मिन्। विस्तीर्यमाणे विस्तार प्राप्यमाणे। तरुणो नवीनो यस्तमालस्तापिच्छ तस्य त्विडिव त्विट् यस्मिन्नेवविधे तिमिरेऽन्धकारे सति। तस्य नीलत्वेन साम्यादाह—कुसुमेति। कुसुमायुध एवानलो वह्निस्तेन दह्यमान ज्वलमान यद्धृदयसहस्र तस्य धूम इव। कीदृशे। जनितमुत्पादित मानिनीना नयनेषु वारि येन तस्मिन्। अद्यापि पतिर्गृहे नागत इति दु खेन मानिनीनयनेष्वश्रुसद्भाव इत्यर्थ। एतेन धूमसादृश्य ध्वनितम्। दिगिति। दिक्करिणां दिग्गजाना ये करा शुण्डादण्डास्तैरवकीर्णोऽवध्वस्तो य सीकरासारस्तस्मिन्निव। श्वेतायमाने दीप्यमाने तारागणे नक्षत्रसमूहे गगने व्योम्नि जाते सति। अन्वयस्तु प्रागुक्त। ततस्तदनन्तरम चिरादिव स्तोककालेनेव सुधासूतिश्चन्द्र उदगादुदय प्राप्तवान्। गृहीतेति। गृहीता पादा यस्य स। प्रसाद्यमान इव। काभि। कुमुदिनीभि कैरविणीभि। कलुषमुखी कुपिता इव आशा दिश प्रसादयन्प्रसन्नीकुर्वन्। सुप्तानां कमलिनीना प्रबोधो मा भूदित्याशङ्कया परिहरस्त्यजन्। लाञ्छनच्छलेनाङ्कमिषेण निशामिव हृदयेन समुद्वहन्धारयन्। पुन किं कुर्वाण। उदयराग दधान। कमिव। रोहिण्याश्चरणेन रतिकलहेन यत्ताडन तेन लग्नम् अलक्तकरसमिव

---

कादम्बरी के हृदय के द्रव 'राग' (रागरस) ( उसकी लाली तथा प्रणयोन्माद ) के लहराते समुद्र से ही भर गया, जब पूर्णतया वर्धित (वरुण) तमाल वृक्ष की सी (काली) आभा वाला अन्धकार ऐसे फैलने लगा कि मानो वह कामरूपी अग्नि से जल रहे सहस्रों चकवा चकवियों के हृदयों का स्त्रियो की आँखों मे आँसू उत्पन्न किये हुआ धुँआ हो, जब कि आकाश के नक्षत्रपुञ्ज इस प्रकार श्वेत होते दिखाई देने लगे कि मानो वे दिग्गजों की सूँडों से बिखेरी हुई फुहारों की वर्षा हों, और जब समय ( वस्तुओं को स्पष्ट ) दिखाने मे असमर्थ हो गया, तब कादम्बरी ( अपने ) महल की छत पर से और चन्द्रापीड क्रीड़ापर्वत के मध्य से उतरे। तब मानो शीघ्र ही, पादों ( पावों—किरणों ) को ( ग्रहण किये ) पकड़े हुई कुमुदिनियों द्वारा मानो मनाया जाता हुआ ( तथा चमकाया जाता हुआ ) काले अप्रसन्न मुखों ( मुँहों ) वाली दिशाओं रूप स्त्रियों को मानो मनाता हुआ ( तथा चमकाता हुआ ), सोई हुई ( बन्द कमलों वाली ) कमलिनियों को उनके जाग जाने के ( खिल जाने का ) भय से ही मानो छोड़ता हुआ ( उनसे वचता हुआ ), कलक ( काले दाग ) के बहाने मानो ( काली ) रात्रि को ही ( अपनी प्रेयसी को ) अपने हृदय में धारण किये हुआ, ( अभी उदय होने के कारण लाल रग को ऐसे धारण किये हुआ कि मानो वह लाल रग रोहिणी के पाँवों की ( प्रेम-कलह में की गयी ) चोट से लगा अलक्तक रस

लक्तकरसमिवोदयराग दधानः, तिमिरनीलाम्बरा दिवमभिसारिकामिवोपसर्पन्, अतिवल्लभतया विकिरन्निव सौभाग्यमुदगाद्भगवानीक्षणोत्सवः सुधासूतिः। उच्छ्रिते च कुसुमायुधाधिराज्यैकातपत्रे कुमुदिनीवधूवरे विभावरीविलासदन्तपत्रे श्वेतभानौ, धवलितदिशि दन्तादिवोत्कीर्णे भुवने चन्द्रापीडश्चन्द्रातपनिरन्तरतयैव कुमुद इव गृहकुमुदिन्याः कल्लोलधौतसुधाधवलसोपाने तनुतरङ्गतालवृन्तवाहिनि सुप्तहंसमिथुने विरहवाचालचक्रवाकयुगले तीरे कुमुददलावलीभिः पर्यन्तलिखितपत्रलतमवदातसिन्दु-

---

पानकद्रवमिव। तिमिरमेव नीलमम्बर वस्त्रमेतादृशीं दिव नीलावगुण्ठनसाम्याद्भिसारिकामिवोपसर्पन्गच्छन्। अतिवल्लभस्य भावोऽतिवल्लभता तया सौभाग्य विकिरन्निव विक्षिपन्निव। कीदृश। भगवान्माहात्म्यवान्। पुन किंविशिष्ट। ईक्षणाना नेत्राणामुत्सव इव। उच्छ्रिते च वृद्धिं प्राप्ते च कुसुमायुध कदर्पस्तस्याधिराज्य साम्राज्य तस्य एकमद्वितीयमातपत्र छत्र तस्मिन्। कुमुदिनी कैरविणी सैव वधूस्तस्या वर प्राणनाथस्तस्मिन्। पाण्डुरत्वसाम्येनाह—विभावरीति। विभावर्यास्त्रियामाया विलासार्थं दन्तपत्र कर्णाभरण तस्मिन्श्वेता शुभ्रा भानव किरणा यस्मिन्। धवलिता शुभ्रीकृता दिशो येन स तस्मिन्। चन्द्रालोकेन भुवनस्य व्याप्तत्वादाह—दन्तेति। दन्तादिवोत्कीर्णे भुवने विष्टपे जाते सति चन्द्रापीडश्चन्द्रातपस्य चन्द्रालोकस्य निरन्तरता सर्वस्मिन्नभिव्याप्तिस्तया हेतुभूतया। एवं विरलकुमुदवत्या अपि। गृहकुमुदिन्या कुमुदमय्या कुमुदप्रकर्षवत्या इव ये कल्लोला श्वेतिमोत्कर्षास्तैर्धौत निर्मलीकृत सुधया धवल सोपान यस्मिन्। तनव सूक्ष्मा ये तरङ्गा कल्लोलास्त एव वातहेतुत्वात्तालवृन्तानि व्यजनानि तेषा वात वहतीत्येवशील तस्मिन्। सुप्तानि हसाना मिथुनानि यस्मिन्। विरहेण वियोगेन वाचालानि मुखराणि चक्रवाकयुगलानि यस्मिन्नेवविधे तीरे। गृहदीर्घिकाया इति शेष। कुमुदाना कैरवाणा दलावलीभि. पत्रश्रेणिभि पर्यन्ते प्रान्ते लिखिता पत्रलता पत्रभङ्गय-

---

हो, अन्धकार रूपी नीले वस्त्र वाली द्यौ (आकाश) की ओर मानो अन्धकार-सरीखी काली पोशाक ( अम्बर ) से ढकी अभिसारिका की ओर बढ़ता हुआ, ( लोकों का ) अति प्रीतिपात्र होने के कारण मानो सौभाग्य को सौन्दर्य अथवा प्रीति को सब स्थानों पर बखेरता हुआ, अमृत का स्रोत तथा ( मर्त्यों की ) आँखों का उत्सवरूप चन्द्र भगवान् उदित हुआ और कुसुमायुध ( कामदेव ) के साम्राज्य के ( चिह्न रूप ) ( श्वेत ) अनुपम ( एकमात्र ) छत्र सरीखे, कुमुदिनीरूप बहुओं के पति, रात्रि ( रूपा युवती ) के शानदार कर्णाभूषण सरीखे चन्द्रमा ( श्वेतभानु ) के उदित हो जाने पर तथा जब ससार ( ज्योत्स्ना से ) श्वेत दिशाओं वाला ( चारों ओर श्वेत ) होकर ऐसा प्रतीत होने लगा कि मानो इसको हाथी दात में से खोद कर बनाया हो तब चन्द्रापीड चाँदनी के सर्वत्र फैल जाने के कारण ( इस पर घनी चाँदनी पड़ी होने के कारण ) ही मानो कुमुदों के बने प्रतीत होते ( अर्थात् कुमुदों से पूर्णतया भरे प्रतीत होते ) घर के कमलसरोवर के, लहरा से धोये हुए, चूने के समान श्वेत ( सगमर्मर की बनी ) सीढियों वाले, छोटी छोटी तरगों रूपी पखों ( तमालवृन्त ) की वायु वहन कर रहे को सोई हुई हस जोड़ियों वाले विरह से ( विरहजन्य दुःख से ) चिल्लाती चक्रवाक जोड़ियों वाले

वारदामोपहार हरिचन्दनरसैः प्रक्षालित कादम्बरीपरिजनोपदिष्ट मुक्ताशिलापट्टं चन्द्रशीतलमधिशिश्ये। तत्रस्थस्य चास्यागत्याकथयत् केयूरकः 'देवी कादम्बरी देव द्रष्टुमागता' इति।

अथ चन्द्रापीडः ससंभ्रममुत्थायागच्छन्तीम्, अल्पसखीजनपरिवृताम्, अपनीताशेषराजचिह्नाम्, इतरामिवैकावलीमात्राभरणाम्, अच्छाच्छेन चन्दनरसेन धवलीकृततनुलताम्, एककर्णावसक्तदन्तपत्राम्, इन्दुकलाकलिकाकोमल कर्णपूरीकृत

---

स्ताभिर्दन्तुर सदवदातानि सिन्दुवारदामानि निर्गुण्डीस्रजस्तेषामुपहारो यस्मिंस्तद्धरिचन्दनं गोशीर्षचन्दनं तस्य रसै प्रक्षालित धौत कादम्बर्या· परिजन परिच्छदस्तेनोपदिष्ट कथित मुक्तावद्धवल शुभ्र शिलापट्ट चन्द्रेण शीतलमधिशिश्ये। शयन चकारेत्यर्थ । तत्रस्थस्यास्य चन्द्रापीडस्य केयूरक आगत्येत्यकथयत्। इतिशब्दद्योत्यमाह—कादम्बरीति। कादम्बरी देवी देव भवन्त द्रष्टुमागता।

अथेति। तत्कथनानन्तर ससभ्रममुत्थाय स चन्द्रापीड कादम्बरीमपश्यत्। अथ कादम्बरीं विशेषयन्नाह—आगच्छन्तीमिति। आगच्छन्तीमायान्तीम्। अल्पेति। अल्प· स्तोको य सखीजनस्तेन परिवृताम्। अपनीत दूरीकृतमशेषं समग्र राजचिह्नं यया सा ताम्। अतएवेत रामिव पूर्वंव्यावर्णितस्वरूपाया भिन्नामिवैकावलीमात्रमाभरण विभूषण यस्या सा ताम्। अच्छ चाच्छ चाच्छाच्छ तेन। अतिनिर्मलेनेत्यर्थं। एतादृशेन चन्दनरसेन धवलीकृता तनुलता यया सा ताम्। एककर्णेऽवसक्त क्षिप्त दन्तपत्र यया सा ताम्। तथाविधदेशाचारत्वादिति भाव। पुन किं कुर्वाणाम्। कर्णपूरीकृत कुमुददल कैरवपत्र दधानाम्। कीदृशम्। इन्दुकला

---

किनारे पर, फूलों की पँखुड़ियों की पक्तियों से किनारे-किनारे चित्रित (शाभादायक) पत्तो और लताओं द्वारा कठोर बने (ऊँचे नीचे बने—दन्तुरित) हुए, श्वेत सिन्दुवार के फूलों की मालाओं की भेंट वाले (मालाओं से युक्त), हरिचन्दन के रस से धोये हुए, कादम्बरी के सेवकों से निर्दिष्ट, स्वय चन्द्रमा के समान शीतल मोतियों के बने चौड़े शिलाखण्ड पर लेट गया। और वहाँ बैठे हुए इससे केयूरक ने आकर कहा—'देवी कादम्बरी आपको देखने के लिये आई है।'

इसके पश्चात् चन्द्रापीड ने शीघ्रता से उठ कर आती हुई कादम्बरी को देखा, वह (कादम्बरी उस समय) केवल थोड़े से ही सेवकों से घिरी हुई थी (उसके साथ केवल थोड़े से ही सेवक थे), (वहाँ आने से पहले) उसने सारे राजचिह्न उतार दिये थे, एक सामान्य स्त्री की भाँति उसने केवल एकावली (एक लड़ी वाली मोती माला) आभूषण पहना हुआ था; अपने पतले शरीर को उसने अत्यन्त स्वच्छ चन्दन रस से श्वेत किया हुआ था, कर्णाभूषण बनायी हुई चन्द्रकला रूपी कली (अथवा कली के आकार की इन्दुकला) के समान मृदु, कमल की पखुड़ी को धारण किये हुई थी, चाँदनी के समान चमकीले, कल्पवृक्ष (की छाल) के वस्त्र

कुमुददलं दधानाम्, ज्योत्स्नाशुचिनी कल्पद्रुमदुकूले बिभ्रतीम्, तत्कालरमणीयेन वेषेण साक्षादिव चन्द्रोदयदेवताम्, मदलेखया दत्तहस्तावलम्बा कादम्बरीमपश्यत्। आगत्य च सा प्रीतिपेशलता दर्शयन्ती प्राकृते परिजनोचिते भूतले समुपाविशत्। चन्द्रपीडोऽपि 'कुमार, अध्यास्यता शिलातलमेव' इत्यसकृदनुबध्यमानोऽपि मदलेखया भूमिमेवाभजत। सर्वासु चासीनासु तासु मुहूर्तमिव स्थित्वा वक्तुमुपचक्रमे चन्द्रापीडः—'देवि, दृष्टिमात्रपीते दासजने सभाषणादिकस्यापि प्रसादस्य नास्त्यवकाशः, किमुतैतावतोऽनुग्रहस्य। न खलु चिन्तयन्नपि निपुणं तमात्मनो गुणलवमवलोकयामि

---

चन्द्रकला सैव कलिका तद्वत्कोमलं सुकुमारम्। पुनः किं कुर्वन्तीम्। ज्योत्स्नावच्छुचिनी पवित्रे कल्पद्रुमस्य दुकूले बिभ्रतीं दधानाम्। तत्कालरमणीयेन तत्समयमनोहरेण वेषेण नेपथ्येन साक्षाच्चन्द्रोदयदेवतामिव। मदलेखया दत्तो हस्तावलम्बः करावलम्बो यस्याः सा ताम्। अन्वयस्तु प्रागुक्तः। आगत्य च प्रीतिपेशलता स्नेहसुन्दरतां दर्शयन्ती प्रकटयन्ती प्राकृते नीचे परिजनस्य सेवकजनस्योचिते योग्ये भूतले पृथिव्यां समुपाविशत्समुपविष्टा। चन्द्रापीडोऽपि हे कुमार, शिलातलमेवाध्यास्यतामिति मदलेखयासकृद्वारंवारमनुबध्यमानोऽपि कथ्यमानोऽपि भूमिमेव वसुधामेवाभजताश्रितवान्। सर्वासु तास्वासीनासूपविष्टासु सत्सु मुहूर्तमिव स्थित्वा चन्द्रापीडो वक्तुं कथयितुमुपचक्रमे उद्यमं कृतवान्। किं तदित्याह—देवीति। हे देवि, दृष्टिमात्रेण प्रीते दासजने सभाषणादिकस्य जल्पनप्रभृतिकस्य प्रसादस्यानुग्रहस्यावकाशोऽवगाहो नास्ति। दृष्टिमात्रसमुद्भूतप्रीत्या तावन्मम हृदयं भृतं यावदस्य प्रवेशो नास्तीत्यर्थः। एतावतोऽनुग्रहस्य किमुत भण्यते। सर्वथा प्रवेशो नास्तीत्यर्थः। न खल्विति। निपुणं यथा स्यात्तथा चिन्तयन्नपि विचारयन्नप्यात्मनो गुणलवमवलोकयामि पश्यामि। यस्य गुणलवस्यायमनुरूपो योग्योऽनुग्रहातिरेकः प्रसादोत्कर्षः। अतिसरलात्स्वृत्वी तवेयमपगतो दूरीभूतो योऽभिमानोऽहंकारस्तेन

---

पहने हुई थी, उस समय अत्यन्त आकर्षक प्रतीत होते अपने वेष के कारण मानो शरीरधारिणी चन्द्रोदय की ( अधिष्ठात्री ) देवता सी प्रतीत हो रही थी, तथा मदलेखा ने उसको हाथ का सहारा दिया हुआ था। और आकर वह स्नेह की सुन्दरता को, अथवा एक सादी ( सरल ) आकर्षकता को दिखाती हुई सामान्य स्त्री की भाँति केवल सेवकों के बैठने योग्य, नंगी भूमि पर ही बैठ गयी। 'राजकुमार! आप शिला पर ही बैठे रहिये'—इन शब्दों में मदलेखा द्वारा कई बार ( अथवा बार बार ) कहा जाता हुआ भी चन्द्रापीड ( नंगी ) भूमि पर ही आ बैठा। और उन सब ( कन्याओं ) के बैठ जाने पर लगभग एक मुहूर्त भर तक ( आधा घंटे तक ) ( चुप ) रहकर चन्द्रापीड ने बोलना आरम्भ किया :—"राजकुमारी! केवल दृष्टि से ही सन्तुष्ट हुए ( मेरे सरीखे ) सेवक व्यक्ति पर तो सम्भाषणादि कृपा का भी अवकाश अर्थात् कोई कारण नहीं है, फिर ( भेंट करने आना, आदि ) इतने ( अथवा ऐसे ) अनुग्रह के दिखाने के विषय में तो क्या कहा जाय! निश्चय ही बड़े ध्यान से सोचते हुए भी मैं ऐसा कोई गुण अपने मे एक (लेशमात्र) भी नहीं देख पाता हूँ, जिसके योग्य यह अत्यन्त अनुग्रह (समझा) जा सके।

यस्यायमनुरूपोऽनुग्रहातिरेकः। अतिसरला तवेयमपगताभिमानमधुरा च सुजनता यदभिनवसेवकजनेऽप्येवमनुरुध्यते। प्रायेण मामुपचारहार्यमदक्षिण देवी मन्यते। धन्यः खलु परिजनः, ते यस्योपरि नियन्त्रणा स्यात्। आज्ञासविभागकरणोचिते भृत्यजने क इवादरः। परोपकारोपकरण शरीरम्, तृणलवलघु च जीवितम्। अपत्रपे त्वत्प्रतिपत्तिभिरुपायनीकर्तुमागतायास्ते वयमेते शरीरमिदमेतज्जीवितमेतानीन्द्रियाणि एतेषामन्यतरदारोपय परिग्रहेण गरीयस्त्वम्' इति। अथैववादिनोऽस्य वचनमाक्षिप्य मदलेखा सस्मितमवादीत्—'कुमार, भवतु। अतियन्त्रणया खिद्यते खलु सखी काद-

---

मधुरा मिष्टा सुजनता सौजन्यम्। अत्रार्थे हेतु प्रदर्शयन्नाह—यदिति। यदभिनवे सेवकजनेऽपि नूतनभृत्येऽप्येवमनुरुध्यतेऽनुग्रहविषयीक्रियते। प्रायेणेति। प्रायेण बाहुल्येनोपचारेण बाह्यविनयेन हार्यं वशीकर्तुं योग्यमत एवादक्षिणमनुदार मा देवी मन्यते जानाति। खलु निश्चयेन। स एव परिजनो धन्य कृतपुण्य, यस्योपरि ते तव नियन्त्रणाज्ञा स्यात्। आज्ञालक्षणो य सविभागो विभज्य किंचिदर्पण तस्य करण तत्रोचिते योग्ये भृत्यजने क इवादरो बहुमानाधिक्यम्। परेति। परस्य य उपकार उपकृतिस्तस्योपकरण साधक शरीर तृणस्यार्जुनस्य यो लवो केशस्तद्वल्लघु च जीवितम्। अत आगतायास्ते तव त्वत्प्रतिपत्तिभिस्त्वद्भक्तिभिरुपायनीकर्तुमुपढौकनीकर्तुमहमपत्रपे लज्जे। एते वयम्, इदं शरीरम्, एतज्जीवितम्, एतानीन्द्रियाणि, एतेषा मध्यादन्यतरत्परिग्रहेण स्वीकारेण कृत्वा गरीयस्त्वमारोपय स्थापयेति। अन्यस्योपायनस्याभावात्। इदमेव तत्रोपायनम्। अथैववादिनोऽस्य चन्द्रापीडस्य वचनमाक्षिप्य निराकृत्य मदलेखा सस्मितमवादीदवोचत्। हे कुमार, भवतु यत्त्वयोक्त तत्तथैवास्तु। परमतियन्त्रणयाति कथनेन खलु निश्चयेन कादम्बरी खिद्यते खेद प्राप्नोति। अत किमर्थं चैवमुच्यते कथ्यते।

---

( इसलिये केवल ) यह तुम्हारी परम सरलता तथा दूर हुए गर्व के कारण आकर्षक बनी हुई सज्जनता ही है कि जो नये ( बनाये हुए ) सेवक व्यक्ति के प्रति भी इस प्रकार अनुरोध ( प्रीति-व्यवहार ) किया जाता है। ( अथवा ) सम्भवत राजकुमारी मुझको सज्जनता ( अथवा विनय ) रहित मानती है और इसलिये बाह्य व्यवहारों ( शिष्टाचारादि क्रियाओं द्वारा ) वश में लाने योग्य समझती है। निश्चय ही वह सेवक धन्य है जिस पर तुम्हारा अधिकार ( नियन्त्रण ) हो। आदेशों को बाटने योग्य ( अर्थात् दिये हुए आदेशों का पालन करना ही जिसको उचित है ऐसे ) सेवक के प्रति बताइये, आदर दिखाना कैसा है ( आदर दिखाने की क्या आवश्यकता है ) ? शरीर तो दूसरों की भलाई करने का एक औजार है, और जीवन तिनके के छोटे से अश के समान तुच्छ है। ( इसलिये ) आयी हुई आपकी कृपा के बदले मे इन्हें ( शरीर तथा अपने प्राण को) तुम्हारे प्रति भक्ति के द्वारा भेंट करने मे मुझे लज्जा आती है। मैं स्वय, यह शरीर, यह मेरा जीवन, ये मेरी इन्द्रिया इनमे से किसी को भी स्वीकार करके गरिमा पर आरोपित कीजिये अर्थात् इनका महत्त्व बढ़ाइये।"

ऐसा कह रहे इस चन्द्रापीड की बात को ( बीच में ही ) काट कर मुस्कराती हुई मदलेखा बोली—'कुमार ! बस कीजिये, किसी के उचित कार्यों पर अत्यधिक अकुश अब मत

म्बरी। किमर्थं चैवमुच्यते। सर्वमिदमन्तरेणापि वचनमनया परिगृहीतम्, किं पुनरमुनोपचारफल्गुना वचसा सदेहदोलामारोप्यते' इति। स्थित्वा च कंचित्काल कृतप्रस्तावा 'कथ राजा तारापीडः, कथ देवी विलासवती, कथमार्यः शुकनासः, कीदृशी चोज्जयिनी, कियत्यध्वनि सा, कीदृग्भारत वर्षम्, रमणीयो वा मर्त्यलोकः' इत्यशेष पप्रच्छ। एवविधाभिश्च कथाभिः सुचिर स्थित्वोत्थाय कादम्बरी केयूरक चन्द्रापीडसमीपशायिनं समादिश्य परिजन च शयनसौधशिखरमारुरोह। तत्र च सितदुकूलवितानतलास्तीर्णं शयनीयमलचकार। चन्द्रापीडोऽपि तस्मिन्नेव शिलातले निरभिमानतामभिरूपतामतिगम्भीरता च कादम्बर्याः, निष्कारणवत्सलतां च महाश्वेतायाः, सुजनता

---

वचनमन्तरेणापि कथन विनैव सर्वमिद पूर्वोक्तमनया कादम्बर्या परिगृहीतमात्तम्। किं पुनरमुनोपचारेण फल्गुना निरर्थकेन वचसा किं वचनव्यापारेण सदेहदोलामारोप्यते। मन इति शेष। इत्युक्तप्रकारेण कंचित्काल स्थित्वा विलम्ब्य च कृतो विहित अर्थात्प्रश्नस्य प्रस्तावोऽवसरो यया सैवविधा सतीत्यशेष समग्र पप्रच्छ अपृच्छत्। इतिशब्दद्योत्यमाह—कथमिति। कथ केन प्रकारेण राजा तारापीड। देवी विलासवती कथम्। कथमार्य शुकनास। कीदृशी चोज्जयिनी विशाला। सा चोज्जयिनीत कियत्यध्वनि मार्गे। कीदृग्भारत वर्ष क्षेत्रम्। रमणीयो वा मनोहरो वा मर्त्यलोको मनुष्यलोक। एवमिति। एवविधाभिरेवप्रकाराभि कथाभिर्वार्ताभि सुचिर बहुकाल स्थित्वावस्थान कृत्वोत्थाय कादम्बरी केयूरक चन्द्रापीडसमीपशायिन परिजन च समादिश्यादेश दत्त्वा शयनयोग्य यत्सौधशिखर तदारुरोह। रूढवती। तत्रेति। तत्र तस्मिन्सौधतले सित शुभ्र यद्दुकूल दुगूल तस्य वितान चन्द्रोदयस्तस्य तलमधोभागस्तत्रास्तीर्णं स्थापित शयनीय शय्यामलचकारालकृतवती। चन्द्रापीडोऽपि तस्मिन्नेव शिलातले निरभिमानतां निगर्वतामभिरूपतां विचक्षणतामतिगम्भीरता च कादम्बर्या, निष्कारणवत्सलता च निर्हेतुकहितकारिता च महाश्वेताया, सुजनता च मदलेखाया, महानु-

---

लगाइये, मेरी सखी कादम्बरी निश्चय ही, इससे दुःखी होती है। और इस रीति से यह सब क्यों कहा जाता है? यह सब तो उसने शब्दों में कहे बिना ही, पहले ही स्वीकार कर लिया है, फिर क्यों इस शिष्टाचार के कारण व्यर्थ कथन द्वारा उसको संदेह में डाला जा रहा है।" फिर कुछ देर चुप रह कर (प्रतीक्षा करके), तथा प्रश्न का अवसर प्राप्त करके 'राजा तारापीड कैसे हैं? रानी विलासवती कैसी है? आर्य शुकनास कैसे हैं? उज्जयिनी नगरी किस प्रकार की है? और वह नगरी कितनी दूरी पर है? भारत देश कैसा है? क्या मर्त्यलोक आकर्षक है?—आदि सभी कुछ पूछ डाला। और इन बातों में व्यस्त रहकर, बहुत देर तक बैठी रहने के पश्चात् उठ कर कादम्बरी केयूरक को तथा अन्य सेवकों को यह आज्ञा देकर कि वे चन्द्रापीड के समीप सोवेंगे, वह अपने शयनमहल की छत पर चढ़ गई। और वहाँ पर श्वेत रेशमी वितान के नीचे बिछी हुई शय्या को अलंकृत किया। चन्द्रापीड ने भी उसी शिलातल पर ही कादम्बरी की गर्वशून्यता, उसकी अत्यधिक सुन्दरता तथा चरित्र की गम्भीरता को, महाश्वेता की अकारण प्रीति को, मदलेखा की सज्जनता को, सेवक वर्ग की अत्य

च मदलेखायाः, महानुभावतां च परिजनस्य, अतिसमृद्धिं च गन्धर्वराजलोकस्य, रम्यता च किंपुरुषदेशस्य मनसा भावयन्केयूरकेण संवाह्यमानचरणः क्षणादिव क्षणदां क्षपितवान् ।

अथ क्रमेण कादम्बरीदर्शनजागरखिन्न स्वप्तुमिव तालतमालतालीकदलीकन्दलिनीं प्रविरलकल्लोलानिलशीतला वेलावनराजिमवततार तारापतिः। अभ्यर्णविरहविधुरस्य च कामिनीजनस्य निःश्वसितैरिवोष्णैर्म्लानिमनीयत चन्द्रिका। चन्द्रापीडविलोकनारूढमदनेव कुमुददलोदरनीतनिशा पङ्कजेषु निपपात लक्ष्मी। क्षणदापगमे

---

भावता च परिजनस्य अतिसमृद्धिं च गन्धर्वराजलोकस्य, रम्यतां मनोहरतां च किंपुरुषदेशस्य, मनसा भावयश्चिन्तयन्केयूरकेण संवाह्यमानौ लाल्यमानौ चरणौ पादौ यस्यैवंभूत क्षणादिव क्षणमात्रेण क्षणदा त्रियामां क्षपितवान्क्षयं नीतवान् ।

इदानीं रात्रिशेष चन्द्रास्त सूर्योदय च वर्णयश्चन्द्रापीडकर्तव्यतामाह—अथेति । क्षणदाक्षयानन्तरं कादम्बर्या यद् दर्शनमवलोकन तेन जागरो जागरणं तेन खिन्नो रीण स्वप्तुमिव शयन कर्तुमिव तारापतिश्चन्द्र । वेलेति । वेलाम्भसां वृद्धिस्तस्या वनराजिं कान्तारश्रेणिमवततारावतीर्णवान् । अथ वनराजि वर्णयन्नाह—तालेति । तालस्ताल, तमालस्तापिच्छ, ताली वृक्षविशेष, कदली रम्भा, आसा कन्दली विद्यते यस्यां सा ताम् । प्रविरलेति । प्रविरला स्तोका ये कल्लोलास्तरंगास्तेषामनिलो वायुस्तेन शीतला सुशीताम् । अभ्यर्णेति । अभ्यर्णस्तत्कालीनो यो विरहो वियोगस्तेन विधुरस्य दु खितस्य कामिनीजनस्योष्णैर्निश्वसितैर्निश्वासैरिव म्लानिं मलिनता चन्द्रिका चन्द्रगोलिकानीयत प्राप्यत । चन्द्रेति । चन्द्रापीडविलोकनेन आरूढ प्राप्तो मदनो यस्या एवंभूतेव । आरूढमदनतायास्तु शीतलस्थानावस्थिति प्रजागरश्च स्यादित्याशयेनाह—कुमुदेति । कुमुददलानां कैरवपत्राणाम् उदरे मध्ये नीता परिकलिता निशा रात्रिर्यया सा । तेषा विकसितत्वात् । तदनन्तरमेव पङ्कजेषु कमलेषु लक्ष्मीर्निपपात । क्षणदेति । क्षणदाया निशाया अपगमे कामिनीनां रते यान्कर्णोत्पलप्रहारान्, अथ

---

धिक उदारता को, गन्धर्वराज के प्रदेश की अतिशय ऐश्वर्यशालिता को तथा किन्नर प्रदेश की रमणीयता को मन में सोचते हुए केयूरक द्वारा दबाये जाते हुए पाँवों वाले ने वह रात्रि, मानो एक क्षण की भाँति ही बिता दी ।

तब उचित समय पर, नक्षत्राधिपति चन्द्रमा, कादम्बरी के दर्शन के लिए जागने के कारण मानो थका हुआ, सोने के लिये ही ताल, तमाल, ताली तथा केले के वृक्षों की नई कोंपलों से युक्त ( समीपस्थ समुद्र की ) निरन्तर आयीं लहरों की वायु से शीतल हुई तटीय वनों की पंक्तियों मे उतर गया। चाँदनी को, समीप आते हुए वियोग के कारण दु:खी स्त्रियों की गरम आहों ने ही मानो धीमी कर दिया था। मानो चन्द्रापीड के दर्शन से काम पीडिता लक्ष्मी, प्रणयासक्ता स्त्री की भाँति कुमुदों की पखुड़ियों के ऊपर रात्रि बिताकर अब कमलों पर ( अर्थात् दिवसकालीन कमलों की शय्या पर ) आ पड़ी थी और रात्रि के बीत जाने पर

च स्मृत्वा कामिनीकर्णोत्पलप्रहारानुत्कण्ठितेष्विव क्षामतां व्रजत्सु, पाण्डुतनुषु गृहप्रदीपेषु, अनवरतशरक्षेपखिन्नानङ्गनिःश्वासविभ्रमेषु वहत्सु लताकुसुमपरिमलेषु प्रभातमातरिश्वसु, सुमन्दरलतागृहगहनानि च भियेव भजन्तीष्वरुणोदयोपप्लविनीषु तारकासु क्रमेण च समुद्गते चक्रवाकहृदयनिवासलग्नानुरागमिव लोहितं मण्डलमुद्वहति सवितरि शिलातलादुत्थाय चन्द्रापीडः प्रक्षालितमुखकमलः कृतसध्यानमस्कृतिर्गृहीतताम्बूलः 'केयूरक, विलोकय देवी कादम्बरी प्रबुद्धा न वा, क्व वा तिष्ठति' इत्यवोचत्। गतप्रतिनिवृत्तेन च तेन 'देव, मन्दरप्रासादस्याधस्तादङ्गणसौधवेदिकायां महाश्वेतया सहावतिष्ठते' इत्यावेदिते गन्धर्वराजतनयामालोकयितुमाजगाम। ददर्श च धवलभस्म-

वान्यानपि क्रीडाविलासान्स्मृत्वा स्मरणं कृत्वा पुनर्द्रष्टुमुत्कण्ठितेष्विवात एवोत्कण्ठापरिपूर्त्यां क्षामतां कृशतां व्रजत्सु गच्छत्सु, तत एव पाण्डुतनुषु गृहदीपकेषु सत्सु। अनवरतेति। अनवरतं निरन्तरं यः शरक्षेपो बाणप्रक्षेपस्तेन खिन्नो रीणो योऽनङ्गः कंदर्पस्तस्य निःश्वासास्तेषां विभ्रमेषु लता वल्लयस्तासां कुसुमानां पुष्पाणां परिमलो येष्वविधेषु प्रभातमातरिश्वसु प्रत्यूषसमीरेषु वहत्सु। अरुणोदयेन उपप्लव उपद्रवो विद्यते यासामेवंविधासु तारकासु तारासु भियेव भीत्येव सुमन्दरो मेरुस्तस्य लता वीरुधस्ता इव गृहास्तेषां गहनान्यरण्यानि च भजन्तीष्वाश्रयन्तीषु। क्रमेण परिपाट्या चक्रवाको रथाङ्गाह्वयस्तस्य हृदयं तेन सह निवासस्तत्र लग्नोऽनुरागो यस्यैवंविधमिव लोहितं मण्डलं बिम्बमुद्वहति धारयति सवितरि सूर्ये च समुद्गते उदिते सति शिलातलादुत्थाय प्रक्षालितं मुखकमलं येन स, कृता सध्याया नमस्कृतिर्येन स, गृहीतं भक्षितं ताम्बूलं येन स, हे केयूरक, विलोकय देवी कादम्बरी प्रबुद्धा न वा। क्व वा तिष्ठतीत्यवोचत्। गतप्रतिनिवृत्तेन च तेन केयूरकेण हे देव, मन्दरप्रासादस्याधस्तादङ्गणं तत्र यत्सौधं तस्य वेदिकायां महाश्वेतया सहावतिष्ठते। इत्यावेदिते कथिते सति गन्धर्वराजतनयामालोकयितुं वीक्षितुमाजगाम। तदनन्तरं महाश्वेतां कादम्बरीं च ददर्शावलोकयामास। अथ

पर, स्त्रियों के कान पर पहने हुए कमलों द्वारा की गयी चोटों को स्मरण करके, उसके लिये उत्सुक (मानो प्रेमरोगी) बने शयन गृह के दीपक जब देखने में पतले तथा पीले (फीके) पड़ गये, जब निरन्तर बाण फेंकने से थके हुए कामदेव के श्वसोच्छ्वासों के विलासों से मिलते-जुलते विलासों वाली तथा लताओं पर के फूलों की सुगन्ध से सुगन्धित प्रातःकालीन हवाएँ चलने लगीं, जब सूर्योदय से विपत्तिग्रस्त नक्षत्र मानो डरकर ही मन्दर पर्वत की लताओं के कुञ्जों में चले गये और धीरे-धीरे (अथवा काल क्रमानुसार) उदित हुए सूर्य ने चक्रवाक के हृदय में (रात्रिभर) निवास करने से लगे अनुराग (लालिमा—प्रणयोन्माद) से ही मानो लाल हुए अपने मण्डल को धारण कर लिया, तब शिलातल से उठ कर, मुखकमल को धोकर सन्ध्या को नमस्कार करके पान ग्रहण करके चन्द्रापीड बोला—'केयूरक, जाकर देखो देवी कादम्बरी अभी जाग गयी या नहीं। अथवा वह (इस समय) कहाँ है।''

और जाकर लौटे हुए उसने जब यह बताया कि 'कुमार! मन्दर-महल के ठीक नीचे, आङ्गन में स्थित (सुधा) चूने के बने (श्वेत) मच पर महाश्वेता के साथ (कादम्बरी) बैठी

ललाटिकाभिरक्षमालापरिवर्तनप्रचलकरतलाभिः पाशुपतव्रतधारिणीभिर्धातुरागारुणाम्बराभिश्च परिव्राजिकाभिः परिणततालफलवल्कललोहितवस्त्राभिश्च रक्तपटव्रतवाहिनीभिः सितवसननिबिडनिबद्धस्तनपरिकराभिश्च श्वेतपटव्यजनाभिर्जटाजिनवल्कलाषाढधारिणीभिर्वर्णिचिह्नाभिस्तापसीभिः साक्षादिव मन्त्रदेवताभिः पठन्तीभिर्भगवतस्त्र्यम्बकस्याम्बिकायाः कार्तिकेयस्य विश्रवस्य कृष्णस्यार्यविलोकितेश्वरस्यार्हतो विरिञ्चस्य पुण्याः स्तुतीरुपास्यमानामन्तःपुराभ्यर्हिताश्च सादर नमस्कारैराभाषणैरभ्युत्थानैरासन्नवेत्रासनदानैश्च गन्धर्वराजबान्धववृद्धाः समानयन्ती महाश्वेताम्,

महाश्वेतां विशिनष्टि—साक्षादिति । साक्षान्मन्त्रदेवताभिरिव परिव्राजिकाभिस्तापसीभिरुपास्यमानाम् । ता विशिनष्टि—धवलेति । धवल शुभ्र यद्भस्म भूतिस्तस्य ललाटिका यासा ताभि' । अक्षेति । अक्षमाला जपमालास्तासा परिवर्तन तेन प्रचलानि कम्प्राणि करतलानि यासां ताभि । पशुपतेरीश्वरस्येद पाशुपतं यद् व्रत नियमविशेषस्तद्धारयन्तीत्येवशीलास्ताभिर्धातुरागेण गैरिकेणारुणान्यम्बराणि यासां ताभि । परिणता ये तालफलास्तेषा वल्कलानि तान्येव लोहितानि रक्तानि वस्त्राणि यासा ताभि' । रक्तेति । रक्त' य पटस्तस्य यद् व्रत तद्वाहिनीभिस्तन्निर्वाहकारिणीभि । अथ तापसीं विशिनष्टि—सितेति । सितवसनेन श्वेत वस्त्रेण निबिड यथा स्यात्तथा निबद्ध स्तनपरिकर कुचाभोगो याभि । श्वेतपटस्य व्यजनानि तालवृन्तानि यासा ताभि. । जटेति । जटा सटा', अजिन मृगचर्म, वल्कल चोचम्, आषाढ पालाश, एतान्धारयन्तीत्येवशीलास्ताभि । वर्णी ब्रह्मचारी तस्य चिह्न यासा ताभि । किं कुर्वन्तीभिरेताभि । पठन्तीभिरुच्चारयन्तीभि. । का । भगवतस्त्र्यम्बकस्येश्वरस्य, अम्बिकाया गौर्या, कार्तिकेयस्य स्कन्दस्य, विश्रवस्य विश्रवस, कृष्णस्य जिनस्य, आर्यविलोकितेश्वरस्य बौद्धस्य, अर्हतस्तीर्थंकरस्य, विरिञ्चस्य ब्रह्मण, पुण्या पवित्रा स्तुतीर्नुती । पुन किं कुर्वन्तीम् । अन्त पुरेऽभ्यर्हिता श्रेष्ठा गन्धर्वराजस्य बान्धवा स्वजनास्तेषा वृद्धा स्थविरा

है'—तब चन्द्रापीड चित्ररथ की कन्या ( कादम्बरी ) को देखने के लिये आया । और वहाँ उसने श्वेत भस्म से चिह्नित मस्तकों वाली, जपमाला के मनकों को फेरने मे चलती हथेलियों वाली, पाशुपत व्रत धारण किये हुई, धात्वीय रगों से रगे लाल वस्त्रों वाली सन्यासिनियों द्वारा पके तालफल की छाल के समान लाल वस्त्रोंवाली 'रक्तपट' नाम के व्रत को धारण किये हुई तथा श्वेत वस्त्र से कसकर बन्धी कमरों वाली 'श्वेतपट' ( नाम के सम्प्रदाय ) के वेष को धारण किये हुई तपस्विनियों द्वारा, ब्रह्मचारी के चिह्नों को तथा जटा, मूँज की मेखला, वल्कल वस्त्र पहने हुई तथा पलाश के दण्ड लिये हुई तपस्विनियों द्वारा और ( अपने अपने इष्ट देवता जैसे कि ) भगवान् शिव, पार्वती, कार्तिकेय, विष्णु जिन, कृष्ण, आर्यविलोकितेश्वर, अर्हत् तथा ब्रह्मदेव की पवित्र स्तुतियों को पढ़ती हुई शरीरधारिणी मत्राधिष्ठात्री देवता सरीखियों द्वारा सेवित अन्तःपुर की पूजनीय, चित्ररथ की सम्बन्धिनी वृद्धाओं का, आदरसहित नमस्कार, वार्तालाप, ( उनके पधारने पर ) उठ कर खड़े होना, आसन्नवर्ती वेत्रासन को ( स्वय ) अर्पित करना—आदि कार्यों से आदर करती हुई, महाश्वेता को

पृष्ठतश्च समुपविष्टेन किंनरमिथुनेन मधुकरमधुराभ्या वशाभ्या दत्ते ताने कलगिरा गायन्त्या नारददुहित्र्या पठ्यमाने च सर्वमङ्गलमहीयसि महाभारते दत्तावधाना पुरो धृते च दर्पणे ताम्बूलरागबद्धकृष्णिकान्धकारिताभ्यन्तरं दशनज्योत्स्नासिक्तमुत्सृष्ट-मधूच्छिष्टपट्टपाण्डुरमधर विलोकयन्ती शैवलतृष्णया कर्णपूरशिरीषप्रेषितोत्तानविलो-चनेन बद्धमण्डल भ्रमता भवनकलहंसेन प्रभातशशिनेव क्रियमाणगमनप्रणामप्रद-क्षिणा कादम्बरीं च समुपसृत्य कृतनमस्कारस्तस्यामेव वेदिकाया विन्यस्तमासन

---

सादर सत्कारपूर्वक नमस्कारै प्रणामैराभाषणैर्जल्पनैरभ्युत्थानैरुत्तिष्ठनैरासन्ने समीपे वेत्रासन-स्यासन्द्या दानैश्च कृत्वा समानयन्तीं सत्कार कुर्वन्तीं महाश्वेताम्। पुन कीदृशीं कादम्बरीम्। पृष्ठत समुपविष्टेन पश्चाद्भागस्थितेन किंनरमिथुनेन किंपुरुषयुग्मेन मधुकरवन्मधुराभ्या वशा-भ्यासुपाङ्गाभ्या ताने स्वरे दत्ते सति। नारदो देवब्रह्मा तस्य दुहित्र्या पुत्र्या भद्राभिधानया कलगिरा मनोज्ञवाण्या गायन्त्या गान कुर्वन्त्या। पठ्यमाने गानद्वारा कथ्यमाने च सर्वमङ्गलै समग्रश्रेयोभिर्महीयसि महाभारते दत्तावधानां न्यस्तचित्ताम्। पुन किं कुर्वन्तीम्। पुरो धृतेऽग्रे स्थापिते दर्पणेऽधर दन्तच्छद विलोकयन्तीं पश्यन्तीम्। अथाधर विशेषयन्नाह— ताम्बूलेति। ताम्बूल नागवल्लीदलं तस्य रागस्तेन बद्धा या कृष्णिका श्यामता तयान्ध-कारितमन्धकारवदाचरितमभ्यन्तर मध्यभागो यस्य तत्। दशनेति। दशनानां दन्तानां या ज्योत्स्ना चन्द्रिका तया सिक्तं खिन्नितम्। उत्सृष्टेति। उत्सृष्टमुज्झित मधु क्षौद्रं येनैवंविधो य उच्छिष्टपट्टो मदनपिण्डस्तद्वत्पाण्डुर श्वेतरक्तम्। बद्धेति। बद्धमण्डल यथा स्यात्तथा भ्रमता भ्रमण कुर्वता भवनकलहंसेन गृहकलहंसेन प्रभातकालीनो य शशी चन्द्रस्तेनेव क्रियमाणा विधीयमाना गमनसमये प्रणामयुक्ता प्रदक्षिणा यस्या सा ताम्। कलहसान्विशेष-यन्नाह—शैवलेति। शैवल शैवाल तस्य तृष्णया गर्धेन कर्णपूरीकृत यच्छिरीषपुष्प तस्मिन् प्रेषित उत्तान ऊर्ध्वमुखे विलोचने नेत्रे यस्य स तेनैवंविधां कादम्बरीं च समुपसृत्य निकटे गत्वा कृतो नमस्कारो येनैवंभूतो यस्यां सा समुपविष्टास्ति तस्यामेव वेदिकाया विन्यस्त

---

देखा। और उसने कादम्बरी को (भी) देखा जो (उस समय), पीछे बैठी हुई किन्नर जोड़ी द्वारा भौरों (की गुञ्जार)—सरीखी मीठी (ध्वनि वाली) दो बाँसुरियों पर ताल मिलाये हुए, नारद की पुत्री द्वारा मीठी ध्वनि में पढ़े जा रहे, सब मागलिक अर्थात् पवित्र पुस्तकों में सबसे अधिक मागलिक महाभारत ग्रन्थ मे ध्यान दिये हुई थी; और सामने रखे हुए मणिजटित दर्पण में, (उस द्वारा निरन्तर चबाये जा रहे) पान के रग द्वारा प्रदत्त कालिमा से काले हुए भीतरी भागवाले, (उसके) दान्तों की मृदु चमक से सींचे हुए—(जिस पर दान्तों की मृदु चमक फैली हुई थी) और मधुरहित मोम पिण्ड के समान श्वेत लाल अधर को देख रही थी, शैवाल पौधे की कोंपल की लालसा में (शिरीष पुष्प को शैवाल की कोंपल समझ कर) कर्णाभूषण के (रूप मे पहने हुए) शिरीषपुष्प की ओर प्रेरित अपनी खूब खुली हुई आँख वाले पालतू हस द्वारा, मानो कि प्रात:कालीन चन्द्रमा द्वारा ही जिसकी गमन (-कालीन) प्रणाम तथा प्रदक्षिणा की जा रही थी। चन्द्रापीड समीप पहुँच कर

भेजे। स्थित्वा च कंचित्कालं महाश्वेताया वदनं विलोक्य स्फुरितकपोलोदर मन्दस्मितमकरोत्। असौ तु तावतैव विदिताभिप्राया कादम्बरीमब्रवीत्—'सखि, भवत्या गुणैश्चन्द्रापीडश्चन्द्रकान्त इव चन्द्रमयूखैरार्द्रीकृतो न शक्नोति वक्तुम्। जिगमिषति खलु कुमारः। पृष्ठतो दुःखमविदितवृत्तान्त राजचक्रमास्ते। अपि च युवयोर्दूरस्थितयोरपि स्थितेयमिदानीं कमलिनीकमलबान्धवयोरिव कुमुदिनीकुमुदनाथयोरिव प्रीतिराप्रलयात्। अतोऽभ्यनुजानातु भवती' इति।

अथ कादम्बरी 'सखि, महाश्वेते, स्वाधीनोऽयं सपरिजनो जनः कुमारस्य स्व इवान्तरात्मा। क इवात्रानुरोधः' इत्यभिधाय गन्धर्वकुमारानाहूय 'प्रापयत

---

स्थापितमासन विष्टर भेजेऽभजत्। तत्र कंचित्काल स्थित्वा स्थितिं विधाय महाश्वेताया वदन विलोक्य निरीक्ष्य स्फुरित चलित कपोलयोरुदर मध्यप्रदेशो यस्मिन्नेतादृश मन्दस्मित मीषद्धास्यमकरोत्। असौ महाश्वेता तु तावतैव स्मितमात्रेणैव विदितो ज्ञातोऽभिप्रायो यया सैवविधा सती कादम्बरीमित्यब्रवीत्। इतिशब्दद्योत्यमाह—सखीति। हे सखि आलि, भवत्या गुणै कारणभूतैश्चन्द्रापीडश्चन्द्रमयूखै शशिकिरणैश्चन्द्रकान्त इव चन्द्रोपल इवार्द्रीकृतो वक्तु कथयितु न शक्नोति न समर्थो भवति। खलु निश्चयेन कुमारो जिगमिषति चिचलिषति। पृष्ठतो मद्गमनानन्तरमविदितवृत्तान्तमज्ञातोदन्तमतएव दु ख दु खित राजचक्रं नृपसमूह आस्ते वर्तते। अपि चेति युक्त्यन्तरे। युवयो कादम्बरीचन्द्रापीडयोर्दूरस्थितयोरपीदानीं सांप्रत कमलिनीकमलबान्धवयोरिव पद्मिनीसूर्ययोरिव कुमुदिनीकुमुदनाथयोरिव कैरविणीचन्द्रमसोरिव प्रीति स्नेह आ प्रलयात्प्रलयं मर्यादीकृत्य आकल्पान्तादिय स्थिता। अतो हेतोर्भवत्यभ्यनुजानातु। गमनाज्ञा ददात्वित्यर्थं।

अथेति। एतच्छ्रवणानन्तर कादम्बरी गन्धर्वकुमारानाहूयाह्वान कृत्वेत्यादिदेशेत्यादिष्टवती। इतिशब्दवाच्यमाह—कुमारेति। कुमारं चन्द्रापीड स्वा भूमिं प्रापयत आपयत

---

नमस्कार करके उसी वेदिका के ऊपर रखे हुए आसन पर बैठ गया। और कुछ देर रुक कर महाश्वेता के चेहरे को देखकर वह इस प्रकार मन्द-मन्द मुस्कराया कि उसकी गालें बीच मे से बस कुछ कुछ थर थरायीं। किन्तु महाश्वेता, उतने मात्र से ही उसके अभिप्राय को जान गयी और कादम्बरी से बोली—"सखि! जैसे चन्द्रमा की किरणों से चन्द्रकान्त मणि प्रभावित हो जाती है, वैसे ही तेरे गुणों से प्रभावित ( मृदु ) हुआ चन्द्रापीड कुछ बोल नहीं पा रहा है। निश्चय ही वह जाना चाहता है। पीछे छूटा हुआ उसका सैन्य ( राजचक्रम् ) उसके समाचार को न जाने हुआ, अवश्य ही दु:खी होगा। और इसके अतिरिक्त यह बात भी है कि परस्पर दूरी पर स्थित भी तुम दोनों की प्रीति अब प्रलय ( मृत्यु ) पर्यंत वैसी ही स्थिर हो गयी है जैसी कि कमलिनी तथा कमलबन्धु सूर्य की और कुमुदिनी तथा कुमुदनाथ—चन्द्रमा की।

इसके पश्चात् कादम्बरी ने "सखि महाश्वेता, सारे सेवक वर्ग समेत यह ( कादम्बरी ) उस ( चन्द्रापीड ) के वश में ऐसे है जैसे कि उसकी अपनी अन्तरात्मा हो ( वह जैसा चाहे वैसा आदेश दे )। इस विषय में हमारे अनुरोध ( इच्छा ) की उसको क्या आवश्यकता है यह कह-

कुमारं स्वां भूमिम्' इत्यादिदेश। चन्द्रापीडोऽप्युत्थाय प्रणम्य प्रथमं महाश्वेतां ततः कादम्बरीं तस्याश्च प्रेमस्निग्धेन चक्षुषा मनसा च गृह्यमाणः 'देवि, किं ब्रवीमि। बहुभाषिणे न श्रद्दधाति लोकः। स्मर्तव्योऽस्मि परिजनकथासु' इत्यभिधाय कन्यकान्तःपुरान्निर्जगाम। कादम्बरीवर्जोऽशेषः कन्यकाजनो गुणगौरवाकृष्टः परवश इव तं व्रजन्तमा बहिस्तोरणादनुवव्राज। निवृत्ते च कन्यकाजने केयूरकेणोपनीतं वाजिनमारुह्य गन्धर्वकुमारकैस्तैरनुगम्यमानो हेमकूटात्प्रवृत्तो गन्तुम्। गच्छतश्चास्य चित्ररथतनया न केवलमन्तर्बहिरपि सैव सर्वाशानिबन्धनमासीत्। तथा हि—

---

यूयम्। किं कृत्वा। इत्यभिधायेत्युक्त्वा। इतिशब्दार्थमाह—हे सखि महाश्वेते, अयं मल्लक्षणः सपरिवारो जनः कुमारस्य स्वान्तरात्मेव स्वाधीनः स्ववशः। अतः कोऽत्रानुरोधः संकोचः। चन्द्रापीडोऽप्युत्थायोत्थानं कृत्वा प्रथममादौ महाश्वेतां प्रणम्य नमस्कृत्य ततस्तदनन्तरं कादम्बरीं प्रणम्य नमस्कृत्य तस्याः कादम्बर्याः प्रेमस्निग्धेन स्नेहचिक्कणेन चक्षुषा नेत्रेण मनसा च गृह्यमाणः इत्यभिधायोक्त्वा कन्यकान्तःपुरान्निर्जगाम निर्गतो बभूव। इतिशब्दार्थमाह—देवीति। हे देवि कादम्बरि, किं ब्रवीमि किं कथयामि। 'ब्रुवते हि फलेन साधवो न तु शब्देन' इति न्यायात्। अत्र हेतुमाह—यतो बहुभाषिणे वाचालाय लोको जनो न श्रद्दधाति न श्रद्धत्ते। अत उपसंहरति—परीति। परिजनकथासु निजसेवकवार्तासु स्मर्तव्यः स्मरणीयोऽस्मि। अहमिति शेषः। तदनन्तरं कादम्बरीवर्जोऽशेषः समग्रः कन्यकाजनो गुणगौरवेणाकृष्ट आकर्षितः परवश इव परायत्त इव तं चन्द्रापीडं व्रजन्तं गच्छन्तमा बहिस्तोरणाद् बहिर्द्वारं मर्यादीकृत्यानुवव्राज पृष्ठतो जगाम। तदनन्तरं निवृत्ते च पश्चाद्वलिते च कन्यकाजने केयूरकेणोपनीतमानीतं वाजिनमारुह्यारोहणं कृत्वा तैः पूर्वोक्तैर्गन्धर्वकुमारकैरनुगम्यमानो हेमकूटाद्गन्तुं प्रवृत्तः। गच्छतो व्रजतोऽस्य चन्द्रापीडस्य चित्ररथतनया कादम्बरी न केवलमन्तर्बहिरपि सैव कादम्बरी सर्वाशानिबन्धनं समग्राभिलाषाणां कारणमासीद् बभूव।

---

कर, (कुछ) गन्धर्वकुमारों को बुलाकर "राजकुमार को अपनी भूमि मे पहुँचा दो'—यह आज्ञा दी। चन्द्रापीड भी उठकर पहले महाश्वेता को और फिर कादम्बरी को प्रणाम करके, और उसकी प्रीति से आर्द्र (नम हुई) दृष्टि से तथा उसके (भद्र) मन से आकर्षित किया जाता हुआ "देवि, मैं भला क्या कहूँ? (क्योंकि) लोग बहुत बोलने वाले व्यक्ति पर विश्वास नहीं करते हैं, (केवल इतनी ही प्रार्थना है कि) सेवकों के विषय मे की गयी बातचीत मे मुझे स्मरण कर लेना।"—यह कह कर कन्याओं के अन्त पुर से निकल गया। कादम्बरी को छोड़ कर शेष सभी कन्यायें, उसके गुणों के प्रति आदर भावना से आकृष्ट हुई ही, मानो पराधीन (गुण अर्थात् रस्सी द्वारा खिंची हुई सी) हुई सी, जाते हुए उसके पीछे पीछे तोरण तक (बाह्य द्वार तक) गयीं। कन्याओं के लौट जाने पर केयूरक द्वारा लाये गये घोड़े पर चढ़कर गन्धर्व कुमारों द्वारा अनुगम्यमान वह हेमकूट से चलने लगा। और जाते हुए (घोड़े पर सवार होकर चलते हुए) इस चन्द्रापीड के उस सम्बन्धी विचारों से भरे हुए मनमें चित्ररथ-पुत्री (कादम्बरी) केवल अन्दर से ही सब आशाओं का आश्रय नहीं थी अपितु बाहर से

तन्मयेन मानसेनासह्यविरहदुःखानुशयलग्नामिव पृष्ठतः, कृतमार्गगमननिरोधामिव पुरस्तात्, वियोगाकुलहृदयोत्कलिकावेशात्क्षिप्तामिव नभसि सम्यगालोकयितु वदनम्, विरहातुरमानसामिवावस्थितामुरःस्थले, तामेव ददर्श। क्रमेण च प्राप्य महाश्वेताश्रममच्छोदसरस्तीरे सनिविष्टमिन्द्रायुधखुरपुटानुसारेणैवागतमात्मस्कन्धावारमपश्यत्। निवर्तिताशेषगन्धर्वकुमारश्च सानन्देन सकुतूहलेन सविस्मयेन च स्कन्धावारवर्तिना जनेन प्रणम्यमानः स्वभवनं विवेश। समानिताशेषराजलोकश्च वैशम्पायनेन पत्रलेखया च सहैव महाश्वेता, एव कादम्बरी, एव मदलेखा, एव

---

एतदेव दर्शयति—तथा हीति। तन्मयेन कादम्बरीमयेन मानसेन चित्तेन कृत्वासह्य न सोढु शक्य यद्विरहदु ख तस्यानुशय सतापस्तेन पृष्ठतो लग्नामिव, पुरस्तादग्रे कृतो मार्गगमनस्य निरोधो यया सैवविधामिव, वियोगेन विरहेणाकुल यद्धृदय चित्त तस्मिन्नुत्कलिका हल्लेखस्तस्या आवेशात्प्रवेशात्सम्यग्वदनमालोकयितु वीक्षितु नभसि व्योम्नि क्षिप्तामिव पर्यस्तामिव। विरहेण वियोगेनातुर पीडयितु मानस यस्या एवविधामिवोर स्थलेऽवस्थिताम्। तामेव कादम्बरीमेव ददर्शेक्षांचक्रे। क्रमेण परिपाट्या च महाश्वेताश्रम प्राप्यासाद्याच्छोदसर स्तीरे सनिविष्ट स्थापितमिन्द्रायुधखुरपुटानुसारेणैवागत प्राप्तमात्मन स्वस्य स्कन्धावार सैन्य निवेशमपश्यदैक्षत। निवर्तितेति। निवर्तिता पश्चाद्वालिता अशेषा समग्रा गन्धर्वकुमारा येनैवभूतश्च सानन्देन सप्रमोदेन। सेव प्रभुदर्शनादिति भाव। सकुतूहलेन कौतुकसहितेन। अत्यद्भुतगन्धर्वजनदर्शनात्। सविस्मयेन साश्चर्येण। तादृशमुक्ताप्रालम्बदर्शनात्। एवविधेन च स्कन्धावारवर्तिना जनेन प्रणम्यमानो नमस्क्रियमाण स्वभवन स्वगृह विवेश प्रवेश कृतवान्। समानित सस्तुतोऽशेष समग्रो राजलोको येनैवभूतश्च वैशम्पायनेन पत्रलेखया च सहैव महाश्वेता, एव कादम्बरी, एव मदलेखा, एव तमालिका, एव केयूरक, इत्यनयैव कथया वार्तया प्रायो बाहुल्येन दिवस वासरमनैषीत्। परिपूर्णीचकारेत्यर्थ। कादम्बर्या रूपदर्शन

---

भी सभी आशाओं ( दिशाओं ) मे व्याप्त थी। जैसे कि—उस ( से सम्बद्ध विचारों ) से भरे मन के द्वारा उसने असह्य वियोग-दु ख से उत्पन्न सन्ताप के कारण अपनी पीठ से मानो लगी हुई उसको ही देखा, सामने की ओर मानो मार्ग पर चलने की रुकावट को डाले हुई को देखा, चेहरे को भली भाँति देखने के लिए, वियोग से दु खी हृदय की लालसा ( उत्कण्ठा ) के बल द्वारा मानो उसको आकाश मे फेंकी हुई को देखा, मानो वियोग से दु खी मन वाली उसके वक्ष स्थल पर बैठी हुई को देखा। और क्रमश. महाश्वेता के आश्रम मे पहुँच कर, उसने अच्छोद सरोवर के तट पर ठहरी हुई केवल इन्द्रायुध के खुरों के चिह्नों के साथ साथ चलकर ही वहाँ तक पहुँची सेना को देखा।

और सभी गन्धर्व-युवकों को लौटाये हुआ, ( उसके लौट आने से ) आनन्दित हुए, उत्सुक हुए तथा आश्चर्यान्वित हुए सैन्यवर्ती लोगों द्वारा नमस्कार किया जाता हुआ अपने कक्ष ( तम्बू ) में घुस गया। फिर सभी ( उपस्थित ) राजपुत्रों का सम्मान कर लेने के पश्चात् वैशम्पायन तथा पत्रलेखा के साथ 'महाश्वेता ऐसी है, कादम्बरी ऐसी है, मदलेखा ऐसी है,

तमालिका, एव केयूरकः, इत्यनयैव कथया प्रायो दिवसमनैषीत्। कादम्बरीरूपदर्शनविद्विष्टेव नास्य पुरे प्रीतिमकरोद्राजलक्ष्मीः। तामेव च धवलेक्षणामाबद्धरणरणकेन[1] चेतसा चिन्तयतो जाग्रत एवास्य जगाम रात्रिः। अपरेद्युश्च समुत्थिते भगवति रवावास्थानमण्डपगतस्तद्गतेनैव मनसा सहसैव प्रतीहारेण सह संप्रविशन्तं केयूरकं ददर्श। दूरादेव च क्षितितलस्पर्शिना मौलिना कृतपादपतनम् 'एह्येहि' इत्युक्त्वा प्रथममपाङ्गविसर्पिणा चक्षुषा, ततो हृदयेन, ततो रोमोद्गमेन, पश्चाद्भुजाभ्या प्रधावितः प्रथितमालिलिङ्ग गाढम्। उपावेशयच्चैनमात्मनः समीप एव। पप्रच्छ

तेन विद्विष्टेव विद्वेष प्राप्तेव राजलक्ष्मीर्नास्य पुरेऽस्य शरीरे। 'घनो बन्ध पुर पिण्ड' इति कोश। प्रीतिमकरोत्। तामेव धवलेक्षणां कादम्बरीमाबद्धरणरणकेन निबद्धौत्कण्ठ्येन चेतसा चिन्तयतो ध्यायतो जाग्रत एव अस्य चन्द्रापीडस्य रात्रिर्जगाम। अपरेद्युश्चेति। अपरस्मिन्दिने भगवति रवौ समुत्थिते सति तद्गतेनैव कादम्बरीगतेनैव मनसास्थानमण्डपगत सहसैवातर्कित एव प्रतीहारेण सह सप्रविशन्त केयूरक ददर्शाद्राक्षीत्। दूरादेवेति। दूरादेव दर्शनमात्रादेव क्षितितल स्पृशतीत्येवशीलेन मौलिना मस्तकेन कृत पादपतन येन तम्, एह्येहीत्युक्त्वेत्यभिधाय। इद प्रीत्यतिशयनिवेदकम्। प्रथममादावपाङ्गविसर्पिणा नेत्रप्रान्तचारिणा चक्षुषा नेत्रेण, ततस्तदनन्तर हृदयेन स्वान्तेन, ततस्तदनन्तर रोमोद्गमेनोद्भूषणेन, तत पश्चाद् भुजाभ्यां बाहुभ्या प्रधावित उच्चलित प्रथित विख्यात गाढमत्यर्थमालिलिङ्गोपगूहितवान्। पुन केयूरकं आत्मन समीप एव आत्मीयासनाभ्यर्णं एवोपावेशयदस्थापयच्च। पुन स्मितसुधाधवलीकृतान्यक्षराणि यस्मिस्तत्क्षरत्स्नेहवद्य प्रीतिद्रवस्तन्मयमिव तन्निर्मितमिवैतादृश वचनमादृत आदरवान्पप्रच्छ। प्रश्न चकारेत्यर्थ। किं तदित्याह—केयूरकेति। हे केयूरक, कथय ब्रूहि। कुशलिनी

तमालिका ऐसी है, केयूरक ऐसा है इत्यादि'—इसी प्रकार की बात चीत मे व्यस्त रह कर उसने प्राय वह सारा दिन बिता दिया। राजलक्ष्मी ने ( चन्द्रापीड द्वारा ) कादम्बरी के सौन्दर्य का दर्शन कर लेने से मानो चिढी हुई ने ही इसमे पहले की सी प्रीति नहीं पायी। और उसने चमकीली ( धवल ) आँखों वाली उस कादम्बरी को ही अपने व्यग्रतायुक्त चित्त से सोचते हुए तथा जागते हुए ही रात बीत गयी। और अगले दिन भगवान् सूर्यदेव के उदित हो जाने पर, सभामण्डप मे पहुँचे हुए चन्द्रापीड ने अपने ( उस कादम्बरी मे ) गये हुए ( उसी का ध्यान करते हुए ) मन से, अचानक ही द्वारपाल के साथ प्रवेश करते हुए केयूरक को देखा। और दूर से ही धरातल को छुए हुए मस्तक से पादपतन किये हुए ( खूब सिर झुका कर उसके पाँवों में गिरे हुए ) केयूरक को 'आओ, आओ' यह कहकर उसकी ओर दौड़े हुए चन्द्रापीड ने पहले तो ( अपने ) अपाङ्ग भागों तक फैल कर पहुँची हुई आँखों से, फिर हृदय से, पुन. रोमाचों से, पश्चात् बाहुओं से मार्ग में ही उसका गाढ़ आलिङ्गन किया। और इसको अपने समीप ही बैठा लिया। और आदरवान् चन्द्रापीड ने मुस्कान की सुधा से ( बोलते समय ) श्वेत किये हुए अक्षरों वाले मानो उस रूप में बह निकलते प्रेम रस से ही बने हुए वाक्य में

१ रणरणकम् = परेशानी।

च स्मितसुधाधवलीकृताक्षरं क्षरत्प्रीतिद्रवमयमिव वचनमाहृतः—'केयूरक, कथय कुशलिनी देवी ससखीजना सपरिजना कादम्बरी भगवती महाश्वेता च' इति। असौ तु तेन राजसूनोः प्रीतिप्रकर्षजन्मना स्मितेनैव स्नपित इवानुलिप्त इव सद्य एवापगताध्वखेदः प्रणम्याहततरमवोचत्—'अद्य कुशलिनी, यामेव देवः पृच्छति।' इत्यभिधायापनीयार्द्रवस्त्रावगुण्ठित बिससूत्रसयतमुखमार्द्रचन्दनपङ्कन्यस्तबालमृणालवलयमुद्र नलिनीपत्रपुटमदर्शयत्। उद्घाट्य च तत्र कादम्बरीप्रहितान्यभिज्ञानान्यदर्शयत्। तद्यथा—मरकतहरिन्ति व्यपनीतत्वञ्चि चारुमञ्जरीभाञ्जि क्षीरीणि पूगीफलानि, शुककामिनीकपोलपाण्डूनि ताम्बूलीदलानि, हरचन्द्रखण्डस्थूलशकल च

---

क्षेमवती देवी ससखीजना सपरिजना कादम्बरी वर्तते। तथा महाश्वेता भगवती च। असौ त्विति। असौ केयूरकस्तु तेनानिर्वचनीयेन राजसूनोश्चन्द्रापीडस्य प्रीत्या प्रकर्षस्तस्माज्जन्मोपत्तिर्यस्यैवभूतेन स्मितेनैव स्नपित इव स्नान कारित इव, अनुलिप्त इव विलिप्त इव, सद्य इव तत्कालमेवापगतोऽध्वखेद पथश्रमो यस्य स प्रणम्य नमस्कृत्याहततरमत्यादरपूर्वकमवोचदब्रवीत्। अद्य कुशलिनी सा वर्तते, यामेव देव पृच्छतीत्यभिधायेत्युक्त्वापनीय दूरीकृत्यार्द्रवस्त्रेण स्तिमितांशुकेनावगुण्ठितमाच्छादित बिससूत्रेण मृणालतन्तुना सयतं बद्ध मुख यस्य तत्। आर्द्रचन्दनपङ्को न्यस्तो यस्मिन्नेतादृश बालमृणालवलय नवीनतन्तुलकटक तस्य मुद्रा यस्मिन्नेतादृश नलिनीपत्रपुटमदर्शयदीक्षणविषयमकारयत्। उद्घाट्योन्मुद्र्य तत्र तस्मिन्कादम्बरीप्रहितानि। राजपुत्रीप्रेषितान्यभिज्ञानानि चिह्नान्यदर्शयदवलोकनमकारयत्। तदेव दर्शयति—तद्यथेति। मरकतमश्मगर्भं तद्वद्धरिन्ति नीलानि व्यपनीतत्वञ्चि दूरीकृतत्वग्भागानि चार्वी या मञ्जरी तद्भाञ्जि क्षीरीणि क्षीरयुक्तान्येतादृशानि पूगीफलानि क्रमुकफलानि। तथा शुककामिनी कीरपत्नी

---

केयूरक से पूछा—केयूरक, बता अपनी सखियों समेत तथा अनुचरवर्ग के साथ कादम्बरी तथा भगवती महाश्वेता कुशलपूर्वक तो है ?" किन्तु केयूरक राजपुत्र के प्रेमाधिक्य से उत्पन्न हुई उस मुस्कराहट से ही मानो नहा गया हुआ तथा (उससे मानो) अनुलिप्त हुआ हुआ (इसी कारण) शीघ्र ही दूर हुई थकावट वाला प्रणाम करके और भी अधिक सम्मानपूर्वक बोला—"वह, जिसके विषय में महाराज इस प्रकार (इतनी कृपा पूर्वक) पूछ रहे हैं अब सकुशल है।" यह कह कर उस (केयूरक) ने, निकाल कर गीले वस्त्र से ढकी हुई,[1] मृणालतन्तुओं द्वारा बन्धे हुए मुख (ढक्कन) वाली, भीगे हुए चन्दनलेप पर लगायी गयी नये बिसतन्तुओं के छल्लों की छाप वाली, नलिनी के पत्तों की बनायी हुई पेटी को दिखाया। और उसको उघाड़ कर उसमें (रखे हुए) कादम्बरी द्वारा भेजे गए (प्रेम के) चिह्नों को दिखाया। वे चिह्न इस प्रकार थे—(कुछ) मरकत मणियों-सरीखी हरी, (कुछ) छिलका उतारी हुई तथा (कुछ) सुन्दर कोंपलों को सेवन करने वाली (अर्थात् सुन्दर कोंपलों में बन्द) रसीली सुपारियाँ थी,

---

१. 'अवगुण्ठनम्' पाठ हो तो 'गीले वस्त्र के आवरण को हटाकर' अर्थ होगा।

कर्पूरम्, अतिबहलमृगमदामोदमनोहरं च मलयजविलेपनम्। अब्रवीच्च—'चूडामणिचुम्बिना कोमलाङ्गुलिविनिर्गतलोहितांशुजालेनाञ्जलिना देवमर्चयति देवी कादम्बरी महाश्वेता च सकण्ठग्रहेण कुशलवचसा, पर्यस्तशिखण्डमाणिक्यज्योत्स्नास्नपितललाटेन च नमस्कारेण मदलेखा, क्षितितलघटितसीमन्तमकरिकाकोटिकोणेन सकलकन्यालोकश्च सचरणरजःस्पर्शेन च पादप्रणामेन तमालिका। संदिष्टं च तव महाश्वेतया—'धन्याः खलु ते येषां न गतोऽसि चक्षुषोरविषयम्। तथा नाम समक्षं भवतस्ते तुहिनशीत-

तस्याः कपोलौ तद्वत्पाण्डूनि श्वेतानि ताम्बूलीदलानि नागवल्लीपत्राणि। तथा हरस्येश्वरस्य यश्चन्द्रखण्डस्तद्वत्स्थूलं शकलं खण्डं तस्यैतादृशं कर्पूरं हिमवालुका। तथातिबहलोऽतिनिबिडो यो मृगमदामोदः कस्तूरीपरिमलस्तेन मनोहरं रुचिरं यन्मलयजविलेपनं चन्दनाङ्गरागः। एतद्दर्शनानन्तरमब्रवीदवोचत्। चकारः समुच्चयार्थः। कादम्बरी देव्यञ्जलिना बद्धपाणिपुटेन देवं भगवन्तमर्चयति पूजयति। अथाञ्जलिं विशिनष्टि—चूडेति। चूडामणिः शिरोमणिस्तच्चुम्बिना तत्स्पर्शिना कोमलाङ्गुलिभ्यो मृदुकरशाखाभ्यो विनिर्गमो यस्यैवंभूतं लोहितं रक्तमंशुजालं किरणसमूहो यस्मिन्स तेन। महाश्वेता च सकण्ठग्रहेण निगरणसहितेन कुशलवचसा मङ्गलवाक्येन देवमर्चयतीत्यस्य सर्वत्र संबन्धः। तथा मदलेखा नमस्कारेण प्रणामेन। कीदृशेन। पर्यस्तेति। पर्यस्तं पतितं यच्छिखण्डमाणिक्यं शिखारत्नं तस्य ज्योत्स्ना कान्तिस्तया स्नपितं क्षालितं ललाटमलिकं यस्मिन्स तेन। सकलकन्यालोकश्च क्षितितले घटितो लग्नः सीमन्तः केशेषु वर्त्म तस्य मकरिकाभरणविशेषस्तस्याः कोटेरग्रभागस्य कोणोऽश्रिर्यस्मिन्नेवंविधेन चरणरजःस्पर्शेन सहवर्तमानेन पादप्रणामेन तमालिका। तथा तव महाश्वेतया संदिष्टं कथितं वर्तते। तदेव दर्शयति—धन्या इति। खलु निश्चयेन। ते धन्या जनाः। यत्तदोर्नित्याभिसंबन्धादाह—येषामिति। येषां नृणां चक्षुषोर्नेत्रयोरविषयमगोचरं न गतोऽसि। तथा नाम भवतः समक्षं त्वत्प्रत्यक्षं ते तव गुणा औदार्यादयस्तुहिनं हिमं तद्वच्छीतलाः सुशीताश्चन्द्रमया

मैनाओं की गालों सरीखे पीले पान पत्र थे, शिवजी (के मस्तक पर) की चन्द्रापीड जितनी बड़ी कपूर (की पपड़ियाँ) थीं, और अत्यन्त समृद्ध (बहल) कस्तूरी सुगन्ध से रमणीय बना हुआ चन्दन-लेप था। और उसने कहा—"देवी कादम्बरी अपनी चूडामणि को स्पर्श किये हुई, कोमल अंगुलियों के मध्यान्तरों से निकले हुए लाल किरणसमूहों वाली अञ्जलि द्वारा (हाथों को जोड़ कर) आपको आदर प्रदान करती है, और महाश्वेता (आपकी) ग्रीवा का आलिङ्गन करती हुई कुशल-प्रश्न पूछ कर, मदलेखा खिसके हुए शिखरस्थ माणिक्य के मन्द प्रकाशमें नहाये हुए मस्तक से नमस्कार करके, और सारी कन्यायें सीमन्त पर पहने मकर आभूषण (मकरिका) की नोक के कोनों को धरातल पर खूब छुआ कर, तथा (आप के) पावों की धूलि का स्पर्श करती हुई, पावों में प्रणाम करके तमालिका आपके प्रति आदर प्रदर्शित करती है। और महाश्वेता ने आपको यह संदेश दिया है—"निश्चय ही वे जन धन्य हैं जिनकी आँखों के क्षेत्र में तुम नहीं आये हो। तुम्हारे वे गुण, जो तुम्हारे सामने वैसे (प्रकृष्ट रूप से) बर्फ-से शीतल और मानो चन्द्रमा के ही बने हुए से थे, अब तुम्हारी अनुपस्थिति में सूर्य के

लाश्चन्द्रमया इव गुणा विरहे विवस्वन्मया इव वृत्ताः। स्पृहयन्ति खलु जनाः कथमपि दैवोपपादितायामृतोत्पत्तिवासरायेवातीतदिवसाय। त्वया वियुक्तं निवृत्तमहोत्सवालसमिव वर्तते गन्धर्वराजनगरम्। जानासि च मां कृतसकलपरित्यागाम्, तथाप्यकारणपक्षपातिनं भवन्तं द्रष्टुमिच्छत्यनिच्छन्त्या अपि मे बलादिव हृदयम्। अपि च बलवदस्वस्थशरीरा कादम्बरी। स्मरति च स्मेरानन स्मरकल्प त्वाम्। अतः पुनरागमनगौरवेणार्हसीमां गुणवदभिमानिनीं कर्तुम्। उदारजनादरो हि बहुमानमारोपयत्यवश्यम्। सोढव्या चेयमस्मद्विधजनपरिचयकदर्थना कुमारेण। भवत्सुजनतैव

---

इव विरहे त्वद्वियोगे विवस्वन्मया इव दाहजनकत्वात्सूर्यमया इव वृत्ता सपन्ना। एतेन विरहाधिक्य सूचितम्। खलु निश्चयेन जनास्तन्नगरनिवासिनो लोका कथमपि महता कष्टेन दैवेन भाग्येनोपपादिताय विहितायामृतोत्पत्तिवासरायेव। यद्दिनेऽमृत समुत्पन्न समुद्राद् बहिर्निर्गत तस्मिन्दिने त्रिभुवन आनन्द समभूत्। अतोऽमृतोत्पत्तिवासरोपमानम्। अतीतदिवसाय पूर्वं यद्दिने त्वया सह सबन्ध समभूत्तद्वासराय स्पृहयन्ति वाञ्छन्ति। त्वया वियुक्त विरहित निवृत्तो दूरीभूतो यो महोत्सव क्षणस्तेनालसमिवालस्योपेतमिव गन्धर्वराजनगर वर्तते समस्ति। कृत इति। कृतो विहित सकलवस्तुन परित्यागो ययैवविधा मा महाश्वेता च त्वं जानासि, तथाप्यकारणेनानिमित्तेन पक्षपातिन साहाय्यकारिण भवन्त त्वा द्रष्टु वीक्षितुमनिच्छन्त्या अप्यवाञ्छन्त्या अपि मे मम हृदय बलादिव हठादिवेच्छति स्पृहयति। अपि चेति हेत्वन्तरे। बलवदतिशयेनास्वस्थ पीडायुक्त शरीर देहो यस्या सैवविधा कादम्बरी स्मेरानन विनिद्रमुख स्मरकल्प कदर्पतुल्य त्वा स्मरति गोचरीकरोति। अतो हेतो पुनर्द्वितीयवार यदागमनगौरव तेन कृत्वेमा कादम्बरीं गुणवत्स्वाभिमानो विद्यते यस्या एवंविधा कर्तुमर्हसि योग्यो भवसि। हि निश्चितम्। उदारजनेष्वादरोऽवश्य बहुमान सत्कारमारोपयति। इयमस्मद्विधजनपरिचय जनिता या कदर्थना सकोचलक्षणा सा च कुमारेण सोढव्या सहनीया। सदेशानौचित्यदोष

---

बने हुए-से हो गये हैं। निश्चय ही ( यहाँ के ) लोग उस बीते ( प्रसन्नता भरे ) दिन के लिये लालायित हैं जो किसी प्रकार भाग्य ( की कृपा ) द्वारा अस्तित्व में लाया गया था तथा जो अमृत की उत्पत्ति का ही दिन था। तुम्हारे विरह में गन्धर्वराज का नगर किसी बड़े उत्सव के अभी समाप्त होने पर नीरस नगर की भाँति नीरस हो गया है। मैंने सब कुछ त्याग दिया है—ऐसी मैं हूँ—यह आप जानते ही हैं, तो भी निष्कारण कृपालु तुम को, न चाहते हुए भी मेरा हृदय हठात् देखना चाहता है। इसके अतिरिक्त, कादम्बरी अत्यन्त अधिक अस्वस्थ ( शरीर वाली ) है। और कामदेवसदृश हसमुख तुमको स्मरण करती है। इस लिये तुम्हें चाहिये कि तुम इसको फिर आगमन ( दूसरी भेंट ) के सम्मान से ( का सम्मान देकर ) गुणी होने की गर्ववाली बनाओ—अर्थात् यह अनुभव करे कि मेरे में कुछ गुण हैं जिनके कारण तुम पुनः मिलने आये। क्योंकि सज्जनों द्वारा दिया गया आदर, अवश्य ही, मनुष्य को अपने प्रति अत्यन्त आदरवान् बना देता है। और हमारे सरीखों के परिचय से हुआ यह कष्ट ( अथवा यह नियन्त्रण ) तो कुमार को अवश्य ही सहन करना होगा। यह तुम्हारी ( अपनी ) सुजनता ही है कि

जनयत्यनुचितसदेशप्रागल्भ्यम्। एष देवस्य शयनीये विस्मृतः शेषो हार' इत्युत्तरीय-पटान्तसयत सूक्ष्मसूत्रविवरनिःसृतैरंशुसतानैः संसूच्यमान विमुच्य चामरग्राहिण्याः करे समर्पितवान्।

अथ चन्द्रापीडः 'महाश्वेताचरणाराधनतपःफलमिद यदेव परिजनेऽप्यनुस्मरणादिक प्रसादभारमतिमहान्तमारोपयति देवी कादम्बरी' इत्युक्त्वा तत्सर्वं शिरसि कृत्वा स्वयमेव जग्राह। तेन च कादम्बर्याः कपोललावण्येनेव गलितेन, स्मितालोकेनेव रसतामुपनीतेन, हृदयेनेव द्रुतेन, गुणगणेनेव विस्पन्दितेन, स्पर्शवता ह्लादिना सुरभिणा

---

परिहसन्नाह—भवदिति। भवतस्तव सुजनतैव सज्जनतैवानुचितोऽयोग्यो य सदेशस्तत्र प्रागल्भ्य पाण्डित्य जनयति निष्पादयति। एष देवस्य शयनीये शय्याया विस्मृतो विस्मरण प्राप्त शेषा भिधानो हार इत्युत्तरीयपट सव्यानपटस्तस्यान्तेन प्रान्ताञ्चलेन सयत बद्ध सूक्ष्म यत्सूत्रं तेषा विवराणि रोकाणि तेभ्यो नि सृतैर्विनिर्गतैरंशुसतानै किरणसमूहै ससूच्यमानमभिव्यज्यमान चामरग्राहिण्या करे विमुच्य समर्पितवान्प्रदत्तवान्।

अथेति। हारप्रदानानन्तर चन्द्रापीडस्तत्पूर्वप्रतिपादित शिरसि कृत्वा मस्तक आरोप्य स्वयमेवात्मनैव जग्राह गृहीतवान्। इतिशब्दार्थमाह—महाश्वेतेति। इदं महाश्वेतायाश्चरण योराराधन सेवन तल्लक्षण यत्तपस्तस्य फल यस्माद्धेतोरेवममुना प्रकारेण परिजनेऽपि सत्यप्यनुस्मरणादिकमतिमहान्त प्रासादभारमारोपयति देवी कादम्बरी। इत्युक्त्वेत्यभिधाय तत्पूर्वोक्त शिरसि कृत्वा मस्तक आरोप्य जग्राह गृहीतवान्। तेनेति। तेनानिर्वचनीयस्वरूपेण स्पर्शवता ह्लादिना प्रमोदकारिणा सुरभिणा सुगन्धेन विलेपनेन विलिप्य कण्ठे तमेव हारमकरोद्घटयत्। अथ श्वेतत्वसाम्याद्विलेपनमुत्प्रेक्षयन्नाह—कादम्बर्या इति। कादम्बर्या गलितेन च्युतेन कपोल लावण्येन च, तथा रसनामुपनीतेन द्रवता प्रापितेन स्मितालोकेनेवादृष्टदहास्यप्रकाशेनेव, द्रुतेन विलीनेन हृदयेनेव चित्तेनेव, विस्पन्दितेन प्रस्रवितेन गुणगणेनेव। अन्वयस्तु प्रागेवोक्त।

---

जिसने तुमको अनुचित सदेश भेजने की यह धृष्टता उत्पन्न की है। यह शय्या पर भूला हुआ 'शेष' नाम का तुम्हारा हार है।''—यह कह कर केयूरक ने उत्तरीय वस्त्र के एक कोने में बाधे हुए तथा बारीक सूत्रों के मध्यवर्ती छेदो से निकली हुई किरणधाराओं से सूचित किये जा रहे हार को निकालकर चामरग्राहिणी के हाथ पर रख दिया।

इसके पश्चात् चन्द्रापीड ने ''देवी कादम्बरी इस प्रकार सेवक भी मुझपर मेरे आने के पश्चात् मेरे स्मरण आदि की कृपा के बड़े भारी भार को जो मुझ पर रख रही है, वह यह सब महाश्वेता के चरणों की ( मेरे द्वारा की गयी ) पूजा व तपस्या का ही फल है''—यह कह कर उस सब को ( सारी वस्तुओं को ) स्वीकार करके स्वय ही ( अपने हाथ में ) ले लिया। और उस स्पर्श करने पर सुख देनेवाले, प्रसन्नतादायक तथा सुगन्धित चन्दन-विलेपन को, जो मानो चूआ हुआ कादम्बरी के कपोलों का सौन्दर्य ही था, अथवा द्रव बना हुआ उसके हास्य का प्रकाश ही था अथवा द्रव बना हुआ ( स्वय ) उसका हृदय ही था अथवा बहा हुआ उसके गुणो का समूह ही था—( अपने शरीर पर ) मलकर वही हार गले मे पहन लिया और फिर

च विलेपनेन विलिप्य तमेव कण्ठे हारमकरोत्। आगृहीतताम्बूलश्च मुहूर्तादिवोत्थाय वामबाहुना स्कन्धदेशेऽवलम्ब्य केयूरकमूर्ध्वस्थित एव कृतयथाक्रियमाणसमानमुदित प्रधानराजलोक विसृज्य शनैः शनैर्गन्धमादन करिण द्रष्टुमयासीत्। तत्र च स्थित्वा क्षणमिव तस्मै स्वयमेव निजनखांशुजालजटिल समृणालमिव शष्पकवलमवकीर्य वल्लभतुरगमन्दुराभिमुखः प्रतस्थे। गच्छंश्चोभयतः किंचित्किंचिदिव तिर्यग्वलित-वदनः परिजन विलोकयाबभूव। अथ चित्तज्ञैः प्रतीहारैः प्रतिषिद्धानुगमने निखिलेन समुत्सारिते परिजने केयूरकद्वितीय एव मन्दुरा प्रविवेश। उत्सारणभयसम्भ्रान्त-लोचनेषु प्रणम्यापसृतेषु मन्दुरापालेषु, इन्द्रायुधपृष्ठावगुण्ठनपट किंचिदेकपार्श्वे गलित

---

आगृहीतेति। आगृहीत ताम्बूल येन स तथा मुहूर्तादिवोत्थाय वामबाहुना केयूरक स्कन्धदेशेऽवलम्ब्यालम्बन विधायोर्ध्वस्थित एव कृत विहित यथाक्रियमाण पूर्वपरम्परया विधीयमानं संमानं तेन मुदित हर्षितमेवविध प्रधान प्रकृष्ट राजलोक सामन्तादिसेवकवर्ग विसृज्य गृहे गम्यतामित्युक्त्वा शनै शनैर्मन्दमन्द गन्धमादननामान करिण हस्तिन द्रष्टुमीक्षितुमयासीद-गमत्। तत्र चेति। गन्धमादनसमीपे क्षणमिव समयसदृश स्थित्वा तस्मै हस्तिने स्वयमेवात्म-नैव निजमात्मीयं यन्नखानामंशुजाल किरणपटल तेन जटिल व्याप्तम्। पाटलत्वसाम्यादाह—समृणालमिव बिसै सह वर्तमानमिव शष्पकवल नवतृणगुडेरकमवकीर्य पुरोऽवक्षिप्य वल्लभ प्रियो यस्तुरगोऽश्वस्तस्य मन्दुरा वाजिशाला तस्या अभिमुख संमुख प्रतस्थे चचाल। गच्छंश्च व्रजंश्चोभयतो द्वयो पार्श्वयो किंचित्तिर्यक्साचि विवलित वदन यस्य स। परिजन परिच्छदलोकं विलोकयांबभूवेक्षांचक्रे। अथेति। तन्निकटगमनानन्तर चित्तज्ञै प्रभोरभिप्रायविद्भि प्रती-हारैर्द्वारपालै प्रतिषिद्धं निवारितमनुगमनमनुयान यस्यैवंविधे निखिले समग्रे परिजने सेवकजने समुत्सारिते दूरीकृते सति केयूरक एव द्वितीयो यस्यैवंभूतश्चन्द्रापीडो मन्दुरां वाजिशाला प्रवि-वेश प्रवेश चकार। उत्सारण दूरीकरण तस्माद्भय तेन सम्भ्रान्तानि त्रस्तानि लोचनानि येषां तेषु

---

पान लिये हुए, मुहूर्तभर में ही ( थोड़ी सी देर में ही ) उठकर केयूरक के कन्धे को ( अपनी ) बाँयी भुजा में पकड़ कर, खड़ा हुआ ही, यथारीति किये गये आदर से प्रसन्न हुए प्रमुख राजाओं को छुट्टी देकर, गन्धमादन नाम के हस्ती को देखने के लिये, धीरे धीरे चला गया। और वहाँ थोड़ी ही देर ठहर कर और उसके लिये ( उसके सामने खाने के लिये ) स्वय ( अपने हाथों से ) ही, अपने नखों की किरणों के समूह से सम्मिश्रित होने के कारण मानो बिसतन्तुओं से भरे प्रतीत होते मुट्ठीभर घास को फैलाकर अपने प्रिय अश्व की अश्वशाला की ओर मुँह किये हुए चल पड़ा। और जाते हुए दोनों ओर कुछ कुछ फिराये हुए चेहरेवाले ने ( अपने ) सेवकवर्ग पर दृष्टि डाली।

इसके पश्चात् उसके मन को जाननेवाले द्वारपालों द्वारा जिनका अनुगमन रोक दिया गया ऐसे उन सभी सेवकों से हटा दिये जाने पर वह चन्द्रापीड केवल केयूरक को ही साथ लिये हुए अश्वशाला में प्रविष्ट हुआ। निकाले जाने के भय से डरे हुए नेत्रोंवाले अश्वपाल जब प्रणाम करके दूर चले गये तब, इन्द्रायुध की पीठ के आवरक वस्त्र को, जो एक ओर को कुछ

समीकुर्वन्नुत्सारयंश्च कूणितनेत्रत्रिभागस्य दृष्टिनिरोधिनीं कुङ्कुमकपिला केसरसटा खुरधारिणीविन्यस्तचरणो लीलामन्द मन्दुरादारुदत्तदेहभरः सकुतूहलमुवाच—'केयूरक, कथय मन्निर्गमादारभ्य को वा वृत्तान्तो गन्धर्वराजकुले, केन वा व्यापारेणावसरमतिनीतवती गन्धर्वराजपुत्री, किं वाकरोन्महाश्वेता, किमभाषत वा मदलेखा, के वाभवन्नालापाः, परिजनस्य भवतो वा को व्यापार आसीत्, आसीद्वा काचिदस्मदाश्रयिणी कथा'। केयूरकस्तु सर्वमाचचक्षे—'देव, श्रूयताम्। निर्गते त्वयि हृदयसहस्रप्रयाणपटहकलकलमिव नूपुरनवक्वणितेन कन्यकान्तःपुरे कुर्वन्ती देवी कादम्बरी सपरिजना सौधशिखरमारुह्य तुरगधूलिरेखाधूसरं देवस्यैव गमनमार्गमालोकितवती।

---

मन्दुरापालेषु प्रणम्यापसृतेषु दूरीभूतेषु सत्सु, इन्द्रायुधपृष्ठस्यावगुण्ठनपटमाच्छादनवस्त्रं किंचिदेकपार्श्वे गलितं स्रस्तं समीकुर्वन्स्वस्थाने नयन्कूणितनेत्रत्रिभागस्येन्द्रायुधस्य दृष्टिनिरोधिनीं दृष्टिबाधाकारिणीं कुङ्कुमवत्कपिला पिङ्गलां केसरसटा स्कन्धकेशश्रेणीमुत्सारयंश्चोच्चैः कुर्वं खुरधारिण्यां खुरबन्धनशङ्कौ विन्यस्तौ स्थापितौ चरणौ येन स लीलामन्दं यथा स्यात्तथा मन्दुरादारौ दत्तो देहभरो येन. स । सकुतूहलं सकौतुकं यथा स्यात्तथोवाचाब्रवीत्। हे केयूरक, कथय ब्रूहि मन्निर्गमान्मदीयचलनादारभ्य गन्धर्वराजकुले को वा वृत्तान्त उदन्त । केन व्यापारेणावसरं समयं गन्धर्वराजपुत्री कादम्बर्यतिनीतवत्यतिक्रान्तवती। किं वा महाश्वेताकरोदन्वतिष्ठत्। वेति विकल्पार्थं सर्वत्र। मदलेखा किमभाषत किमवोचत्। के वालापा वचनव्यापारा अभवन्। परिजनस्य परिच्छदस्य भवतो वा को व्यापारो व्याकृतिरासीदभवत्। काचिदस्मदाश्रयणी कथा वार्तासीत्। केयूरकस्तु सर्वं प्राणविपर्यीकृतमाचचक्षे कथयामास। देवेति। देव श्रूयतामाकर्ण्यताम्। त्वयि निर्गते चलिते सति नूपुराणां पादकटकाना नवक्वणितेनाभिनवशब्दितेन हृदयाना सहस्राणि तेषां प्रयाण प्रस्थान तत्र य पटहस्य कलकल कोलाहलस्तमिव कन्यकान्त पुरे कुर्वन्ती सृजन्ती देवी कादम्बरी सपरिजना सपरिच्छदा सौधशिखरं गृहाधित्यकामारुह्यारोहणं कृत्वा तुरगास्याश्वस्य धूलिरेखा रज पङ्क्तिस्तया धूसरं मलिनं देवस्यैव भवत एव गमनमार्गमालो-

---

खिसक गया था, ठीक सम करता हुआ, और टेढे किये नेत्रवाले इन्द्रायुध की दृष्टि को रोकनेवाली केसर सरीखी लाल पीली सटा के हटाता हुआ, खुर बाँधने की खूँटी पर पैर रखे हुए, सजीलेपन से धीरे धीरे अश्वशाला के काष्ठस्तम्भ पर अपने शरीर का भार रखा हुआ ( अर्थात् स्तम्भ के सहारे खड़ा हुआ ) उत्सुकतापूर्वक केयूरक से बोला—"केयूरक, बता मेरे (वहाँ से) निकलने पर राजभवन में क्या कुछ बीता ? गन्धर्वराज की पुत्री ( कादम्बरी ) ने दिन किस काम में (लगी रह कर) बिताया ? महाश्वेता ने क्या कुछ किया ? मदलेखा ने क्या कुछ कहा ? सेवकों की क्या बातें हुई ? और तूने स्वय क्या कुछ किया ? क्या कोई मेरे सम्बन्ध की बात भी हुई या नहीं ?

उधर केयूरकने सब कुछ बतलाया—"राजकुमार सुनिये ! आपके चल देने पर, कन्याओं के अन्त'पुर में नूपुरों की अनोखी टनटनाहट से मानो सहस्रों हृदय के ( आपके साथ ) प्रस्थान सूचक का दुन्दुभि का शोर करती हुई कादम्बरी अपने सेवकजनों के साथ महल की

तिरोहितदर्शने च देवे मदलेखास्कन्धनिक्षिप्तमुखी प्रीत्या तं दिगन्तं दुग्धोदधिधवलैः प्लावयन्तीव दृष्टिपातैः सितातपत्रापदेशेन शशिनेवेर्ष्यया निवार्यमाणरविकिरणस्पर्शा सुचिरं तत्रैव स्थितवती। तस्माच्च कथमपि सखेदमवतीर्य क्षणमिवावस्थानमण्डपे स्थित्वोत्थाय स्खलनभियेव निवेद्यमानोपहारकुसुमाशब्दायमानैर्मधुकरैः, जलधाराधवलनखमयूखोन्मुखानामनुगलं गलद्भिर्वलयैः कण्ठबन्धानिवोपपादयन्ती केकारवोद्विग्ना भवनशिखण्डिनाम्, पदे पदे च कुसुमधवलान्करेण लतापल्लवान्मनसा च देवस्य गुणगणानवलम्बमाना तमेव क्रीडापर्वतकमागतवती यत्र स्थितवान्देवः। तमुपेत्य च

---

कितवती। तिरोहितमदृश्यीभूतं दर्शनं वीक्षणं यस्यैवंभूते च देवे मदलेखाया स्कन्धोऽसस्तत्र निक्षिप्तं स्थापितं मुखमाननं यया सैवंविधा प्रीत्या स्नेहेन दुग्धोदधिः क्षीरोदधिस्तद्वद्धवलैः शुभ्रैर्दृष्टिपातैस्तं दिगन्तं प्लावयन्तीव क्षालयन्तीव सितं शुभ्रं यच्चातपत्रं छत्रं तस्यापदेशेन व्याजेन। शुक्लत्ववर्तुलत्वसाम्यादाह—शशीति। शशी चन्द्रस्तेनेवेर्ष्यया स्पर्धया निवार्यमाणो दूरीक्रियमाणो रविकिरणानां सूर्यकिरणानां स्पर्शो यस्याः सैवंभूता सती सुचिरं चिरकालं तत्रैव सौधशिखरे स्थितवत्यवस्थानं कृतवती। तस्माच्च सौधशिखरात्सखेदं यथा स्यात्तथावतीर्यावतरणं कृत्वा क्षणमिवावस्थानमण्डपे स्थित्वोत्थाय स्खलनभियेव पतनभयेनेवोपहारस्य कुसुमानि तेष्वासमन्ताच्छब्दायमानैः शब्दं कुर्वाणैर्मधुकरैर्भ्रमरैर्निवेद्यमानेव विज्ञप्तिविषयीक्रियमाणेव। जलधारावद्धवलानां शुभ्राणां नखमयूखानां पुनर्भवकान्तीनामुन्मुखानां सम्मुखानामनुगलं निगरणमनुलक्षीकृत्य गलद्भिः पतद्भिर्वलयैः कटकैः करणभूतैर्भवनशिखण्डिनां गृहमयूराणां केकारवेणोद्विग्नोद्वेगं प्राप्ता सती कण्ठबन्धानुपपादयन्तीव रचयन्तीव। करेण हस्तेन पदे पदे च कुसुमधवलान्पुष्पवच्छुभ्राल्लतापल्लवान्वल्लीकिसलयानि मनसा च देवस्य भवतो गुणगणान्गुणसमूहानवलम्बमानावलम्बनं कुर्वाणा तमेव पूर्वोक्तमेव क्रीडापर्वतकमागतवती। यत्रेति।

---

छत पर चढ़कर घोड़ों द्वारा उठायी गयी धूल की रेखा से धूसर हुए, आपके ही जाने के मार्ग को देखती रही। जब आप अदृश्यदर्शन हो गये तब मदलेखाके कन्धे पर अपना मुँह डाले हुई, (अपनी) दुग्धसागर के समान सफेद चितवनों द्वारा उस दिक्प्रदेश को मानो श्वेत करती हुई तथा श्वेत छत्र के बहाने मानो चन्द्रमा ही के द्वारा सूर्य के करों (किरणों, हाथों) का स्पर्श जिसका हटाया जा रहा हो—ऐसी, बहुत देर तक वहीं बैठी रही। और उस (छत) से बड़े कष्टपूर्वक, बड़ी उदासी के साथ, उतर कर, थोड़ी सी देरतक सभाभवन में विश्राम करके, उठकर, (उनपर पैर पड़ने से) यह कहीं गिर न पड़े इस भय से ही मानो (उनपर) गुजारते हुए भौंरों द्वारा पूजार्थ (रखे हुए) फूलों की सूचना दी जाती हुई, (आपसे वियोग होने पर) भवन के (पालतू) मयूरों की केकाध्वनिसे उद्विग्न हुई, (मानो उनको चुप करने के लिये ही) जलधारा के सदृश नखकिरणों की ओर मुँह किये हुए मयूरों की गर्दनों को लक्ष्य करके गिरते हुए कंकणों द्वारा ही मानों उनके गलों में बन्धन डालती हुई, और कदम-कदम पर हाथ से फूलों से श्वेत हुए बेलों के पत्तों का तथा मन से आपके गुण-समूहों को सहारा लेती हुई, जहाँ आप बैठे थे, उसी क्रीडापर्वत पर पहुँच गयी। और वहाँ पहुँच कर—"यहाँ

'देवेनात्र मरकतशिलामकरिकाप्रणालप्रस्रवणसिच्यमानलतामण्डपे सीकरिणि शिलातले स्थितम्, अत्र गन्धोदकपरिमललीनालिजालजटिलशिलाप्रदेशे स्नातम्, अत्र कुसुमधूलिसिकतिले गिरिनदिकातटे भगवानर्चितः शूलपाणिः, अत्र ह्रेपितशशधररोचिषि स्फटिकशिलातले भुक्तम्, अत्र सङ्क्रान्तचन्दनरसलाञ्छने मुक्ताशैलशिलापट्टे सुप्तम्' इति परिजनेन पुनरुक्त निवेद्यमानानि देवस्यैव स्थानचिह्नानि पश्यन्ती क्षपितवती दिवसम्। दिवसावसाने च कथमपि महाश्वेताप्रयत्नादनभिमतमपि तस्मिन्नेव स्फटिकमणिशिलावेश्मन्याहारमकरोत्। अस्तमुपगते च भगवति रवावुदिते चन्द्रमसि

यस्मिन्स्थले देवो भवान्पूर्वं स्थितवान्। त क्रीडाचलमुपेत्यागत्य च। अत्र सीकरा विद्यन्ते यस्मिन्नेवविधे शिलातले देवेन स्थितमासितम्। कीदृशे। मरकतस्य शिला तस्या मकरिका प्रणालो मकरमुखो जलमार्गस्तस्य प्रस्रवणेन सिच्यमानो लतामण्डपो यस्य तत्तस्मिन्। अत्रेति। अस्मिन्गन्धोदकस्य सुगन्धजलस्य य परिमलस्तेन लीना लग्ना येऽलयो भ्रमरास्तैर्जटिलो व्याप्त शिलाप्रदेशस्तस्मिन्स्नात कृताप्लवम्। अत्रेति। अस्मिन्कुसुमाना धूल्या परागेण सिकतिले सिकतायुक्ते गिरिनदिकातटे भगवाञ्शूलपाणिरर्चित पूजित। अत्रेति। अस्मिन्ह्रेपिता लज्जिता शशधरस्य रोचिर्येन तस्मिन्स्फटिकशिलातले भुक्तम्। अत्रेति। अस्मिन्सङ्क्रान्त प्रतिबिम्बितो यश्चन्दनरस स एव लाञ्छन चिह्न यस्मिन्नेवविधे मुक्ताशैलशिलापट्टे सुप्तमिति परिजनेन पार्श्ववर्तिसेवकलोकेन देवस्य भवत एव स्थानचिह्नानि। पुनरुक्त पृथक्पृथङ्निवेदनादिति भाव। निवेद्यमानानि कथ्यमानानि पश्यन्ती विलोकयन्ती दिवस वासर क्षपितवती क्षय नीतवती। दिवसावसाने च दिनप्रान्ते च कथमपि महता कष्टेन महाश्वेताप्रयत्नादनभिमतमप्यसमीहितमपि तस्मिन्नेव स्फटिकमणिशिलावेश्मन्याहार भोजनमकरोदकल्पयत्। अस्तमिति। अस्तमुपगते प्राप्ते च भगवति माहात्म्यवति रवौ सूर्ये, चन्द्रमसि कुमुदबान्धव उदित उदय प्राप्ते सति,

राजकुमार मरकतशिलाओं से बनी मछली के आकार की जल प्रणाली[1] ( मोरी ) के जल प्रवाह द्वारा सींचे जा रहे लताकुञ्ज में फुहारों से युक्त शिलातल पर बैठे थे, यहाँ, राजकुमार ने ( स्नानार्थप्रयुक्त ) सुगन्धित जल की सुगन्ध के कारण इसपर चिपके ( लीन ) भौरों के समूह से खूब घिरे शिला-प्रदेश पर स्नान किया था, यहाँ, पुष्पों की धूलि से रेतीले, छोटी पहाड़ी नदी के तट पर भगवान् शिवजी की पूजा की थी, यहाँ ( अपनी चमक से ) चन्द्रमा की ज्योत्स्ना को लजाने वाले स्फटिकनिर्मित शिलातल पर राजकुमार ने खाना खाया था, यहाँ, ( उसके शरीर से ) स्थानान्तरित चन्दन लेप चिह्न वाली चौड़ी शिला पर, राजकुमार सोये थे"—इन शब्दों में सेवकों द्वारा आवश्यकता से अधिक बार बतलाये गये आपके ही चिह्नों को देखती हुई उसने दिन बिता दिया। दिन का अन्त हो जाने पर, बड़ी कठिनता से महाश्वेता की प्रेरणा ( अक्षरार्थ—उद्योग ) से उसी स्फटिकशिला पर ( बैठी हुई ने ) इच्छा न होते हुए भी भोजन किया। सूर्य भगवान् के अस्त हो जाने पर तथा चन्द्रमा के उदित हो

1 मकरिका प्रणाली।

तत्रैव कञ्चित्कालं स्थित्वा चन्द्रकान्तमयीव चन्द्रोदये प्रत्यार्द्रीकृततनुश्चन्द्रबिम्बप्रवेश-भयेनेव करौ कपोलयोः कृत्वा किमपि चिन्तयन्ती मुकुलितेक्षणा क्षणमात्रं स्थित्वोत्थाय विमलनखविपतितशशिप्रतिमाभरगुरूणीव कृच्छ्रादुत्क्षिपन्ती लीलामन्थरगमनपटूनि पदानि शय्यागृहमगात्। शयननिक्षिप्तगात्रयष्टिश्च ततःप्रभृति प्रबलया शिरोवेदनया विचेष्टमाना दारुणेन च दाहरूपिणा ज्वरेणाभिभूयमाना केनाप्याधिना मङ्गलप्रदीपैः कुमुदाकरैश्चक्रवाकैश्च सार्धमनिमीलितलोचना दुःखदुःखेन क्षणदामनैषीत्। उषसि च मामाहूय देवस्य वार्ताव्यतिकरोपालम्भाय सोपालम्भमादिष्टवती।

---

तत्रैव तस्मिन्प्रदेशे कञ्चित्कालं स्थित्वावस्थानं कृत्वा चन्द्रकान्तश्चन्द्रमणिस्तन्मयीव अतएव चन्द्रोदये प्रत्यार्द्रीकृता तनुर्यस्या सा तथा चन्द्रबिम्बस्य य प्रवेशस्तस्य भय तेनेव कपोलयो करौ कृत्वा किमपि चिन्तयन्ती ध्यायन्ती मुकुलितेक्षणा कुड्मलितलोचना क्षणमात्र स्थित्वा तत उत्थाय। विमलेति। विमला निर्मला ये नखास्तेषु निपतिता या शशिप्रतिमाश्चन्द्रप्रतिबिम्बानि तासा भरस्तेन गुरूणीव लीलामन्थर यद्गमन तत्र पटूनि पदानि चरणन्यासानि कृच्छ्रात्कष्टादुत्क्षिपन्त्युत्क्षेप कुर्वन्ती शय्यागृह शयनसद्मा-गादगमत्। शयने तल्पे निक्षिप्ता स्थापिता गात्रयष्टिर्यया सैवविधा च। तत प्रभृति तद्दिनादारभ्य प्रबलया तीव्रया शिरोवेदनया विचेष्टमाना व्याकुलीक्रियमाणा दाहरूपिणा दारुणेन तीव्रेण च ज्वरेण तापेनाभिभूयमाना पराभूयमाना केनाप्याधिना मानसीव्यथया मङ्गलप्रदीपै कुमुदाकरैश्चक्रवाकैश्च सार्धमनिमीलितेऽमुद्रिते लोचने यस्या सा तथा। अथ कुमुदानां रात्रौ विकासाच्चक्रवाकानां च वियोगवशादनिमीलनमिति भाव। दु खदु खेन। अतिदु खेनेति भाव। क्षणदा रात्रिमनैषीद्यापयद्गमयामास। उषसि च प्रभाते मामाहूयाह्वान कृत्वा देवस्य वार्ताव्यतिकरेण भवद्वृत्तान्तसमूहेन हेतुभूतेन उपालम्भाय सोपालम्भ यथा स्यात्तथादिष्टवती कथितवती।

---

जाने पर वह कुछ देर तक वहीं बैठी रही मानो कि वह चन्द्रकान्त मणि से बनी हो। चन्द्रोदय हो जाने पर गीले किये हुए शरीर वाली (वस्तुत पसीने से तर शरीर वाली), मानो कि चन्द्रबिम्ब के (अपने भीतर) प्रविष्ट हो जाने (प्रतिबिम्बित हो जाने) के भय से अपने दोनों हाथों को दोनों गालों पर रखकर कुछ सोचती हुई, आँखें बन्द किये हुए कुछ देर बैठी रही, फिर उठकर स्वच्छ नखों में गिरी चन्द्र की प्रतिमा (प्रतिबिम्बित चन्द्रबिम्ब) के भार से ही मानो भारी हुए, सजीलेपन से धीमे पदन्यास करने में अभ्यस्त पाँवों को बड़ी कठिनता से उठाती हुई, शयन-कक्ष में गयी। अपनी गात्रयष्टि—पतली दुबली देह—को शय्या पर फेंक कर, तब से लेकर प्रबल सिर दर्द से छटपटाती हुई और कठोर दाहात्मक ज्वर से आक्रान्त हुई किसी प्रकार के मानसिक रोग से अत्यन्त दु खिता आँखें बन्द किये हुई उसने (रातभर जलते रहे) मागलिक दीपकों के साथ, (रातभर खिलते रहे) रात्रि-कमलों के साथ और (रात भर जागते हुए) चक्रवाक पक्षियों के साथ रात्रि बितायी। और प्रात'काल होने पर उसने मुझे बुलाकर आपके समाचार का विवरण प्राप्त करने के लिये उलहना देते हुए आज्ञा दी।"

चन्द्रापीडस्तदाकर्ण्य जिगमिषुः 'अश्वोऽश्वः' इति वदन्भवनान्निर्ययौ। आरोपितपर्याणं च त्वरिततुरगपरिचारकोपनीतमिन्द्रायुधमारुह्य, पश्चादारोप्य पत्रलेखाम्, स्कन्धावारे संस्थापयित्वा वैशम्पायनम्, अशेषपरिजनं निवर्त्य च, अन्यतुरगारूढेनैव केयूरकेणानुगम्यमानो हेमकूटं ययौ। आसाद्य च कादम्बरीभवनद्वारमवततार। अवतीर्य द्वारपालार्पिततुरङ्गः कादम्बरीप्रथमदर्शनकुतूहलिन्या च पत्रलेखया चानुगम्यमानः प्रविश्य 'क्व देवी कादम्बरी तिष्ठति' इति संमुखागतमन्यतमं वर्षधरमप्राक्षीत्। कृतप्रणामेन च तेन 'देव, मत्तमयूरस्य क्रीडापर्वतकस्याधस्तात्कमलवनदीर्घिकातीरे विरचितं हिमगृहमध्यास्ते' इत्यावेदिते केयूरकेणोपदिश्यमानवर्त्मा प्रमदवनमध्येन गत्वा किंचिदध्वानं मरकतहरितानां कदलीवनानां प्रभया शष्पीकृत-

चन्द्रापीडस्तदाकर्ण्य श्रुत्वा जिगमिषुर्गन्तुमिच्छुरश्वोऽश्व इति वदन्ब्रुवन्भवनाद्गृहान्निर्ययौ निर्जगाम। आरोपितं स्थापितं पर्याणं पल्ययनं यस्मिन्नेतादृशं त्वरितं शीघ्रं तुरगपरिचारकेणोपनीतमिन्द्रायुधमारुह्यारोहणं कृत्वा पत्रलेखां पश्चात्पृष्ठभागं आरोप्य स्थापयित्वा स्कन्धावारे सैन्यवेशे वैशम्पायनं संस्थापयित्वाशेषपरिजनं समग्रपरिच्छदं निवर्त्य पश्चाद्व्याघुट्यान्यतुरगारूढेनैव केयूरकेणानुगम्यमानो हेमकूटं ययौ। कादम्बरीभवनद्वारमासाद्य प्राप्यावततारोत्तीर्णवाश्च। अश्वादिति शेषः। अवतीर्य च द्वारपालस्यार्पितस्तुरङ्गो येन स तथा कादम्बर्या यत्प्रथमदर्शनं तत्र कुतूहलं विद्यते यस्या एवंविधया पत्रलेखयानुगम्यमानः प्रविश्य क्व देवी कादम्बरी तिष्ठतीति संमुखागतमन्यतमं वर्षधरं कञ्चुकिनमप्राक्षीत्पप्रच्छ। तेन कृतप्रणामेन चेत्यावेदिते कथिते सति। इतिशब्दद्योत्यमाह—देवेति। हे देव, मत्तमयूरकाभिधानस्य क्रीडापर्वतकस्याधस्तादधोभागवर्तिनि कमलवनदीर्घिकातीरे विरचितं हिमगृहमध्यास्तेऽधितिष्ठति। 'उपान्वध्याङ्वसः' इत्यधिकरणे द्वितीया। केयूरकेणोपदिश्यमानं प्रदर्श्यमानो वर्त्म मार्गो यस्य स तथा प्रमदवनमध्येन किंचिदध्वानं मार्गं गत्वा मरकतवद्धरितानां नीलानां कदलीवनानां रम्भाकाननानां प्रभया कान्त्या शष्पीकृतानि बालतृणीकृतानि रविकिरणानि

यह सुनकर (तत्काल) जाना चाहता हुआ चन्द्रापीड 'अश्व अश्व' यह चिल्लाता हुआ भवन (मण्डप) से बाहर निकला। और काठी (पीठ) पर रखाये हुए, हड़बड़ाते सेवक द्वारा लाये गये इन्द्रायुध पर चढ़कर अपने पीछे पत्रलेखा को चढ़ाकर, वैशम्पायन को सेना की अध्यक्षता में स्थापित कर (सेना का अध्यक्ष बनाकर), और सारे सेवकों को लौटा कर दूसरे अश्व पर सवार केयूरक द्वारा ही अनुगम्यमान हेमकूट की ओर चल पड़ा। और कादम्बरी के भवन के दरवाजे पर पहुँच कर अश्व से उतरा। उतर कर, दरबानों को अश्व सौंप कर कादम्बरी के सबसे पूर्व दर्शन करना चाहती हुई पत्रलेखा द्वारा अनुगम्यमान घरमें प्रविष्ट हो गया। और प्रविष्ट होकर उसने सामने आये हुए कञ्चुकी से पूछा—राजकुमारी कादम्बरी कहाँ है?" "राजकुमार! मत्तमयूर नामक क्रीडा पर्वत के नीचे, कमलों वाली (कमलों से भरी) बावड़ी के किनारे पर बनाये गये हिमगृह में है"—नमस्कार करके उसके यह बताने पर, केयूरक द्वारा बताये गये मार्ग वाले चन्द्रापीड ने प्रमदवन में से कुछ मार्ग पर चल कर, मरकतमणि के

रविकिरण हरितायमान दिवस ददर्श। तेषा च मध्ये निरन्तरनलिनीदलच्छन्न हिमगृहमपश्यत्। तस्माच्च निष्पतन्तमार्द्रांशुकच्छलेनाच्छोदजलेनेव सवीतम्, बाहुलताविधृतैर्मृणालवलयैराभरणकैरिव धवलितावयवम्, आपाण्डुभिश्चैकश्रवणाश्रयैस्ताडङ्कीकृतैः केतकीगर्भदलैरुपहसितदन्तपत्रम्, आलिखितचन्दनललाटिकानि मुखारविन्दानि बद्धसौभाग्यपट्टानीव दधानम्, कृतचन्दनबिन्दुविशेषकाश्च दिवापि स्पर्शलोभस्थितेन्दुप्रतिबिम्बानिव कपोलानुद्वहन्तम्, अपहृताशेषशिरीषसौभाग्याभिः

---

सूर्यरश्मयो यस्मिन्नत एव हरितायमान नीलायमान दिवस दिन ददर्शेक्षाचक्रे। तेषा च कदलीवनाना मध्ये निरन्तर नलिनीदलै कमलिनीपत्रैश्छन्नमाच्छादित हिमगृहमपश्यदैक्षत। तस्माच्च गृहान्निष्पतन्त बहिर्गच्छन्त कादम्बर्या शरीरपरिचारक परिजनमद्राक्षीद्दृष्टवान्। अथ तस्या परिचारक विशेषयन्नाह—आर्द्रेति। आर्द्रं स्तिमितं यदशुक वस्त्रं तस्य च्छलेन। श्वेताह्लादकत्वसाम्यादाह—अच्छोदेति। अच्छोदजलेनेव संवीत रुद्धम्। 'सवीत रुद्धमावृतम्' इति कोश। बाहुलताविधृतैर्भुजलतास्थापितैर्मृणालवलयैस्तन्तुलकटकैराभरणकैरिव विभूषणैरिव धवलीकृता शुभ्रीकृता अवयवा अपघना यस्य स तम्। आपाण्डुभिरीषच्छ्वेतैरेकश्रवण एवैककर्ण एवाश्रयोऽधिकरण येषा तैस्ताडङ्कीकृतैस्ताडपत्रीकृतैरेवंविधै। केतकीगर्भदलैरुप हसितानि दन्तपत्राणि येन स तम्। पुन किं कुर्वाणम्। दधान बिभ्राणम्। कानि। मुखान्येवारविन्दानि कमलानि। कीदृशानि। आलिखिता चन्दनस्य मलयजस्य ललाटिका पुण्ड्रविशेषो येषु तानि। विविधवर्णसाम्याद्बद्धसौभाग्यपट्टानीव। कृतेति। कृता विहिता चन्दनबिन्दुभिर्विशेषका येषु तान्। 'चित्र पुण्ड्रविशेषका' इति कोश। दिवापि दिवसेऽपि स्पर्शलोभेन स्थित इन्दुप्रतिबिम्बो येष्वेवविधानिव कपोलानुद्वहन्तम्। अपेति। अपहृत

---

के समान हरे केले के वृक्षों की हरी चमक से (हरी) घास की कोमल पत्तियों में परिणत किरणों वाले, हरे हरे प्रतीत होते, दिन को देखा। उन कदली वृक्षों के बीच, सघनतया नलिनी के पत्तों से ढके हुए हिम गृह को देखा। और उसने उस (हिमगृह) से निकलती हुई शीतप्रद चिकित्सा करने में निपुण, (कादम्बरी) के शरीर की शुश्रूषा करने वाले, उसके शरीर सरीखे ही (अपनी स्वामिनी के इतने प्यारे कि लगभग उसके शरीर ही प्रतीत होते) (अथवा लगभग अपने शरीरों मे—वस्त्र न पहने हुए—ही दिखाई देते) सेवकों को भी देखा, (पहने हुए) गीले वस्त्रों के बहाने मानो वे अच्छोद के जल से वेष्टित थे अर्थात् जल की ही पोशाक पहने हुए थे, अपनी लता सरीखी भुजाओं पर पहने हुए मृणाल-कङ्कणों के द्वारा उनके शरीर मानो आभूषणो से ही श्वेत हो रहे थे, केवल एक ही कान का आश्रय लिये हुए (एक ही कान पर पहने हुए) ताडङ्क आभूषण बनाये हुए कुछ-कुछ पीले पड़े हुए केतकी की भीतरी पखुड़ियों से उन्होंने दन्तपत्र नाम के आभूषणों को लज्जित किया हुआ था, वे ऐसे कमलसदृश मुखड़ों को धारण किये हुए थे कि जिनके मस्तकों पर चन्दन से ललाटिकाचिह्न (आयताकार श्वेत चिह्न) बनाये हुए थे और इसलिये मानो उन पर मांगलिक श्वेत रेशमी पट्टियाँ बँधी हुई थीं, वे ऐसे कपोलों को वहन कर रहे थे—(ऐसी गालों वाले थे) जिन पर चन्दन की बिन्दुओं रूप तिलक

शैवलमञ्जरीभिः कृतकर्णपूरम्, कर्पूरधूलिधूसरेषु मलयजरसलवलुलितेषु बकुलावलीवलयेषु स्तनेषु न्यस्तनलिनीपत्रप्रावरणम्, अनवरतचन्दनचर्चाप्रणयनपाण्डुरैः सतापरोषमृदितारक्तचन्द्रकरैरिव करैः कल्पितमृणालदण्डानि बिसतन्तुमयानि चामराणि बिभ्राणम्, उन्नालैश्च कमलैः कुमुदैः कुवलयैः किसलयैः कदलीदलैः कमलिनीपलाशैः कुसुमस्तबकैश्चातपत्रीकृतैर्निवारितातपम्, जलदेवतानामिव समूहम्, वरुण

---

दूरीकृतमशेष समग्र शिरीषस्य वृक्षविशेषस्य सौभाग्य याभिरेवभूताभि शैवलमञ्जरीभिर्जलशूकवल्लरीभि कृत कर्णपूरो येन स तम्। स्तनेषु कुचेषु न्यस्त स्थापित नलिनीपत्राणा प्रावरणमुत्तरीयक येन स तम्। अथ च स्तन विशेषयन्नाह—कर्पूरेति। कर्पूरस्य घनसारस्य धूली रजस्तया धूसरेष्वीषत्पाण्डुषु मलयजरसलवैश्चन्दनद्रवलेशैर्लुलितेष्वेकीभूतेषु बकुलावलीनां केसरराजीना वलयानि येषु ते तथा तेषु। पुन कीदृशम्। करै करणभूतैश्चामराणि बिभ्राणम्। कीदृशै करै। प्रियविरहेण सतापरोषाभ्या मृदिता मर्दिता आरक्ता नवोदिताश्चन्द्रकरास्तैरिवानवरत निरन्तर चन्दनचर्चा तस्याः प्रणयन प्रापणं तेन पाण्डुरै। कीदृशानि चामराणि। कल्पित इति। कल्पितो विहितो मृणालाना दण्डो येषु तानि। पुन किंविशिष्टानि। बिसाना तन्तवस्तन्मयानि तन्निर्मितानि। उन्नालै कमलै, कुमुदै कैरवै, कुवलयैरुत्पलै, किसलयै पल्लवै, कदलीदलै रम्भापत्रै, कमलिनीपलाशै पद्मिनीपत्रै.। 'पत्रं पलाश छदनम्' इति कोश। कुसुमस्तबकै पुष्पगुच्छैः। 'गुच्छस्तबकगुच्छका' इति कोश। एतैश्चातपत्रीकृतैश्छत्रीकृतैर्निवारितो दूरीकृत आतपः सूर्यालोको यस्य स तम्। जलदेवताना जलाधिष्ठात्रीणां समूहमिव। सर्वदा जलक्लिन्नदेहत्वादिति भाव। वरुण प्रचेतास्तस्य श्रियां समागममेकीभवन

---

( विशेषक ) बनाये हुए थे ( अथवा जिन पर चन्दन से गोल, आभूषक, ( श्वेत ) बिन्दु अंकित किये हुए थे )—इसीलिये वे कपोल ऐसे दिखायी दे रहे थे कि मानो उनको स्पर्श करने की लालसा से चन्द्रमा प्रतिबिम्ब के रूप में, दिन में भी, वहा स्थित हो, शिरीष के सारे सौन्दर्य को छीने हुई —( सौन्दर्य में शिरीष से अत्यन्त उत्कृष्ट बनी हुई ) शैवाल-मञ्जरियों से उन्होंने अपने कर्णाभूषण बनाये हुए थे, अपने पिसे हुए कपूर ( कर्पूरधूलि ) से भरे हुए, चन्दन रस के अशमात्र से ( थोड़ी मात्रा में चन्दन के लेप से ) शोभित, तथा बकुल पुष्प के गजरों की माला पहने स्तनों पर उन्होंने नलिनी के पत्तों का आवरण रखा हुआ था, निरन्तर ( कादम्बरी के शरीर पर ) चन्दन का लेप करने से श्वेत हुए, ( कादम्बरी को पहुँचायी हुई पीड़ा पर ) क्रोध करके मसल दी हैं चन्द्रमा की किरणें जिन्होंने—ऐसे अपने हाथों में ( से ) मृणाल की डडियाँ बनाये हुए बिसतन्तुओं के बने हुए चँवरों को पकड़े हुए थे, ऊपर को की हुई नालों वाले छत्र बनाये हुए कमलों कुमुदों, कुवलयों द्वारा, केले के कोमल पत्तों द्वारा, कमलिनी के पत्तों द्वारा और पुष्पगुच्छों द्वारा उन्होंने ( कादम्बरी के शरीर से ) धूप को हटा रखा था, वे मानों जल-परियों का समूह थे, मानो ( जल के देवता ) वरुण की कीर्तियों का दल थे, वे मानो शरद ऋतुओं का समूह थे, और झीलों ( की अधिष्ठात्री देवताओं ) की गोष्ठी थे।

श्रियामिव समागमम्, शरदामिव समाजम्, सरसीनामिव गोष्ठीबन्धम्, शिशिरोपचारनिपुण कादम्बर्याः शरीरपरिचारक शरीरप्रायं परिजनमद्राक्षीत्। तेन च प्रणम्यमानः पादनखपतनभयादिव त्वरितापसृतेन दीयमानमार्गश्चन्दनपङ्ककृतवेदिकाना पुण्डरीककलिकाघटितघण्टिकाना विकसितसिन्दुवारकुसुममञ्जरीचामराणा लम्बितस्थूलमल्लिकामुकुलहाराणामाबद्धलविङ्गपल्लवचन्दनमालिकाना दोलायमानकुसुमदामध्वजानां मृणालवेत्रहस्ताभिर्गृहीतरुचिरकुसुमाभरणाभिर्मधुलक्ष्मीप्रतिकृति-

मिव। वरुणस्यापि जलाधीशत्वेन तस्य श्रियामप्यतिशीतलत्वात्तदुपमानम्। शरदा घनात्ययानां समाजमिव परिषदमिव। तासामपि शीतलत्वात्तदुपमानम्। सरसीना सरसा गोष्ठीबन्धमिव। एकत्रीभूयोपवेशन गोष्ठीबन्ध। कीदृशम्। शिशिरोपचारा शीतलोपचारास्तत्र निपुण दक्ष शरीर प्रायमित्यन्तर गत्वा चोक्त कादम्बरीपरिजनमद्राक्षीदित्यन्वयस्तु प्रागेवोक्त। इदानीं समयोद्याना द्युद्दीपनविभावान्वर्णयन्नाह—तेन चेति। तेन परिजनेन प्रणम्यमानो नमस्क्रियमाण। कदली तोरणाना तलेन प्रविश्य सर्वतो निसृष्टदृष्टिरिद वक्ष्यमाण सर्वं दृष्टवानित्यन्वय। कीदृश। प्रणामेन पादनखस्यैव कोमलत्वात्पतन भविष्यतीति शङ्कया त्वरितमपसृत परिजनस्तेन दीयमानो मार्गो यस्य स। इत. कदलीतोरण विशेषयन्नाह—चन्दनेति। चन्दनपङ्केन मलयजकर्दमेन कृता वेदिका येषाम्। कलिकानाद्यघण्टिकानुकारादाह—पुण्डरीकेति। पुण्डरीकाणि सिताम्भोजानि तेषा कलिकाभिर्घटिता निर्मिता घण्टिका किङ्किण्यो येषाम्। विकसितानि विमुद्राणि सितानि सिन्दुवारस्य निर्गुण्ड्या कुसुमानि तेषा मञ्जरीणां चामराण्यातपत्राणि येषाम्। लम्बिता स्थूलमल्लिका मुकुलाना हारिणो हारा येषाम्। आबद्धा लविङ्ग देवकुसुम तस्य पल्लवा येष्वेवविधा चन्दनमालिका तोरणार्थे मङ्गल्य दाम येषाम्। 'तोरणार्थे तु मङ्गल्यं दाम चन्दनमालिका' इति कोश.। दोलेति। दोलायमाना कम्पमाना कुसुमदामध्वजा येषाम्। मृणालेति। मृणालानां तन्तुलानां वेत्र हस्ते यासा ताभिर्गृहीतानि स्वीकृतानि रुचिराणि मनोहराणि कुसुमाभरणानि पुष्पविभूषणानि याभि। मध्विति। मधुलक्ष्म्या

उस सेवकवर्ग से नमस्कार किया जा रहा वह, पाँवों के नाखूनों मे (अपने प्रतिबिम्ब के) गिरने के भय से ही, मानो, शीघ्रता से हटे हुए (परिजनवर्ग) द्वारा मार्ग दिया जाता हुआ—चन्दनलेप से (अनुलिप्त) पवित्र तल भूमियों—वेदिकाओं वाले[1], श्वेत कमलों की कलियों की ही बनायी गयी घण्टियों वाले, खिले हुए सिन्दुवार पुष्प के गुच्छों की (बनी) चॅवरियों वाले, बड़ी बड़ी मल्लिका की कलियों के लटकाये हुए हारों वाले, लौंग की कोंपलों से युक्त चन्दन मालिकाओं (तोरणों पर लटकायी हुई माङ्गलिक फूल मालाओं) वाले, फहराती हुई पुष्पमालारूप पताकाओं वाले, कमल डण्डियों रूपी बेंतें हाथों मे लिये हुई, शोभन पुष्पों के आभूषण लिये हुई (पहने हुई), और (इस प्रकार) वसन्त ऋतु की शोभा की प्रतिमायें

१ जिनके न्याधार—कुर्सियाँ—(वेदिकायें) चन्दन लेप से बनाये गये थे—काले का किया हुआ यह अर्थ चन्दन लेप की कुर्सियाँ—आधारभूमि—बनाने का अर्थ कुछ स्पष्ट प्रतीत नहीं होता। (अनु०)

भिरिव द्वारपालिकाभिरधिष्ठिताना कदलीतोरणाना तलेन प्रविश्य सर्वतो निसृष्टदृष्टिर्दृष्टवान्क्वचिदुभयतटनिखाततमालपल्लवकृतवनलेखाः कुमुदधूलिवालुकापुलिनमालिनीश्चन्दनरसेन प्रवर्त्यमाना गृहनदिकाः क्वचिन्निचुलमञ्जरीरचितरक्तचामराणा जलार्द्रवितानकाना तलेषु सिन्दूरकुट्टिमेष्वास्तीर्यमाणालिरक्तपङ्कजशयनानि, क्वचिदेलारसेन सिच्यमानानि स्पर्शानुमेयरम्यभित्तीनि स्फटिकभवनानि, क्वचिच्छिरीषपक्ष्मकृतशाद्वलाना मृणालधारागृहाणा शिखरमारोप्यमाणाना धाराकदम्बधूलिधूसरितानि यन्त्रमयूरकाणा कादम्बकानि, क्वचित्सहकाररससिक्तैर्जम्बूपल्लवैरा-

---

वसन्तश्रिय प्रतिकृतिभि प्रतिरूपाभिरेवंविधाभिर्द्वारपालिकाभिरधिष्ठितानामाश्रितानाम् । सर्वं दृष्टवानिति पूर्वोक्त स्पष्टीकुर्वन्नाह—क्वचिदिति । कस्मिंश्चित्प्रदेश उभयतटे निखाता आरोपिता ये तमालपल्लवास्तापिच्छकिसलयास्तै कृता वनलेखा काननवीथी यासा ता । कुमुदाना धूलि पराग सैव वालुका सिकतास्तया पुलिन जलोज्झित सैकत मालव इत्येवशीलाश्चन्दनरसेन मलयजद्रवेण प्रवर्त्यमाना विस्तार्यमाणा गृहनदिका भवनसरितः । क्वचिदिति । निचुलमञ्जरी हिज्जलवल्लरी तया रचितानि रक्तचामराणि येषामेतादृशाना जलार्द्रवितानकानामम्भ क्लिन्नोल्लोचाना तलेषु सिन्दूर नागज तेन सहवर्तमानेषु कुट्टिमेष्वास्तीर्यमाणानि विस्तीर्यमाणानि रक्तपङ्कजशयनानि लोहितकमलशयनानि । क्वचिदिति । एला चन्द्रवाला तस्या रसेन सिच्यमानानि सेचनक्रियाविषयीक्रियमाणानि स्पर्शेन करसस्पर्शेनानुमेया अनुमातुं योग्या रम्या मनोहरा भित्तय कुड्यानि येषामेवविधानि स्फाटिकभवनानि । क्वचिदिति । कस्मिंश्चित्प्रदेशे शिरीष कपीतनस्तस्य पक्ष्मभि कोमलकेसरामि कृतशाद्वलानां विहितश्यादहरिताना मृणालधारागृहाणा बिसयन्त्रसद्मना शिखरं प्रान्तमारोप्यमाणानामुपरिष्टाद्धीयमानानां धाराकादम्बाना धूलिभी रजोभिर्धूसरितानि यन्त्रगृहवर्तिमयूरकाणा कदम्बकानि मण्डलानि । क्वचिदिति । सहकारा आम्रास्तेषा रसे सिक्तै सिञ्चितैर्जम्बूपल्लवैराच्छाद्यमाना आभ्यन्तराः

---

ही प्रतीत होती हुई द्वारपालिकाओं द्वारा ( रक्षार्थ ) आश्रित केले के तोरणों के नीचे से प्रविष्ट होकर, चारो ओर दृष्टि डालते हुए कहीं दोनों तटों पर आरोपित तमाल पत्तों से बनाये गये वनों की पक्तियों वाली, चारों ओर दूर दूर तक बिखरी हुई कुमुद पराग की धूली रूपा पुलिन मालाओं वाली, चन्दन रस के द्वारा बहायी जा रहीं ( प्रवर्तित करायी जा रहीं ) घरेलू छोटी छोटी नदिया ( खिलौना नदिया ) देखीं, कहीं उसने निचुल पुष्पों के गुच्छों से बनायी गयी लाल चॅवरियों वाले जल से गीले मण्डपों ( चॅदोवों ) के तलों पर ( नीचे ), सिन्दूर से युक्त ( सिन्दूर से रॅगे ) फर्शों पर बिछायी जा रही लाल कमलों की शय्यायें देखीं, कहीं इलायची के रस से सींचे जा रहे, स्पर्श से ही अनुमित होने योग्य दीवारों वाले स्फटिक निर्मित घर देखे, कुछ स्थानों पर उसने, शिरीष के फूलों के कोमल तन्तुओं ( पक्ष्मभि ) से ( पड़ौस में ) बनाये गये घास वाले मैदानों वाले, मृणालदण्डियों से निर्मित, जलयन्त्रगृहों ( धारागृहाणाम् ) के शिखर पर रखे जाते हुए, ( जल ) धाराओं के समूहों से धूमिल दिखायी देते हुए यन्त्रचालित मयूरों ( की प्रतिमाओं ) के समूह देखे, कहीं उसने, आम के रस से सींचे गये जामुन के पत्तों

च्छाद्यमानाभ्यन्तराः पर्णशालाः, क्वचित्क्रीडितकृत्रिमकरिकलभयूथकाकुलीक्रियमाणाः काञ्चनकमलिनीकाः, क्वचिद्गन्धोदककूपेषु बद्धकाञ्चनसुधापङ्ककामपीठेषु स्थूलबिसलतादण्डघटितारकाणि कृतकेतकदलद्रोणिकानि कुवलयावलीरज्जुभिर्ग्रथ्यमानानि पत्रपुटघटीयन्त्रकाणि, क्वचित्स्फटिकबलाकावलीवान्तवारिधारा लिखितेन्द्रायुधाः सचार्यमाणमायामेघमालाः, क्वचिदुपान्तरूढयवाङ्कुरासु तरत्तरुणमालतीकुड्मलदन्तुरिततरङ्गासु हरिचन्दनद्रववापिकासु शिशिरीक्रियमाणा हारयष्टीः, क्वचिन्मुक्ताफलक्षोदरचितालवालकाननवरतस्थूलजलबिन्दुदुर्दिनमुत्सृजतो यन्त्रवृक्षकान्,

---

पर्णशाला उटजा। क्वचिदिति। क्रीडित यत्कृत्रिम निर्मित करिकलभयूथकं तेनाकुलीक्रियमाणा काञ्चनकमलिनीका सुवर्णनलिन्य। कप्रत्यये च सर्वत्र ह्रस्वत्वम्। गन्धोदकस्य सगन्धजलस्य कूपेषूदपानेषु। कीदृशेषु। बद्धः काञ्चनस्य सुवर्णस्य सुधा गृहधवलीकरणद्रव्य तस्य पङ्क कर्दमस्तेन काममत्यर्थं पीठ येषु, स्थूलो यो बिसलताया दण्डस्तेन घटिता अरका येषु, कृतानि केतकदलाना द्रोणिकानि भाजनविशेषाणि येषु, कुवलयानामुत्पलानामावल्य पङ्क्तयस्ता एव रज्जवस्तैर्ग्रथ्यमानानि बध्यमानान्येवविधानि पत्रपुटलक्षणानि घटीयन्त्रकाण्युद्घाटकानि। क्वचिदिति। स्फटिकस्य बलाका बिसकण्ठिकास्तासामावलीभिर्वान्ता मुक्ता वारिधारा जलधारा यासु, लिखितानीन्द्रायुधानि शक्रचापानि यासु, एवविधा सचार्यमाणा प्रेर्यमाणा मायामेघमाला कृत्रिमजलदपङ्क्तय। क्वचिदिति। उपान्ते समीपे रूढा यवाङ्कुरा यासु, तरन्ति तरुणमालतीकुड्मलानि तैर्दन्तुरितास्तरगा कल्लोला यासु, हरिचन्दनस्य तैलपर्णिकस्य द्रवस्तस्य वापिकासु क्षुद्रकूपिकासु शिशिरीक्रियमाणा हारयष्टीर्मुक्ताकलापान्। एतेन विरहाधिक्य वर्णितम्। क्वचिदिति। मुक्ताफल रसोद्भव तस्य क्षोदेन चूर्णेन रचित निर्मितमालवालकमावापस्थानक येषाताननवरतं निरन्तरं स्थूला जलबिन्दवस्तेषा दुर्दिनमुत्सृजत उत्प्राबल्येन मुञ्चत. कुर्वत। एवविधान्यन्त्रवृक्षकान्कृत्रिममही-

---

द्वारा ढके जा रहे भीतरी भाग वाली पर्णकुटियाँ देखीं, कुछ स्थानों पर उसने, खेलते हुए, कृत्रिम गजशिशुओं की टोलियों द्वारा क्षुब्ध किये जा रहे सोने के कमलों से भरे तालाब देखे, कहीं उसने, सुगन्धित जल वाले तथा ( द्रव ) सोना रूप चूने से बनायी गयी सुन्दर आधारभूमियों वाले कुँओं पर, मोटे, लम्बे मृणाल दण्डो से बनाये गये अरों वाले, केतकी के पत्तों से बनाये बनावटी ( कृतक ) कुंडोंवाले, कमलों की मालाओं से युक्त रस्सियों द्वारा बाँधे गये पत्तों के बर्तनों वाले अरहट ( घटीयत्र ) देखे, कुछ स्थानों पर उसने स्फटिक निर्मित सारसों के झुडों पर जलधाराओं को छोड़ती हुई तथा जिनपर इन्द्रधनुष चित्रित कर दिया गया है ऐसी, ( आकाश में ) केवल निर्माता की चतुराई ही से चलायी जा रही कृत्रिम ( मायानिर्मित ) मेघपक्तियाँ देखीं, कुछ स्थानों पर उसने, आस पास ( उपान्ते ) उगे हुए पीले से जो के अङ्कुरों वाली, ( उन पर ) तैरती हुई मालती लताओं की ताजी कलियों से विषम (ऊँची नीची) बनी लहरियों वाली चन्दन रस की बावड़ियों में ठंडी की जा रहीं मोती मालाएँ देखीं, किन्हीं स्थानों पर उसने. मोतियो के चूरे से निर्मित आलवाल वाले निरन्तर मोटी-मोटी जल की बूदों

क्वचिद्विधुतपक्षनिक्षिप्तसीकरानीतनीहारा भ्रमन्तीर्यन्त्रमयीः पत्रशकुनिश्रेणीः, क्वचिन्मधुरकिङ्किणीपङ्क्तिपटुतराबध्यमानाः कुसुमदामदोलाः, क्वचिदुदरारूढनिर्गतोत्तालनलिनीच्छदाच्छादितमुखान्प्रवेश्यमानाञ्शातकुम्भान्, क्वचिद्घटितकदलीगर्भस्तम्भदण्डानि बध्यमानानि चारुवंशाकृतीनि कुसुमस्तबकातपत्राणि, क्वचित्करमृदितकर्पूरपल्लवरसेनाधिवास्यमानानि बिसतन्तुमयान्यंशुकानि, क्वचिल्लवलीफलद्रवेणार्द्रीक्रियमाणास्तृणशूकमञ्जरीकर्णपूरान्, क्वचिदम्भोजिनीदलव्यजनैर्वीज्यमानानुपलभाजनभाजः शीतौषधिरसानन्यांश्चैवप्रकाराञ्शिशिरोपचारोपकरणकल्पना-

रुहान्। क्वचिदिति। विधुता कम्पिता ये पक्षास्तैर्निक्षिप्ता ये सीकरास्तैरानीतो नीहारो हिम याभिस्ता भ्रमन्तीर्भ्रमण कुर्वन्ती। एवविधा यन्त्रमयी पत्रशकुनिश्रेणी। क्वचिदिति। मधुकरा भ्रमरा एव किङ्किण्य क्षुद्रघण्टिकास्तासां पङ्क्ति श्रेणी तया पटुतर स्पष्ट यथा स्यात्तथा बाध्यमाना निरुध्यमाना कुसुमदामदोलाः पुष्पजवप्रेङ्खा। क्वचिदिति। उदरे मध्य आरूढा निर्गता उद्गता सुवर्णकलशादुत्तालोर्ध्वमुखी या नलिनी तस्याश्छदानि दलानि तैराच्छादित पिहित मुखं येषा तान्प्रवेश्यमानान्गृहान्तर्नीयमानाञ्शातकुम्भान्। क्वचिदिति। घटिता कदलीगर्भस्तम्भा एव दण्डा येष्वेवविधानि बध्यमानानि चारुर्मनोहरो यो वशो वेणुस्तद्वदाकृतिराकारो येषा तानि कुसुमस्तबकान्येवातपत्राणि छत्राणि। क्वचिदिति। करेण मृदितो य कर्पूरपल्लवस्तस्य रसेनाधिवास्यमानानि सुगन्धीक्रियमाणानि बिसतन्तुमयानि तन्तुलतन्तुनिर्मितान्यंशुकानि वस्त्राणि। क्वचिदिति। लवली वल्लीविशेषस्तस्या फलद्रवेणार्द्रीक्रियमाणान्। तृणाना शूक किंशारुस्तस्य मञ्जर्य एव कर्णपूरान्कर्णाभरणान्। क्वचिदिति। अम्भोजिनी कमलिनी तस्या दलान्येव व्यजनानि तालवृन्तानि तैर्वीज्यमानानुपलभाजनभाजो दृषत्पात्रस्थिताञ्शीतौषधिरसान्, अन्यांश्चैवप्रकाराञ्शिशिरोपचारोपकरणकल्पनाव्यापारान्परिजनेन परिच्छदेन कृतान्विहितान्क्रिय-

की फुहारों को छोड़ते हुए यन्त्रचालित वृक्ष देखे, कहीं फड़फड़ाते पखों से फैंकी हुई ( जल की ) फुहारों द्वारा वहाँ धुंध ( का दृश्य ) उत्पन्न करती हुई घूमती हुई, यन्त्रचालित पत्तों की बनी पक्षियों की पंक्तियाँ देखीं, कहीं, ( उनके ऊपर तथा समीप मंडराते ) भौंरों के रूप में स्थित घंटियों की पंक्तियों से खचा खच भरे हुए ( शब्दार्थ—पंक्तियों द्वारा भली भाँति संकुल ) पुष्पमालाओं के झूले देखे, कहीं उनके भीतर उगी हुई तथा अपनी सीधी खड़ी ( उत्ताल अथवा उन्नाल ) डंडियों समेत बाहर निकली नलिनियों के पत्तों से ढके मुखों वाले, भीतर ले जाते हुए सोने के घड़े देखे, कहीं, उसने, केले की बीच वाली डंठल ( स्तम्भ ) से बनी हत्थियों वाली, सुन्दर बाँस की सी आकृतियों की, पुष्पगुच्छों से बनी, बाँधी जाती हुई छतरियाँ देखीं, कहीं हाथ से मसले हुए कपूर के पत्ते के रस से गन्ध युक्त किये जा रहे, बिसतन्तुओं के बने वस्त्र देखे, कहीं लवली लता के फलों के रस से गीले किये जाते, मल्लिका ( तृणशूक ) की मञ्जरियों के बने कर्णाभूषण देखे, और कहीं पत्थर के पात्रों में रखे हुए तथा कमलिनी के पत्तों के पंखों से पंखा किये जाते शामक औषधियों के रस देखे। और दूसरी भी इसी प्रकार की शामक चिकित्सा

व्यापारान्परिजनेन कृतान्क्रियमाणांश्च वीक्षमाणो हिमगृहकस्य मध्यभागं हृदयमिव हिमवतः, जलक्रीडागृहमिव प्रचेतसः, जन्मभूमिमिव सर्वचन्द्रकलानाम्, कुलगृहमिव सर्वचन्दनवनदेवतानाम्, प्रभवमिव सर्वचन्द्रमणीनाम्, निवासमिव सर्वमाघमासयामिनीनाम्, संकेतसदनमिव सर्वप्रावृषाम्, ग्रीष्मोष्मापनोदोद्देशमिव सर्वनिम्नगानाम्, बडवानलसंतापापनोदननिवासमिव सर्वसागराणाम्, वैद्युतदहनदाहप्रतीकारस्थानमिव सर्वजलधराणाम्, इन्दुविरहदुःसहदिवसातिवाहनस्थानमिव कुमुदिनीनाम्, हरहुताशननिर्वापणक्षेत्रमिव मकरध्वजस्य, दिनकरकरैरपि सर्वतो जलयन्त्रधारासहस्रसमुत्सारितैरतिशीतस्पर्शभयनिवृत्तैरिव परिहृतम्, अनिलैरपि

---

माणाश्च विधीयमानांश्च वीक्षमाणो हिमवतो गौरीगुरोर्हृदयमिव स्वान्तमिव, प्रचेतसो वरुणस्य जलक्रीडागृहमिव सर्वा समग्रा याश्चन्द्रकलास्तासा जन्मभूमिमिव, सर्वं यच्चन्दनवन गन्धसारकानन तस्य देवतानामधिष्ठात्रीणां कुलगृहमिव पितृसद्मिव, सर्वचन्द्रमणयश्चन्द्रकान्तायास्तेषा प्रभवमिवोत्पत्तिमिव, सर्वे ये माघमासास्तपोमासास्तेषा यामिनीना रात्रीणा निवासमिव वसतिस्थलमिव, सर्वप्रावृषा समग्रतपात्ययानां सकेतसदनमिव, सर्वनिम्नगाना समस्ततटिनीना ग्रीष्मस्योष्णागमस्य ऊष्मा तापस्तस्यापनोदो दूरीकरण तस्योद्देशमिव प्रदेशमिव, सर्वसागराणां वडवानलः वाडवस्तस्य य सतापस्तस्यापनोदना दूरीकरण तस्या निवासमिव वसतिमिव, सर्वजलधराणां समग्रमेघाना वैद्युतो यो दहन इरमदस्तेन दाहस्तस्य प्रतीकारस्थानमिव प्रतिक्रियागृहमिव, कुमुदिनीना कैरविणीनामिन्दुविरहेण दु सहमसह्य दिवसस्यातिवाहनमुल्लङ्घन तस्य स्थानमिव, मकरध्वजस्य कदर्पस्य हरस्येश्वरस्य यो हुताशनस्तृतीयनेत्रजो वह्निस्तस्य निर्वापण निर्यातन तस्य क्षेत्रमिव स्थानमिव, दिनकरस्य सूर्यस्य करैरपि सर्वत समन्ताज्जलयन्त्रधारासहस्राणि तै. समुत्सारितैर्दूरीकृतैरतिशयेन यः शीत स्पर्शः तस्माद्भय तेन निवृत्तैरिव परिहृत परित्यक्तम्।

---

के साधनों ( उपकरणों ) को बनाने ( तय्यार करने ) की सेवकों द्वारा की गयीं तथा की जा रहीं क्रियाओं को देखता हुआ वह हिमगृह के मध्य भाग मे पहुँच गया। ( हिमगृह का यह मध्यभाग बहुत शीतल था, इसलिये ) मानो हिमालय का ही मध्यभाग ( हृदय ) था, ( जलाधिपति ) वरुण का मानो जलक्रीडागृह था, सारी चन्द्रकलाओं का मानो जन्मस्थान था, मानो सभी चन्दन के वनों की अधिष्ठात्री देवियों का पैतृक गृह था, मानो सभी चन्द्रमणियों का ( उद्गम ) स्रोत था, ( ठढे ) माघमहीने की सभी रात्रियों का मानो निवास स्थान था, मानो सभी वर्षाऋतुओं का सकेतगृह ( मिलने का स्थान ) था, मानो सारी नदियों की ग्रीष्म ऋतु की गर्मी को दूर करने का प्रदेश था, सब समुद्रों का समुद्राग्नि की ऊष्मा रूपी पाप को हटाने का निवास स्थान था, मानो सारे बादलों का, बिजली से उत्पन्न ( वैद्युत ) जलन के प्रतीकार का स्थान था, कमलिनियों के लिये, चन्द्रमा के वियोग के कारण असह्य (बने हुए) दिन को बिताने का मानो स्थान ही था, कामदेव का मानो शिवजी की आग को बुझाने का प्रदेश था, यह ऐसा स्थान था कि जिसको फव्वारों की सहस्रों जलधाराओं द्वारा सभी स्थानो से निकाल कर फैंकी गयीं, मानो कि ठढे स्पर्श के भय के कारण ही लौटी हुई सूर्य की किरणों ने भी छोड़ दिया था, कदम्बपुष्पों के तन्तुओं के ढेरों को उड़ाकर ले

कदम्बकेसरोत्करवाहिभिः कण्टकितैरिवानुगतम्, कदलीवनैरपि पवनचलितदलै-र्जाड्यजनितवेपथुभिरिव परिवारितम्, अलिभिरपि कुसुमामोदमदमुखरैराबद्धदन्त-वीणैरिव वाचालितम्, लताभिरपि मधुकरपटलजटिलाभिर्गृहीतनीलप्रावरणका-भिरिव विराजितमाससाद। क्रमेण च तत्रान्तर्बहिश्चातिबहलेन पिण्डहार्येणेवोप-लिप्यमानोऽतिशीतलेन स्पर्शेनामन्यतात्मनो मनश्चन्द्रमय कुमुदमयानीन्द्रियाणि ज्योत्स्नामयान्यङ्गानि मृणालिकामयी धियम्। अगणयच्च हारमयानर्ककिरणा-

अनिलैरपि पवनैरपि कदम्बस्य कादम्बस्य य. केसरोत्करस्तद्वाहिभिरत एव कण्टकितैरिव रोमाञ्चितैरिवानुगत सहितम्। कदलीवनैरपि रम्भाकाननैरपि पवनेन चलितानि कम्पितानि दलानि येषा तैरत एव जाड्येन जनितो वेपथु कम्पो येषामेतादृशैरिव परिवारितम्। अलिभिरपि भ्रमरैरपि कुसुमानामामोद परिमलस्तज्जनितो मदस्तेन मुखरैर्वाचालैरत एवाबद्धा दन्तवीणा यैरेवविधैरिव वाचालित मुखरितम्। लताभिरपि वल्लीभिरपि मधुकराणा पटल तेन जटिलाभिर्व्याप्ताभिर्गृहीत स्वीकृत नील प्रावरण प्रच्छादन याभिरेवविधाभिरिव विराजित शोभितमेतादृश हिमगृहकस्य मध्यभागमाससाद प्राप्तवान्। क्रमेणेति। क्रमेण परिपाट्यान्तर्बहिश्चातिशीतलेन स्पर्शेनोपलिप्यमानः। ननु मूर्तव्यतिरेकेणोपदिग्धक्रिया न सभवतीत्याशयेनाह—अतीति। अतिबहलेनातिदृढेन पिण्डहार्येणेव पिण्डरूपेणाहर्तुं शक्य पिण्डहार्यं तेनेव। एतेनातिशीतलस्पर्शस्य बाहुल्यतया हस्तग्राह्यत्व सूचितम्। तथातिशीतलेन स्पर्शेनात्मन स्वस्य मनश्चित्त चन्द्रमयममन्यताजानात्। तथा कुमुदमयानि कैरवमयानीन्द्रियाणि करणानि ज्योत्स्नामयानि चन्द्रिकामयान्यङ्गानि हस्तपादादीनि मृणालिकामयीं बिसमयी धिय बुद्धिममन्यतेत्यस्य सर्वत्र सबन्ध। तथार्ककिरणान्सूर्यकरान्। शुभ्रत्वायतत्वसाम्यादाह—हारमयान्मुक्ताप्रालम्बमयानगणयत्। अत्रोऽप्येतस्य संबन्ध। आतप सूर्यालोकं चन्दनमथ मलयजमयम्। अतिशीतलत्वादिति भाव।

जाती हुई तथा ( इसी कारण मानो ठढ से ही ) रोमाञ्चित सी प्रतीत होती हुई, पवनो द्वारा भी अनुगत भरा हुआ था, यह केले के कुञ्जो से भी घिरा हुआ था जो वायु द्वारा हिलाये गये पत्तो से युक्त ऐसे प्रतीत होते थे कि मानो उनमें शीतलता के कारण कम्पन उत्पन्न हो गया हो, यह उन भौरो से भी गूज रहा था जो फूलो की सुगन्ध के नशे के कारण भिनभिनाते ऐसे प्रतीत हो रहे थे कि मानो ( ठढ के कारण ) उनके दान्तो की वीणा बन्ध गयी हो—अर्थात् ठढ के कारण उनके दान्त किचकिचा रहे थे, और उन बेलों से भी शोभित था जो भौरों के झुडों से खचाखच भरी हुई ऐसी प्रतीत हो रही थीं कि मानो उन्होंने ( शीत को हटाने के लिये ) काली चादर ओढ रखी हो। और क्रमश वहाँ ( अपने ) भीतर तथा बाहर से ( दोनों ही स्थानों पर ) अत्यन्त शीतल स्पर्श द्वारा, इतने घने कि मानो वह ढेरों में उठाया जा सकता था, लीपे जाते हुए उस ( चन्द्रापीड ने ) अपने मन को मानो चन्द्रमा से बना हुआ माना, इन्द्रियों को कमलों से बनी हुई, शरीर के अगों को चन्द्रमा के प्रकाश से बने हुए, बुद्धि को मृणालसूत्रों की बनी हुई समझा और उसने सूर्य की किरणें हारो से भरी हुई समझीं, धूप चन्दन-लेप से भरी हुई, वायु कपूर से भरी, समय जल से भरा और तीनों भुवन बर्फ से भरे समझे।

श्चन्दनमयमातपं कर्पूरमय पवनमुदकमय काल तुषारमय त्रिभुवनम्। एवविधस्य च तस्यैकदेशे सखीकदम्बकपरिवृताम्, अशेषसरित्परिवारामिव भगवतीं गङ्गा हिमवतो गृहाचलगताम्, कुल्याभ्रमिभ्रमितेन कर्पूररसस्रोतसा कृतपरिवेषाया मृणालदण्डमण्डपिकायास्तले कुसुमशयनमधिशयानाम्, हाराङ्गदवलयरसनानूपुरैर्मृणालमयैर्निगडैरिव सयतामीर्ष्यया मन्मथेन, चन्दनधवले स्पृष्टामिव ललाटे शशलाञ्छनेन, बाष्पवारिवाहिनि चुम्बितामिव चक्षुषि, वरुणेन वर्धितनिःश्वासमरुति दष्टामिव मुखे, मातरिश्वना सतापप्रतप्तेष्वध्यासितामिवाङ्गेष्वनङ्गेन कंदर्पदाहदीपिते गृहीतामिव हृदये

---

तथा पवन समीर कर्पूरमय धनसारमयम्। उद्गन्धयुक्तत्वात्। तथा काल समयमुदकमय जलमयम्। त्रिभुवन त्रिविष्टप तुषारमय हिममयम्। अतिशीतलस्य शेषाधिवशादिकरणरूपतया सत्त्वेऽपि हाररूपतयागणयदित्यर्थ । एवविधस्य तस्य हिमगृहस्य एकदेश एकस्मिन्प्रदेशे सखीकदम्बकेन वयस्यासमूहेन परिवृताम्। अशेषसरित्परिवारा समग्रतटिनीपरिच्छदा हिमवत पर्वतात् गृहाचलगता गृहशिलागता भगवती गङ्गामिव जाह्नवीमिव विरहजनितपाण्डुरत्वसाम्यात्तदुपमानम्। अन्यासां च नद्युपमानम्। कुल्या सारणी तस्या भ्रमिर्भ्रमण तया भ्रमितेन कर्पूररसस्रोतसा धनसारद्रवप्रवाहेण कृतो विहित परिवेष परिधिर्यस्या एवविधाया मृणालदण्डमण्डपिकाया बिसदण्डमण्डपस्य तलेऽधोभागे कुसुमशयन पुष्पशय्यामधिशयाना कृतस्वापाम्। हारेति। हारो मुक्ताप्रालम्ब., अङ्गद बाहुकटम्, वलय कङ्कणम्, रसना काञ्ची, नूपुराणि पादकटकानि, एतैर्मृणालमयैर्बिसमयैर्निगडैरिवान्दुकैरिवेर्ष्यया स्पर्धया मन्मथेन कदर्पेण सयता बद्धाम्। चन्दनेन धवले शुभ्रीकृते ललाटेऽलिके शशलाञ्छनेन चन्द्रेण स्पृष्टामिवालिङ्गितामिव। शुभ्रत्ववक्रत्वसाम्याच्चन्द्रोपमानम्। बाष्पवारि नेत्राम्बु तद्वाहिनि चक्षुषि नेत्रे वरुणेन प्रचेतसा चुम्बितामिव। जलच्युतिसाम्याद्वरुणेनेत्युक्तम्। वर्धितो वृद्धिं प्राप्तो नि श्वासमरुदेतनवायुर्यस्मिन्नेवविधे मुखे। वायुबाहुल्यादाह—मातरिश्वना वायुना दष्टामिव भक्षितामिव। सताप सज्वरस्तेन प्रतप्तेषूष्णेष्वङ्गेष्वनङ्गेन कदर्पेणाध्यासितामाश्रितामिव। कुत्रचित् 'पतङ्गेन' इति पाठ।

---

और इस प्रकार के उस हिमगृह के एक भाग में उसने कादम्बरी को देखा। वह कादम्बरी बहुत सी सहेलियों से घिरी हुई थी, (इसलिये) ऐसी प्रतीत हो रही थी कि मानो सभी (सहायक) नदियों के परिवार वाली (सहायक नदियों समेत) भगवती गगा, हिमालय की गुफा के तल पर पड़ी हो, किसी नहर के चक्करदार घुमाव से घुमाये गये कपूर रस के प्रवाह द्वारा घिरी हुई, मृणालदण्डोंके बने स्तम्भों वाली छोटी छोलदारी के नीचे पुष्पों की शैय्या पर सोयी हुई थी, कामदेव ने उससे जलकर मानो बिसतन्तुओं द्वारा बनाये हुए मानो साकल बनाये हुए हारों, बाजूबन्दों, कगनों तथा नूपुरों द्वारा बाँध रखा था, चन्दन से श्वेत हुए मस्तक पर मानो चन्द्रमा द्वारा स्पर्श की हुई थी, आँसू बहाती आँखों पर मानो वरुण द्वारा चूमी गयी थी, बढे हुए श्वासों की वायु वाले (भारी आहें निकलते हुए) मुँह पर मानो वायु द्वारा काट ली गयी थी (अर्थात् चूम ली गयी थी), सताप-प्रणयोन्माद-से तपाये हुए अगों में [1]सूर्य

---

1. पतङ्गेन।

हुतभुजा, स्वेदिनि परिष्वक्तामिव वपुषि जलेन, दैवतैरपि विलुप्यमानसौभाग्यामिव सर्वशः, हृदयेन सह प्रियतमसमीपमिवोपगतैरङ्गैरुपजनितदौर्बल्याम्, आश्यानचन्दनपाण्डुरं च रोमाञ्चमनवरतहारस्पर्शलग्न मुक्ताफलकिरणपुञ्जमिवोद्वहन्ती स्वेदसीकरिणी च कपोलपालीम्, पक्षपवनेन वीजयद्भिरनुकम्प्यमानामिवावतसमधुकरैः, अवतसमधुकररवदहनदग्धमिव श्रोत्रमपाङ्गनिर्गतेनाश्रुस्रोतसा सिञ्चन्तीम्, अतिप्रवृत्तस्य चाश्रुणो निर्वाहप्रणालिकामिव कर्पूरकेतकीकलिका कर्णे कलयन्तीम्, आयतश्वासविधु-

---

तत्र पतङ्ग सूर्यस्तापजनकत्वात् । तदाश्रितामित्यर्थः । कदर्पदाहदीपिते मदनदावज्वलिते हृदये । दाहजनकत्वसाम्यादाह—हुतभुजेति । हुतभुजा वह्निना गृहीतामिव स्वीकृतामिव । स्वेदिनि प्रस्वेदवति वपुषि जलेन नीरेण परिष्वक्तामिवाश्लिष्टामिव । एतेन स्वेदबाहुल्य सूचितम् । दैवतैरप्यदृष्टैरपि सर्वश सर्वप्रकारेण विलुप्यमान लोपमाप्यमान सौभाग्य यस्या सा तामिव । हृदयेन चित्तेन सह सार्धं प्रियतमसमीप प्राणप्रियनिकटमिवोपगतैरङ्गै कृत्वोपजनित विहित दौर्बल्य कृशत्व यस्या एतादृशीम् । आश्यानमिति । आश्यान शुष्क यच्चन्दन मलयज तेन पाण्डुरं शुभ्र रोमाञ्च चानवरत निरन्तर हारस्पर्शेन लग्न मिलित मुक्ताफलाना किरणा दीधितयस्तेषा पुञ्ज समूहस्तमिवोद्वहन्तीं धारयन्तीम् । अत्र चन्दनधवलीकृतस्य रोमोद्गमस्य मुक्ताकिरणसमूहोपमानम् । तथा स्वेदस्य घर्मजलस्य सीकरा विद्यन्ते यस्यामेतादृशीं कपोलपालीमुद्वहन्तीम् । चकार· समुच्चयार्थं । अवेति । अवतस उत्तसस्तस्य मधुकरैर्भ्रमरै पक्षपवनेन वीजयद्भिरनुकम्प्यमानामिवानुकम्पाविषयीक्रियमाणामिव । अवतसमधुकराणा रव शब्द स एव दाहकत्वाद्दहनो वह्निस्तेन दग्धमिव ज्वलितमिव । श्रोत्रं श्रवणमपाङ्गनिर्गतेनाक्षिबाह्यायातेनाश्रुस्रोतसा नेत्रजलप्रवाहेण करणभूतेन सिञ्चन्ती सेक कुर्वन्तीम् । अतिप्रवृत्तस्यातिप्रसृतस्याश्रुणो नेत्रजलस्य निर्वाहार्थं सुखेन गमनार्थं प्रणालिकामिव जलमार्गमिव कर्पूरकेतकीकलिका कर्पूरेषूक्ता या केतकी तस्या कलिका कोरक ता कर्णे कलयन्तीं कलना कुर्वन्ती धारयन्तीम् । आयतो विस्तीर्णो

---

द्वारा अध्यासित थी, प्रेम के उत्ताप से ज्वलित हृदयमें अग्नि द्वारा पकड़ी हुई ( कैद की हुई ) थी, पसीने से तर शरीर पर मानो जल द्वारा आलिंगित थी, इस प्रकार मानों देवताओं द्वारा भी ( ईर्ष्या से ) उसका सौन्दर्य सर्वथा नष्ट किया जा रहा था। उसने अपने ( शरीर ) मे दुर्बलता उत्पन्न कर रखी थी, क्योंकि मानो उसके सारे अग, हृदय के साथ ही साथ, उसके प्रियतम ( चन्द्रापीड ) के समीप चले गये थे, और अशत सूखे हुए ( आश्यान ) चन्दन से श्वेत हुए मानो कि निरन्तर हार के स्पर्श करने से लगे मोतियों के किरण समूह सरीखे रोमाच को तथा पसीने के बूँदों वाले कपोलों के तल भाग को धारण किये हुई थी, अपने कर्णाभूषण के ऊपर मँडराते भौंरे अपने पखों से उसको पखा करते हुए मानो उसपर दया दिखा रहे थे, वह मानो उसके कर्णाभूषणों ( पर मँडराते ) भौंरों की गूँज रूपी अग्नि से उसका कान जल गया था, इसलिये वह उसको आँखों के कोने से निकले आँसुओं के बहाव से सींच रही थी, और अपने कान पर श्वेत केतकी ( अथवा कपूर से सुवासित केतकी ) की कली को रख रही थी मानो कि वह ( कली ) अतिरिक्त बहते हुए आँसुओं को ले जाने की नली हो, उसका

तितरलितेन च सतापभयपलायमानेन देहप्रभावितानेनेवांशुकेन विमुच्यमानकुचकलशाम्, आपतत्प्रचलचामरप्रतिबिम्ब च कुचकलशयुगल प्रियान्तिकगमनौत्सुक्यकृतपक्षमिव करतलेन निरुन्धन्तीम् , मुहुर्मुहुर्भुजलतया तुषारशिलाशालभञ्जिकामालिङ्गन्तीम्, मुहुः कपोलफलकेन कर्पूरपुत्रिकामाश्लिष्यन्तीम्, मुहुश्चरणारविन्देन चन्दनपङ्कप्रतियातनामामृशन्तीम्, स्तनसक्रान्तेनात्ममुखेनापि कुतूहलिनेव परिवृत्य विलोक्यमानाम्, कर्णपूरपल्लवेनापि स्वप्रतिबिम्बशायिना सोत्कण्ठेनेव चुम्ब्यमानकपोलफलकाम्, हारैरपि मुक्तात्मभिर्मदनपरवशैरिव प्रसारितकरैरालिङ्ग्यमानाम्, मणिदर्पणमुरसि

---

य. श्वास श्वसित तस्माद्या विधुति कम्पस्तेन तरलितेन कम्पितेन सतापभयात्पलायमानेन धावता। अतिशुभ्रस्वसचिक्कणत्वसाम्यादाह—देहेति। देहप्रभावितानेनेव शरीरदीप्तिसमूहेनेवांशुकेन वस्त्रेण विमुच्यमानौ कुचावेव कलशौ यस्या सा ताम्। आपतत्प्रचलचामरयो प्रतिबिम्ब यस्मिन्नेतादृश कुचकलशयुगल प्रियस्य वल्लभस्यान्तिक समीप तत्र गमने याने यदौत्सुक्य रणरणकता तेन कृता पक्षा येनैतादृशमिव करतलेन निरुन्धन्ती निरोध कुर्वन्तीम्। मुहुर्मुहुर्भुजलतया बाहुवल्लया तुषारशिला तस्या शालभञ्जिका पाञ्चालिकामालिङ्गन्तीमाश्लेष कुर्वन्तीम्। मुहु कपोलफलकेन कर्पूरपुत्रिका घनसारपाञ्चालिकामाश्लिष्यन्तीमालिङ्गन्तीम्। मुहुश्चरणारविन्देनाङ्घ्रिकमलेन चन्दपङ्कस्य मलयजकर्दमस्य प्रतियातना प्रतिमाम्। 'प्रतिमा यातनाविधि। छाया छन्द कायो रूप बिम्ब मानकृती अपि' इति कोश। आमृशन्तीं परामर्श कुर्वन्तीम्। स्तनेति। स्तनयो कुचयो सक्रान्तेन प्रतिबिम्बितेनात्ममुखेनापि स्वकीयवदनेनापि कुतूहलिनेव कौतुकिनेव परिवृत्य। उत्तानीकृत्येत्यर्थ। विलोक्यमाना वीक्ष्यमाणाम्। एतेन सौन्दर्यातिशय सूचित। एव कर्णपूरपल्लवेनापि स्वप्रतिबिम्बरूपेण शायिना शयनकारिणा। एतेनायतत्व सूचितम्। सोत्कण्ठेनेव सोत्कलिकेनेव चुम्ब्यमान चुम्बनविषयीक्रियमाण कपोलफलक यस्या सा ताम्। हारैरपि मुक्ताकलापैरपि मुक्तात्मभिर्मुक्तास्वरूपैर्मदनपरवशैरिवानङ्गायत्तैरिव प्रसारितकरैर्विस्तारितपाणिभिरालिङ्ग्यमानामाश्लिष्यमानाम्। अत्र मुक्तात्मभिरालिङ्ग्यमानामित्यनेन

---

रेशमी वस्त्र उसके घट सरीखे स्तनों को छोड़ रहा था, मानो कि वह वस्त्र उसकी गहरी आहों के कम्पन से चञ्चल हुई और (प्रेम की) ऊष्मा के भय से भागी हुई उसके देह की कान्ति का विस्तार ही हो, वह अपनी हथेली से, उनमें पड़ते हुए हिलते चमर के प्रतिबिम्ब से युक्त घट सरीखे स्तनो को पकड़े हुए थी मानो कि प्रेमी के समीप जाने की लालसा में उनमें चँवरी के प्रतिबिम्ब रूपी पख निकल आये हों, वह अपनी लता सरीखी भुजा से हिमशिला से बनायी गयी प्रतिमा (शालभञ्जिका) का आलिंगन कर रही थी, वह अपने चौड़े कपोलों से कपूर की गुड़िया का आलिंगन कर रही थी, वह अपने चरण रूपी कमल से गाढ़े चन्दन लेप की बनी मूर्ति को छू रही थी, स्तनों में प्रतिबिम्बित अपने मुँह द्वारा भी वह उत्सुकतापूर्वक देखी जा रही थी, अपने ही प्रतिबिम्ब के पल्लव पर पड़ा उसके कर्णाभूषण का पल्लव भी मानो उत्कठित होकर उसके कपोलतल का स्पर्श कर रहा था, अपने मोतियों के बने (मुक्तात्मभिः) हारों द्वारा भी फैलायी हुई किरणों (करै) द्वारा मानो इस प्रकार आलिंगित की जा रही

निहित विनोदितव्यमेतदिति जीवितस्पर्शमय शपथं शशिनमिव कारयन्तीम्, करिणीमिव संमुखागतप्रमदवनगन्धवारणप्रसारितकराम्, प्रस्थितामिवानभीष्टदक्षिणवातमृगागमनाम्, मदनाभिषेकवेदिकामिव कमलावृतचन्दनधवलपयोधरकलशावष्टब्धपार्श्वाम्, आकाशकमलिनीमिव स्वच्छाम्बरतलदृश्यमानमृणालकोमलोरुमूलाम्, कुसुमचापलेखा-

तस्या अभिनव सौभाग्य वर्णितम्। उरसि निहित वक्षसि स्थापित मणिदर्पण रत्नादर्शम्। वर्तुलत्वतादृशद्युतिमत्त्वसाधर्म्यात्। जीवितस्य स्पर्शो दान तन्मय शशिनमिव चन्द्रमिव। 'स्पर्शो वर्गाक्षरे दाने स्पर्शने स्पर्शके रुजि' इति कोश। इति शपथ कारयन्तीम्। इतिशब्दद्योत्यमाह—विनोदेति। अद्य त्वया विनोदितव्यम्। अन्यस्तु शशी शोकप्रद, त्वया तु विनोदितव्यमेतदिति भाव। अत एव जीवितस्पर्शमयमिति विशेषणम्। करिणीति। हस्तिनीमिव। उभयो शब्देन साम्य प्रदर्शयन्नाह—संमुखेति। समुखागतो य प्रमदवनगन्धस्तस्य वारण दूरीकरण तत्र प्रसारितौ करौ यया सा। विरहाकुलितत्वेन प्रमदवनस्य गन्धस्य दु खदायित्वात्तन्निवारण युक्तमेवेति भाव। पक्षे समुखागत प्रमदो मदोत्कटो वनगन्धवारणो वनप्रभवो गन्धहस्ती त प्रति प्रीत्या प्रसारित कर शुण्डा यया सा ताम्। प्रस्थितामिव चलितामिव। उभयसाम्य प्रदर्शयन्नाह—अनभीष्टेति। अनभीष्टमनीप्सित दक्षिणो यो वात स एव शीघ्रगामित्वान्मृगो हरिणस्तस्यागमन यस्या सा ताम्। विरहिण्या दक्षिणो वायुरतीव दु खदो भवतीति सर्वत्र प्रसिद्धम्। पक्षेऽनभीष्टो दक्षिणो वामतोऽपसव्यगो वातमृगो वातप्रमीर्यस्या सा ताम्। क्षीणा प्रयाणे दक्षिणो मृगोऽपशकुनमिति वसन्तराजादौ प्रसिद्धम्। मदनेति। मदनस्य कदर्पस्याभिषेकार्थे वेदिका सस्कृता भूमिस्तामिव। उभयो साम्यमाह—कमलेति। कमलया शोभयावृतौ चन्दनेन धवलौ पयोधरावेव कुचावेव पीनत्ववर्तुलत्वसाम्यात्कलशौ ताभ्यामवष्टब्धावाश्रितौ पार्श्वौ

थी कि मानो वे हार प्रणयाधीन होने के कारण आत्मनियन्त्रण को छोड़े हुए ( अथवा मुक्तात्मा मुनि ) वे व्यक्ति हो जिन्होंने ( उसका आलिंगन करने के लिये ) हाथ फैला रखे हों, अपने वक्ष स्थल पर रखे हुए मणिजटित दर्पण को, यह समझते हुए कि यह चन्द्रमा है, अपने जीवन के स्पर्श के साथ ( मानो कि अपने जीवन का स्पर्श करा कर ) यह शपथ दिला रही थी कि अब उदित मत होना, अपने सामने ( अपनी ओर ) आयी हुई प्रमदवन की गन्ध को रोकने के लिये हाथ फैलाये हुई मानो वह हथिनी थी कि जो अपनी ओर आते प्रमदवन के गन्धहस्ती की दिशा मे अपनी सूँड को फैला देती है, अनिष्ट दक्षिणी वायु रूपी मृग के आगमन वाली वह ऐसी प्रतीत हुई कि मानो अपनी दायीं ओर वातमृग के ( वायु के समान त्वरितगति हरिण ) के आगमन को ( अशुभसूचक होने के कारण ) नापसन्द करनेवाली कोई स्त्री ( यात्रा पर ) चल पड़ी हो, कमलों से आच्छादित तथा चन्दन लेप से श्वेत हुए स्तन कलशों ( बड़े-बड़े स्तनों ) द्वारा थामे हुए पार्श्वों वाली वह ऐसी कामदेव के स्नान के लिये बनायी गयी उस वेदी सरीखी प्रतीत हो रही थी जिसके दोनों ओर कमलों से ढके तथा चन्दन से ( मिश्रित होने के कारण ) श्वेत जल से भरे घड़े रखे हों, उसकी बिसतन्तुओं के समान कोमल जघाओं का मूल ( भाग ) उसके पारदर्शक ( स्वच्छ ) वस्त्रों के नीचे दिखायी दे रहा था और इस प्रकार वह

मिव मदनारोपितगुणकोटिकान्ततराम्, मधुमासदेवतामिव शिशिरहारिणीम्, मधुकरीमिव कुसुममार्गणाकुलाम्, चन्दनविलेपनामनङ्गरागिणीं च बाला मन्मथजननी च मृणालिनीमभ्यर्थिततुषारस्पर्शां च कादम्बरीं व्यलोकयत्।

---

यस्या । आकाशेति । आकाश व्योम तस्य कमलिनी पद्मिनी तामिव । उभयो साम्यमाह—स्वच्छेति । स्वच्छ निर्मल यदम्बर वस्त्र तस्य तलमधोभागस्तत्र दृश्यमान विलोक्यमान मृणालवत्कोमलमूरुमूल सक्थिमूल यस्या सा ताम्। पक्षे स्वच्छ रजोरहित यदम्बरतल व्योमतल तत्र दृश्यमान मृणाललक्षण कोमल सुकुमारमुरु विस्तीर्ण मूल बुध्नो यस्या । कुसुमेति । कुसुमचाप पुष्पधनुस्तस्य लेखामिव । उभयसाम्यमावि कर्तुमाह—मदनेति । मदनेन यौवनावस्थारोपिता स्थापिता या गुणकोटिस्तया कान्ततरा मनोज्ञतराम्। पक्षे मदनेन कदर्पेणारोपितोऽधिज्यीकृतो गुणकोटिमौर्वीप्रान्तस्तया कान्ततराम्। मध्विति । मधुमासो वसन्तमासस्तस्य देवतामिवाधिष्ठात्रीमिव । उभयसादृश्यमाह—शिशिरेति । शिशिरेति शीतलोचापरेण हारिणीं रुचिराम्। पक्षे शिशिरस्य ऋतुविशेषस्यापहारिणीम्। शिशिरापगमे हि मधुमास. प्रवर्तते । मधुकरीमिव भ्रमरीमिव । उभयसादृश्यमाह—कुसुमेति । कुसुमान्येव विरहवशान्मार्गणा बाणास्तैराकुलाम्। पक्षे कुसुमाना मार्गणमन्वेषणं तेनाकुला व्यग्राम्। अथ च चन्दनस्य विलेपनमङ्गरागो यस्या एवविधामपि न विद्यतेऽङ्गरागो यस्यामिति विरोधः। तत्परिहारस्तु—अनङ्ग कदर्पस्तस्मिन्रागिणीमनुरागवतीमित्यर्थात्। बालामनाविष्कृतमन्मथाम्, अथ च मन्मथजननीमिति विरोध । तत्परिहारस्तु—बालामनुद्वाहितामित्यर्थात्। मृणालिनीम्, अथ चाभ्यर्थितो वाञ्छितस्तुषार स्पर्शो ययेति विरोध । कमलिन्यास्तुषारस्पर्शं सर्वथानिष्ट इति लोके प्रसिद्धम्। तत्परिहारस्तु—विरहतापोपशान्त्यर्थं मृणाल विद्यते यस्या इत्यर्थात्। एवविधा कादम्बरी व्यलोकयद्पश्यत्।

---

उस आकाशरूपी कमल सरोवर की सी प्रतीत हो रही थी कि जिसके भीतर बिसतन्तुओं का सा ( अर्थात् श्वेत तथा चमकीला ) नाजुक ( कोमल ) तथा बड़ा ( उरू ) मूल नक्षत्र दिखायी देता हो, कामदेव द्वारा उसको प्रदान किये गये करोड़ों गुणों के कारण वह अधिक सुन्दरी प्रतीत हो रही थी मानो वह कामदेव की फूलों की धनुष की पक्ति थी जो कामदेव द्वारा चढ़ायी हुई प्रत्यञ्चा के कारण अधिक सुन्दर दिखायी देती है, शीतल हारों को पहने हुई वह शिशिर ऋतु का पीछा करने वाली वसन्त ऋतु की अधिष्ठात्री देवता सरीखी दिखायी दे रही थी, फूलों के ढूँढने में लीन भौंरी की भाँति वह भी कुसुम ही जिसके मार्गण बाण हैं उस कुसुमधन्वा कामदेव से पीड़ित थी, चन्दन का ( शरीर पर ) लेप किये हुई भी किसी भी शारीरिक लेप से विहीन थी ! ( नहीं, नहीं, वस्तुत. अनङ्ग कामदेव से उत्पादित प्रेम से भरी हुई थी ), युवती भी थी और कामदेव की माता भी थी ! ( नहीं, नहीं, वस्तुतः दूसरों मे प्रणयोन्माद को उत्पन्न करने वाली थी ), मृणालिनी ( विषतन्तुओं ) को धारण किये हुई थी और ( कमल के पौधे को नष्ट करने वाली ) बर्फ के स्पर्श के लिये लालायित भी थी।

अथ सा यथादर्शनमागत्यागत्य चन्द्रापीडागमनमावेदयन्त परिजनमुत्तरलतारकेण चक्षुषा विलोक्य 'कथय, किं सत्यमागतो दृष्टस्त्वया ? कियत्यध्वनि, कासौ' इति प्रतिमुख निक्षिप्तनामाक्षरं पप्रच्छ। प्रवर्धमानधवलिम्ना चक्षुषा दृष्ट्वा च सम्मुखमापतन्त तं दूरादेव वरारोहा, नवग्रहा करिणीवोरुस्तम्भविधृता, विचेष्टमानाङ्गी, कुसुमशयनपरिमलोपगतैः परवशामुखरैर्मधुकरकुलैरिवाच्छाद्यमाना, सम्भ्रमच्युतोत्तरीयका हारकिरणानुरसि कर्तुमिच्छन्ती, मणिकुट्टिमनिहितेन वामकरतलेन हस्ताव-

---

अथ सा कादम्बरी यथादर्शनं यथावसरमागत्यागत्य चन्द्रापीडस्यागमनमावेदयन्त कथयन्त परिजनमुत्प्राबल्येन तरला चञ्चला तारका यस्मिन्नेताद्दशेन चक्षुषा विलोक्य वीक्ष्य प्रतिमुख निक्षिप्तानि स्थापितानि नामाक्षराणि यथा स्यात्तथा। प्रत्येक प्रत्येक नाम गृहीत्वेत्यर्थं । इति पप्रच्छेत्यप्राक्षीत्। इतिद्योत्यमाह—कथयेति। कथय ब्रूहि। किं सत्यमागतस्त्वया दृष्ट । कियत्यध्वनि। कासौ चन्द्रापीड । तदनन्तर प्रवर्धमान प्रतिदिनमुपचीयमानो धवलस्य भावो धवलिमा यस्मिन्नेताद्दशेन चक्षुषा नेत्रेण सम्मुखमापतन्तमागच्छन्त त दृष्ट्वा विलोक्य च कुसुमशयनादुत्तस्थावुस्थिता बभूवेत्यन्वय । अथ कादम्बर्या विशेषणानि—वरेति। वर श्रेष्ठ आरोहो नितम्बो यस्या सा । 'नितम्बारोहौ स्त्रीकट्या पश्चाज्जघनपार्श्वत' इति कोश । ऊर्वावेव स्तम्भौ ताभ्या विधृता धृता । केव । नव प्रत्यग्रो ग्रहो ग्रहण यस्या एवविधा करिणीव हस्तिनीव । सापि उरुर्विस्तीर्णो य स्तम्भस्तत्र विधृता बद्धा स्यात् । विचेष्टमानानि चेष्टाविशेषण प्राप्यमाणान्यङ्गानि यस्या । कुसुमशयनस्य परिमलस्तेनोपनतै प्राप्तैरत एव परवशैरा समन्तान्मुखरैर्वाचालैरेवविधैर्मधुकरकुलैर्भ्रमरसमूहैराच्छाद्यमानेव । सम्भ्रमेण सहसा च्युतमुत्तरीयक प्रावरण वस्त्र यस्या सैवभूता सती हारकिरणानुरसि कर्तुमिच्छन्ती वाञ्छन्ती । एतेन हारकिरणोत्तरीयांशुकयोरतिस्वच्छत्वसाम्याद्भेदो न ज्ञात इति भाव । मणिकुट्टिमे निहितेन स्थापितेन वामकरतलेन निजप्रतिमा प्रति हस्ताव-

---

इसके पश्चात् जैसे-जैसे जिसने देखा ( दर्शन के अनुसार ) वैसे ही वैसे आ आ कर चन्द्रापीड के आगमन को बताती हुई सेविकाओं ( परिजन ) को, ऊपर को उठायी हुई चञ्चल पुतलियों वाली आँखों से देख कर उसने प्रत्येक के सामने प्रत्येक सेविका से "मुझे बता, क्या वह वस्तुत आ गया है ? तूने देखा है ? वह कितने मार्ग पर ( दूरी पर ) है ? वह कहाँ है ?" ( अनक्षरम् ) बिना बोले ही—( केवल सकेत से ही ) यह पूछा। और क्रमश बढती जा रही चमकीली दृष्टि से, सामने आते हुए उसको दूर से ही देखकर अपनी जघाओं की अशक्तता से आक्रान्त तथा काँपते अगों वाली वह प्रशस्त ( सुन्दर ) कूल्हों वाली, कादम्बरी नयी पकड़ी हुई उत्तम सवारी वाली ( अथवा प्रशस्त डीलडौल वाली ), एक बड़े खम्भे से कस कर बाँध कर रखी हुई तथा ( छूटने के लिये ) चेष्टा करती हुई हथिनी-सी प्रतीत होती अपनी पुष्प शय्या से उठकर खड़ी हो गयी। पराधीन वह कादम्बरी मानो पुष्पशय्या की सुगन्ध से वहाँ खिंच आये हुये, गुञ्जारते हुए भौंरो द्वारा मानों ढठाई जा रही थी, हड़बड़ाहट मे गिरे हुए उत्तरीय वस्त्र वाली मानो अपने हार की किरणों को ( वस्त्र समझकर ) वक्ष स्थल पर फैलाना चाहती थी, मणि

लम्बनं निजप्रतिमामिव याचमाना, स्रस्तकेशकलापसयमनश्रमितेन गलत्स्वेदसलिलेन दक्षिणकरेण समभ्युक्ष्येवात्मानमर्पयन्ती, चलितत्रिकताम्रत्रिवलीतरङ्गितरोमराजितया निष्पीड्यमानेव सर्वरसाननङ्गेन, अन्तःप्रविष्टललाटिकाचन्दनरसमिश्रमिव चक्षुषा क्षरन्ती शिशिरमानन्दजलम्, नन्दवारिबिन्दुवेणिकया चलितावतसधूलिधूसरं प्रियप्रतिमाप्रवेशलोभेनेव कपोलफलक प्रक्षालयन्ती, ललाटिकाचन्दनभरेणेव किंचिदधोमुखी तत्क्षणमपाङ्गभागयुञ्जिततारकया तन्मुखलग्नयेव दीर्घया दृष्ट्याकृष्यमाणा कुसुमशयनादुत्तस्थौ ।

---

लम्बन याचमानेव प्रार्थ्यमानेव । एतेन स्वत स्वशरीरधारणे न क्षमेति प्रदर्शितम् । स्रस्तो य केशकलापोऽलकसमूहस्तस्य सयमन बन्धन तेन श्रमितेन श्रम प्राप्तेन गलत्स्वेदसलिलेन क्षरद्धर्मवारिणा दक्षिणकरेण समभ्युक्ष्य । यस्यकस्यचिदर्पण क्रियते तत्तु करेण प्रोक्षितस्यैवेत्यर्थ । आत्मानमर्पयन्त्यर्पणं कुर्वन्ती । चलित यत्त्रिक वशाधस्तस्य ताम्रा स्वच्छा या त्रिवली तया तरङ्गिता रोमराजिस्तस्या भावस्तत्ता तया हेतुभूतयानङ्गेन कदर्पेण सर्वरसान्निष्पीड्यमानेव मर्द्यमानेव । एतेन चलितत्रिकस्य पीडनयन्त्रसाम्यता प्रदर्शिता। किं कुर्वती । चक्षुषा नेत्रेण शिशिर शीतलमानन्दजल क्षरन्ती स्रवन्ती । शिशिरत्वे हेतु प्रदर्शयन्नाह—अन्तरिति । अन्त प्रविष्टो यो ललाटिकाचन्दनरसस्तेन मिश्रमिव संपृक्तमिव। पुन किं कुर्वन्ती । आनन्दवारिणो बिन्दवो विप्रुषास्तेषां वेणिकया प्रवाहेण । 'धारा वेणी रयश्च स' इत्यमर । चलितः स्वस्थानाच्च्युतो योऽवतसस्तस्य धूलि परागस्तेन धूसर मलिनं कपोलफलक प्रियप्रतिमाप्रवेशलोभेन प्राणप्रियप्रतिबिम्बसक्रान्तितृष्णयेव प्रक्षालयन्ती धावन कुर्वन्ती । ललाटिकाया यश्चन्दन भरस्तेनेव किंचिदधोमुख्यवाङ्मुखी तत्क्षणमपाङ्गभागोऽक्षिबाह्यान्त प्रदेशस्तत्र युञ्जिता प्रेरिता तारका कनीनिका ययैवविधया तस्य चन्द्रापीडस्य मुखमाननं तत्र लग्नयेव दीर्घया दृष्ट्याकृष्यमाणाकर्षण क्रियमाणा । अन्वयस्तु प्रागेवोक्त ।

---

खचित फर्श पर रखे हुए अपने बायें हाथ की हथेली वाली मानो अपने प्रतिबिम्ब से हाथ का सहारा माँग रही थी, अपने बिखरे बालों को बाँधने से थके हुए, पसीने के जल को गिराते हुए दायें हाथ से मानो अपने आपको सींचकर ( स्नान करके ही ) अपना समर्पण कर रही थी, भीतर को मुड़ी हुई ( बलित ) मेरुदण्ड की अघरास्थि ( त्रिक ) से दबी हुई ( ताम्यन्ती ) त्रिवली ( पेट पर की तीन रेखाओं का समूह ) रोम पंक्ति ( नाभि से ऊपर को उठती हुई रोमपँक्ति ) के लहरदार बन जाने के कारण, ऐसा प्रतीत होता था कि मानो कामदेव ( अनङ्ग ) उसमें से सारे रसों को निचोड़ कर निकाल रहा था, वह आँखों से ठढा आनन्द जल गिरा रही थी जो कि मानो उसके भीतर गये उसकी ललाटिका ( तिलक ) के चन्दन रस से मिला हुआ था, ( उठते समय ) हिले हुए ( पुष्पों के बने हुए ) कर्णाभूषण की धूलि से भूरे हुए ( मैले हुए ) अपने चौड़े कपोलों को, मानो अपने प्यारे के प्रतिबिम्ब को उनमें प्रविष्ट कराना चाहती हुई ही, आनन्द के आँसुओं की बूँदों की धारा ( वेणिकया ) से धो रही थी, मानो कि ललाटिका ( तिलक ) पर के चन्दन के भार से ही उसका मुँह कुछ लटक गया था, उस समय

चन्द्रापीडस्तु समुपसृत्य पूर्ववदेव तां महाश्वेताप्रणामपुरःसरं दर्शितविनयः प्रणनाम। कृतप्रतिप्रणामायां च तस्यां पुनस्तस्मिन्नेव कुसुमशयने उपविष्टायां प्रतीहार्योपनीतां जाम्बूनदमयीमासन्दिकां रोचिष्णुरत्नप्रत्युप्तपादां पादेनैवोत्सार्य क्षितावेवोपाविशत्। अथ केयूरकः 'देवि, देवस्य चन्द्रापीडस्य प्रसादभूमिरेषा पत्रलेखा नाम ताम्बूलकरङ्कवाहिनी' इत्यभिधाय पत्रलेखामदर्शयत्। अथ कादम्बरी दृष्ट्वा ताम् 'अहो, मानुषीषु पक्षपातः प्रजापतेः' इति चिन्तयांबभूव। कृतप्रणामां च तां सादरम् 'एह्येहि' इत्यभिधायात्मनः समीपं सकुतूहलपरिजनदृश्यमाना पृष्ठतः समुपावेशयत्। दर्शना-

---

तदनन्तरं चन्द्रापीडस्तु समुपसृत्यापसर्पणं कृत्वा पूर्ववदेव महाश्वेताप्रणामपुरःसरं तां कादम्बरीं दर्शितविनयं प्रणनाम नमश्चक्रे। तदनन्तरं कृतो विहितः प्रतिप्रणामोऽनुनमस्कारो ययैवंविधायां च तस्यां पुनस्तस्मिन्नेव कुसुमशयन उपविष्टायामासेदुष्यां प्रतीहार्या द्वारपालिकयोपनीतामानीतां जाम्बूनदमयीमासन्दिकां वेत्रासनम्। 'स्याद्वेत्रासनमासन्दी' इत्यभिधानकोशः। कीदृशीम्। रोचिष्णुरत्नैः प्रत्युप्ता पादा यस्याः सा तां पादेनैव चरणेनैवोत्सार्य दूरीकृत्य क्षितावेव पृथिव्यामेवोपाविशदुपविष्टः। अथेति। उपवेशनानन्तरं केयूरकः हे देवि, देवस्य पूज्यस्य चन्द्रापीडस्य प्रसादभूमिः प्रसन्नताधरिण्येषा पत्रलेखा नाम ताम्बूलकरङ्कवाहिनीत्यभिधायेत्युक्त्वा पत्रलेखामदर्शयद् दृग्विषयतां प्रापयत्। अथेति। दृग्विषयीकरणानन्तरं कादम्बरी तां दृष्ट्वा विलोक्येति चिन्तयाबभूवेति चिन्तितवती। इतिशब्दद्योत्यमाह—अहो इति। प्रजापतेर्विधातुरहो मानुषीषु पक्षपातोऽङ्गीकारः। कृतः प्रणामो नमस्कारो ययैवंभूतां च सादरं सबहुमानम् एहि एहि इत्यभिधायात्मनः समीपे स्वकीयनिकटे सह कुतूहलेन वर्तमानो यः परिजनः परिवारजनस्तेन दृश्यमाना विलोक्यमाना पृष्ठतः समुपावेशयन्निवेशितवती। अथ दर्शनादेव विलोकनादेवोपारूढः प्रादुर्भूतः प्रीतेरतिशय आधिक्यं यस्याः सा मुहुर्मुहुर्वारंवारमेना

---

अपाङ्ग भागों पर ठहरी हुई पुतलियों वाली, लम्बी, (इसीलिये) उस (चन्द्रापीड) के चेहरे पर लगी हुई (चेहरे तक पहुँची हुई) प्रतीत होती आँखों के द्वारा आगे की ओर खींची जा रही थी।

किन्तु चन्द्रापीड ने समीप पहुँचकर पहले महाश्वेता को प्रणाम करके पहले की भाँति ही आदर दिखाकर उसको नमस्कार किया। और जब (कादम्बरी) प्रतिप्रणाम (उत्तर में नमस्कार) कर चुकी और उसी पुष्पशय्या पर बैठ गयी तब द्वारपालिका द्वारा (बैठने के लिये) लायी गयी सोने की बनायी गयी, चमकते रत्नों से जड़े (उस) पायों वाली कुर्सी को पाँव से ही हटाकर चन्द्रापीड पृथ्वी पर ही बैठ गया। तब केयूरक ने "राजकुमारी! राजकुमार चन्द्रापीड की प्रसन्नता की आधारभूमि यह पत्रलेखा देव की पानपेटी उठाने वाली है।"—यह कहकर पत्रलेखा को दिखाया (परिचित कराया)। तब कादम्बरी ने उसको देखकर सोचा—'आश्चर्य है, विधाता का मानुषी (मर्त्य स्त्रियों) के प्रति कितना अधिक पक्षपात है?' तथा आदरपूर्वक नमस्कार किये हुई उसको उसने 'आओ, आओ'—कहकर, आश्चर्य से परिजनों द्वारा देखी जा रही को अपने समीप ही, पीछे की ओर बैठा लिया। (पहले) दर्शन से (लेकर) ही अत्यन्त

देवोपारूढप्रीत्यतिशया च मुहुर्मुहुरेना सोपग्रह करकिसलयेन पस्पर्श। चन्द्रापीडस्तु सपदि कृतसकलागमनोचितोपचारस्तदवस्था चित्ररथतनयामालोक्याचिन्तयत्—'अतिदुर्विदग्धं हि मे हृदयमद्यापि न श्रद्धाति। भवतु। पृच्छामि तावदेनाम्' इति निपुणालापेनातिप्रकाशमब्रवीत्—'देवि, जानामि कामरति निमित्तीकृत्य प्रवृत्तोऽयमविचलसतापतन्त्रो व्याधिः। सुतनु, सत्यं न तथा त्वामेष व्यथयति यथास्मान्। इच्छामि देहदानेनापि स्वस्थामत्रभवती कर्तुम्। उत्कम्पिनीमनुकम्पमानस्य कुसुमेषु-

---

पत्रलेखां सोपग्रह सानुकूलन करकिसलयेन पाणिपल्लवेन पस्पर्श स्पर्श चकार। चन्द्रापीडस्तु सपदि शीघ्र कृतो विहित सकल समग्र आगमनस्यागमने वोचितो योग्य उपचारो विनयो येन स तदवस्था विरहविक्लवां चित्ररथतनयां कादम्बरीमालोक्य वीक्ष्याचिन्तयदध्यायत्। हीति निश्चितम्। मे मम हृदय चेतोऽतिदुर्विदग्धमतिजडं यदद्यापि न श्रद्दधाति न निश्चय करोति। इयमीदृश्यवस्था किं कामात्, अन्यप्रियनिमित्ताद्वेति प्रकारान्तरस्यासभवात्। कामनिमित्तकत्वे च गतेऽपि विपरीतसंभावनेति दुर्विदग्धपदव्यङ्ग्यम्, अत एव निश्चयानुरोधेनाह—भवत्विति। कामनिमित्तक एवास्तु, पर तावदादावेना पृच्छामीति कृत्वा निपुणालापेन नातिप्रकाश नातिस्पष्टमब्रवीदवोचत्। हे देवि कादम्बरि, अह जानामि कामनिर्वचनीयस्वरूपामरतिं निमित्तीकृत्यायमविचलो य सतापस्तस्य तन्त्र आधीन एवविधोऽपि व्याधि प्रवृत्त। हे सुतनु हे कादम्बरि। सत्यमिदं नौपचारिक वचः त्वामेष व्याधिर्न तथा व्यथयति पीडयति, यथास्मान्। देहदानेनाप्यत्रभवतीं पूज्यां स्वस्थां सज्जा कर्तुमिच्छाम्यभिलषामि। उत्कम्पिनीं त्वां प्रत्यनुकम्पमानस्यानुकम्पां कुर्वाणस्य कुसुमेषु कदर्पस्तस्य पीडया पतिता त्वामवेक्षमाणस्य पश्यतो मे मम हृदय चेत पततीव। कादम्बर्या विरहकार्श्ये

---

प्रीति का अनुभव करती हुई कादम्बरी ने इसको अपने कोमल हाथ से स्नेहपूर्वक (सोपग्रहम्) छूआ। किन्तु चन्द्रापीड ने तत्काल ही आगमन (के समय) के लिये उपयुक्त शिष्टाचार करके कादम्बरी को वैसी अवस्था मे देखकर सोचा—'मेरा हृदय तो निश्चय ही अत्यन्त ही जड है जो अब भी विश्वास नहीं करता है। अच्छा तो, मैं इससे निपुणजनोचित बातचीत के द्वारा (अर्थात् व्यङ्ग्यार्थपूर्ण बातचीत के द्वारा—अथवा निपुणतया प्रयुक्त शब्दों में) पूछता हूँ। यह सोचकर प्रकट रूप में बोला—"राजकुमारी! जानता हूँ कि कौन सी (काम् अरतिम्) मानसिक व्यथा के कारण तुम्हारा यह निरन्तर यन्त्रणा पर निर्भर (निरन्तर यन्त्रणा देने वाला) रोग आरम्भ हुआ है! (गूढार्थ—कामदेव द्वारा उत्पादित आवेग के कारण)! हे शोभन शरीर वाली कन्ये! यह (रोग–आवेग) निश्चय ही तुमको इतना दु ख नहीं दे रहा है जितना कि मुझको। मैं तो अपना शरीर दान करके भी (उसको छोड़कर) (वास्तविक अर्थ—विवाह द्वारा शरीर को तुम्हें सौंपकर भी) आपको स्वस्थ, नीरोग अथवा प्रसन्न करना चाहता हूँ। रोग के कारण जोर से काँपती हुई के पीछे पीछे (के अनुसार) कापते हुए और मदन के दु ख से (पुष्पशय्या पर) पड़ी हुई को देखते हुए मेरा हृदय भी दु खार्त हुआ मानो गिरता है। (वास्तविक अर्थ—प्रबल काम के

पीडया पतितामवेक्षमाणस्य पततीव मे हृदयम्। अनङ्गदे तनुभूते ते भुजलते गाढसतापतया च दृष्ट्या वहसि स्थलकमलिनीमिव रक्ततामरसाम्। दुःखितायां च त्वयि परिजनोऽपि चानवरतकृताश्रुबिन्दुपातेन वर्तते। मुक्ताभरणता गृहाण। स्वय वरार्हाणि प्रसाधनानि। कुसुमशिलीमुखान्तर्हिता शोभते यथा लता' इति। अथ कादम्बरी बालतया स्वभावमुग्धापि कदर्पेणोपदिष्टयेव प्रज्ञया तमशेषमस्याव्यक्तव्याहारसूचित-

प्रकटयन्नाह—अनङ्गदे इति। गाढसतापतया तनुभूते ते भुजलते अनङ्गदे बाहुभूषणवर्जिते दृष्ट्या कृत्वा रक्ततामरसां स्थलकमलिनीमिव त्व वहसि। अत्र कृशभुजलतयोर्मृणालसाम्यम्, नेत्रयो रक्ततामरससाम्यमिति भाव। त्वयि दु खितायां सत्यां परिजनोऽप्यनवरत निरन्तर कृतो योऽश्रुबिन्दुपातस्तेन वर्तते प्रवृत्तो भवतीत्यर्थ। एतेनाश्रुपातस्य नैरन्तर्यं सूचितम्। मुक्तानामाभरणानि तेषा भावो मुक्ताभरणता ता गृहाण स्वीकुरु। स्वयमात्मना वराणि प्रधानान्यर्हाणि योग्यानि प्रसाधनानि प्रतिकर्माणि। कुर्विति क्रियाध्याहार। कुसुमानि पुष्पाणि, शिलीमुखा भ्रमरा, ताभ्यामन्तर्हिताच्छादिता यथा लता वल्ली शोभते राजते तथा त्वमपीति भाव। शुक्लत्वसाम्यान्मुक्ताना कुसुमसाम्यम्, नेत्राञ्जनस्य कृष्णत्वसाम्याद् भ्रमरसाम्यमिति भाव। अथेति। तदनन्तर कादम्बरी बालतया शिशुतया स्वभावेन मुग्धापि सरलाशयापि कदर्पेण मदनेनोपदिष्टयेव दर्शितयेव प्रज्ञया तमशेष समग्रमव्यक्तव्याहारोऽस्फुटभाषित तेन सूचित ज्ञापितमुपभोगविषयकं रह सगमरूप वार्थं मनसा जग्राह गृहीतवती। मनोरथाना स्वभिलाषाणा तु तावतीं भूमिं सगमरूपलक्षणामसभावयन्त्यवितर्कयन्ती शालीनता दृष्टता चावलम्बमाना। 'दृष्टे शालीनशारदौ'

वशीभूत होकर कम्पवती, सात्त्विक भाववती, तुम पर (रमण के द्वारा) दया दिखाना चाहते हुए-मेरा हृदय काम पीडा से शिथिल हुई को देखकर (रमण के लिये) मानो दौड़ रहा है। अनङ्गदे[1] अर्थात् अन्+अङ्गदे अर्थात् ककण न पहने हुई तेरी दो भुजाएँ पतली हो गयी हैं (वास्तविक अर्थ—तुम्हारी पतली भुजाएँ अनङ्ग अर्थात् कामोन्माद को प्रेरित करती हैं। और अत्यन्त घनी (प्रबल) पीड़ा के कारण तुम अपनी आख मे स्थल-कमलिनी जैसे लाल कमल रखने के गुण को धारण करती है वैसे तुम आख से लाली धारण किये हुए हो (अर्थात् तुम्हारी आखें लाल कमल के समान लाल हैं)। (गुप्तार्थ—तुम्हारी इच्छा पूर्ण न होने के कारण तुम्हारी दृष्टि एक ऐसी स्थिति को सूचित करती है जो प्रसन्न नहीं करती है)। और तुम्हारे दु खित रहने पर तुम्हारे परिजन में भी, निरन्तर आसुओं को बहाने के कारण अलङ्कारशून्यता विद्यमान रहती है (जब तुम दु खी रहती हो तो तुम्हारी सेविकायें भी आभूषण नहीं पहनतीं), इसलिये अपने योग्य तथा अच्छे मागलिक उपकरणों को धारण करो (गुप्तार्थ—स्वयवर (विवाह) के योग्य मागलिक साज सज्जा को धारण करो), क्योंकि नयी बेल तो पुष्पों तथा भ्रमरों से छिपी हुई ही शोभित होती है (गुप्तार्थ—बालता-युवावस्था तो काम से अन्तर्हित हो प्रणयोन्माद से भरी हुई ही शोभित होती है न?)[2]

तब कादम्बरी ने, जो अपने बचपन के कारण अभी स्वभावत भोली भी थी, मानो कि काम द्वारा सिखायी गयी बुद्धि के द्वारा ही वह सारा अस्पष्ट भाषण से सूचित अर्थ मन में

१ मुझे (विवाह के लिये) अपना शरीर न देने वाली।
२. पाठान्तर—सकुसुमशिलीमुखा हि शोभते नवा लता।

मर्थं मनसा जग्राह। मनोरथाना तु तावतीं भूमिमसंभावयन्ती शालीनता चावलम्बमाना तूष्णीमेवासीत्। केवलमुत्पादितान्यव्यपदेशा तत्क्षणं तमाननामोदमधुकरपटलान्धकारितं मुखं द्रष्टुमिव स्मितालोकमकरोत्। ततो मदलेखा प्रत्यवादीत्— "कुमार, कि कथयामि। दारुणोऽयमकथनीयः खलु संतापः। अपि च कुमारभावोपेतायाः किमिवास्या यन्न संतापाय। तथा हि—मृणालिन्याः शिशिरकिसलयमपि हुताशनायते। ज्योत्स्नाप्यातपायते। ननु किसलयतालवृन्तवातैर्मनसि जायमान किं न पश्यति खेदम्। धीरत्वमेव प्राणसधारणहेतुरस्याः' इति। कादम्बरी तु हृदयेन तमेव मदलेखालापमस्य प्रत्युत्तरीचकार। चन्द्रापीडोऽप्युभयथाघटमानार्थतया सदेहदोलारूढेनैव चेतसा महाश्वेतया सह प्रीत्युपचयचतुराभिः कथाभिर्महान्तं कालं स्थित्वा

इति कोश । तूष्णीमेवासीत्। केवलमुत्पादितोऽन्यव्यपदेशो मिष ययैवभूता तत्क्षणमाननस्या मोदस्तस्माद्यन्मधुकरपटल तेनान्धकारितमन्धकारवदाचरितं मुखमानन द्रष्टुमिव स्मितालोकं स्मितलक्षणमालोक प्रकाशमकरोत्। स्मितेन दन्तज्योत्स्नाया बहिर्निर्गमेन प्रकाशसभवात्। ततो मदलेखा प्रत्यवादीत्। कुमार, किं कथयामि किं ब्रवीमि। अय दारुणस्तीव्रोऽकथनीयो वक्तुम शक्य खलु निश्चयेन सताप । अपि चेति युक्त्यन्तरे कुमारभावोपेताया अस्या किमिव यन्न सतापाय भवति। तदेव दर्शयति—तथा हीति। मृणालिन्या कमलिन्या शिशिरकिसलयमपि हुताशनायते वह्निवदाचरति । ज्योत्स्नापि चन्द्रिकाप्यातपायते सूर्यालोकायते। नन्विति वितर्के। किसलयानि पल्लवास्त एव तालवृन्तानि तेषां वातै पवनैर्मनसि जायमान खेद भवान्किं न पश्यति। अतोऽस्याः कादम्बर्या धीरत्वमेव प्राणसधारणे जीवितधारणे हेतुर्निमित्तमिति। कादम्बरी तु हृदयेन तमेव पूर्वोक्तमेव मदलेखालाप मदलेखाजल्पितमस्य चन्द्रापीडस्य प्रत्युत्तरीचकार। प्रतिवच प्रादादित्यर्थं । एतत्कृतो मम विरहो मत्कृतश्चास्या इत्युभयथाघटमानार्थतया विरहताप सोढु शक्यो न वेति सदेहदोलारूढेनैव चेतसा महाश्वेतया सह प्रीत्युपचयो रसपुष्टिस्तत्र चतुराभिर्दक्षाभि कथाभिर्वार्ताभिर्महान्त काल च स्थित्वावस्थान कृत्वा

समझ लिया। किन्तु यह सम्भावना (आशा) न करती हुई कि उसकी मनोकामनायें इतनी भूमि (सफलता) तक पहुँच जायेंगी, तथा लज्जा का आश्रय लेती हुई मौन ही बैठी रही। केवल दूसरा बहाना करके मानो (अपने) मुख की सुगन्ध से आकृष्ट भ्रमरसमूह द्वारा अन्धकारयुक्त हुए (मध्यम पड़े हुए) उस मुख को देखने के लिये ही, (अपनी) मुस्कान का प्रकाश फैला दिया। इसके पश्चात् मदलेखा ने प्रत्युत्तर दिया—"राजकुमार ! क्या कहूँ ? यह अकथनीय (प्रेम से उत्पन्न होने के कारण स्पष्ट रूप से वर्णन करने के अयोग्य) सन्ताप भयकर है। इसके अतिरिक्त अभी युवावस्था में आयी हुई (गुप्त अर्थ—कुमार से प्रेम करने वाली) इसको दु खी करने के लिये कौन सी वस्तु नहीं है ? अर्थात् इसको प्रत्येक वस्तु दु खी करती है। जैसे कमल पादप के ठढे कोंपल भी अग्नि का काम करते हैं, चाँदनी भी धूप बन जाती है। क्या तुम कोंपलों के पखों की हवाओं द्वारा उत्पन्न किये जाते इसके कष्ट को नहीं देखते ? इसके जीवनधारण करने का एकमात्र कारण इसके मन की दृढ़ता (धीरता) ही है।" कादम्बरी ने भी मदलेखा का वह भाषण ही इसको प्रत्युत्तर के रूप में मन से प्रदान किया। किन्तु चन्द्रापीड, दोनों ओर लगते हुए अर्थ के कारण सदेह के झूले में झूलते हुए ही मन से, महाश्वेता के साथ

तथैव महता यत्नेन मोचयित्वात्मान स्कन्धावारगमनाय कादम्बरीभवनान्निर्ययौ। निर्गत च तुरङ्गममारुरुक्षन्त पश्चादागत्य केयूरकोऽभिहितवान्—"देव मदलेखा विज्ञापयति—"देवी कादम्बरी खलु प्रथमदर्शनजनितप्रीतिः पत्रलेखा निवर्त्यमानामिच्छति, पश्चाद्यास्यति' इति श्रुत्वा देवः प्रमाणम्।" इत्याकर्ण्य चन्द्रापीडः 'केयूरक, धन्या स्पृहणीया च पत्रलेखा यामेवमनुबध्नाति दुर्लभो देवीप्रसादः। प्रवेश्यताम्।' इत्यभिधाय पुनः स्कन्धावारमेवाजगाम। प्रविशन्नेव पितुः समीपादागतमभिज्ञाततरमालेखहारकमद्राक्षीत्। धृततुरङ्गमश्च प्रीतिविस्फारितेन चक्षुषा दूरादेवापृच्छत्—'अङ्ग, कच्चित्कुशली तातः सह सर्वेण परिजनेनाम्बा च सर्वान्तःपुरैः' इति। अथासावुपसृत्य

---

तथैव पूर्वप्रकारेणैव महता यत्नेनात्मान मोचयित्वा स्वस्य मुक्तिं विधाय स्कन्धावारगमनाय स्वसैन्यनिवेशगमनाय। 'स्कन्धावारोऽस्य तु स्थिति' इति कोश। चन्द्रापीडोऽपि कादम्बरीभवनान्निर्ययौ निर्जगाम। निर्गत च तुरङ्गममश्वमारुरुक्षन्तमारोढुमिच्छन्त पश्चादागत्यैत्य केयूरकोऽभिहितवान्। किं तदित्याह—देवेति। हे देव मदलेखा विज्ञापयति विज्ञप्तिं करोति। एतदेव दर्शयति—देवीति। खलु निश्चयेन देवी कादम्बरी प्रथमदर्शनेन जनिता प्रीतिर्यस्या एवभूता पत्रलेखां निवर्त्यमानामिच्छति समीहते। पश्चाद्यास्यति गमिष्यति। इति श्रुत्वा देव प्रमाणम्। इत्याकर्ण्य चन्द्रापीड प्रवेश्यतां गृहीत्वागम्यतामित्यभिधायेत्युक्त्वा पुन स्कन्धावारमेवाजगाम। इतिशब्दद्योत्यमाह—केयूरकेति। हे केयूरक, धन्या स्पृहणीया च पत्रलेखा या पत्रलेखा दुर्लभो दु प्रापो देवीप्रसाद कादम्बरीप्रसन्नता एवमनुबध्नात्यनुबन्ध करोति। स्कन्धावार प्रविशन्नेव पितु समीपाज्जनकपार्श्वादभिज्ञाततरमतिशयेन ज्ञातपूर्वमासमन्ताल्लेखहारकमुदन्तहारकमद्राक्षीत्। धृततुरङ्गश्च स्थापिताश्वश्च प्रीत्या स्नेहेन विस्फारितेन विस्तीर्णीकृतेन चक्षुषा दूरादेवापृच्छत्। हे अङ्ग। कच्चिदिति प्रश्ने। तात पिता कुशली वर्तते। सर्वेण परिजनेन सह तथा सर्वान्त पुरै सहाम्बा माता च कुशलिनीति। अथेति प्रश्नानन्तरमसावुपसृत्योपसरण

---

प्रीति की वृद्धि में प्रवीण बातों द्वारा बहुत देर तक ठहरकर और उसी प्रकार ( निपुणता ) से बड़े उद्यम से अपने आप को छुड़ा कर कादम्बरी के घर से निकल पड़ा। जब वह निकल कर घोड़े पर सवार होना ही चाहता था तभी केयूरक ने पीछे से आकर कहा—"राजकुमार! मदलेखा ( सादर ) सूचित करती है 'वस्तुतः राजकुमारी कादम्बरी प्रथम दर्शन से ही प्रीति को उत्पन्न किये हुई, पत्रलेखा को लौटाना चाहती है ( अर्थात् पहली बार देखने से ही कादम्बरी की मदलेखा के प्रति इतनी प्रीति उत्पन्न हो गयी है कि वह चाहती है कि पत्रलेखा को उसके पास रहने दिया जाय ) वह पीछे चली जायगी'—यह सुनकर आप जैसा चाहें निर्णय करें।"—चन्द्रापीड इस (सन्देश) को सुन कर, बोला—'केयूरक! वह पत्रलेखा धन्य है तथा ईर्ष्या करने योग्य है, राजकुमारी की दुर्लभ कृपा जिसका इस प्रकार पीछा करती है! इसलिये इसको ले जाओ" चन्द्रापीड यह कह कर फिर अपनी सेना में ही आ गया। सैन्यस्थान में प्रवेश करते हुए ही उसने पिता के समीप से आये हुए, अत्यन्त परिचित पत्रवाहक को देखा। और घोड़े को थामे हुए प्रीति से फैलायी हुई आँखों से, (देखते हुए) दूर से ही पूछा—"क्यों भाई! पिता जी सारे परिजन समेत सकुशल तो है? और माता जी सब अन्तःपुरस्थित स्त्रियों के साथ

प्रणामानन्तरम् 'देव, यथाज्ञापयसि' इत्यभिधाय लेखद्वितयमर्पयाबभूव। युवराजस्तु शिरसि कृत्वा स्वयमेव च तदुन्मुच्य क्रमशः पपाठ—"स्वस्त्युज्जयिनीतः सकलराजन्यशिखण्डशेखरीकृतचरणारविन्दः परममाहेश्वरो महाराजाधिराजो देवस्तारापीडः सर्वसंपदामायतन चन्द्रापीडमुदञ्चच्चारुचूडामणिमरीचिचक्रचुम्बिन्युत्तमाङ्गे चुम्बन्नन्दयति। कुशलिन्यः प्रजाः। कि नु कियानपि कालो भवतो दृष्टस्य गतः। बलवदुत्कण्ठित नो हृदयम्। देवी च सहान्तःपुरैर्म्लानिमुपनीता। अतो लेखवाचनविरतिरेव प्रयाणकारणता नेतव्या" इति। शुकनासप्रेषिते द्वितीयेऽप्ययमुमेवार्थं लिखितमवाचयत्।

---

कृत्वा प्रणामानन्तर नमस्कृतेरनु हे देव, यथाज्ञापयसि यथा कथयसि तथास्तीति भाव। इत्यभिधाय लेखद्वितयमर्पयाबभूवार्पितवान्। युवराजस्तु चन्द्रापीडस्तु शिरसि कृत्वा मस्तके निधाय स्वयमेवात्मनैव तल्लेखद्वयमुन्मुच्योन्मुद्र्य क्रमश पपाठ पठितवान्। किं तदित्याह—स्वस्तीति। स्वस्ति यथा स्यात्तथोज्जयिनीतो विशालात सकलराजन्याना समग्रभूपानां शिखण्डैश्चूडाभि शेखरीकृत चरणारविन्द यस्य स परममाहेश्वरोऽत्युत्कृष्टशैवो महाराजाधिराजो महता राज्ञामधीशस्तारापीड सर्वसपदां समग्रसमृद्धीनामायतन गृहमेवभूतं चन्द्रापीडमुदञ्चदुल्लसच्चारु मनोहारि यच्चूडामणिमरीचिचक्र शिरोमणिदीप्तिपटल तच्चुम्बिन्युत्तमाङ्गे शिरसि चुम्बञ्चुम्बन कुर्वन्नन्दयति प्रमोदयति। प्रजा प्रकृतय कुशलिन्यो मङ्गलवत्य सन्ति। किं न्विति। किं नु भवतो दृष्टस्य कियानपि काल समयो गतो व्यतीत। तेन नोऽस्माक बलवत्युत्कण्ठोत्कलिका जाता यस्मिन्नेतादृश हृदयमस्ति। देवी च तवाम्बा सहान्त पुरैर्म्लानिमुपनीता प्रापिता। अत्र सहान्त-पुरैरित्यनेनोपमातरोऽपि त्वां समीहन्त इति सौजन्यातिशय सूचित। अतो हेतोर्लेखवाचनस्य विरतिरेवावसानमेव प्रयाणकारणता प्रस्थाननिमित्तता नेतव्या प्रापणीया। शुकनासेन प्रेषिते द्वितीयेऽपि लेखेऽमुमेवार्थं लिखित लिपीकृतमवाचयदपठत्। अस्मिन्नेवावसरे समये समुपसृत्य

---

सकुशल है? तब उसने समीप पहुँचकर नमस्कार करने के पश्चात् "कुमार! जैसा आप पूछते हैं (वैसा ही है, वे सब सकुशल हैं)।"—यह कह कर दो पत्र (लेख) भेंट किये। किन्तु युवराज ने उनको, सिर पर रखकर और अपने आप ही उनको खोलकर, धीरे धीरे पढ़ा —

"कल्याण हो, उज्जयिनी से सारे राजाओं के सिरों पर शिरोभूषण बनाये हुए चरणकमल वाला, शिवजी का परमभक्त महाराजाधिराज देव तारापीड, प्रत्येक प्रकार की समृद्धि के निवास स्थानभूत चन्द्रापीड को उसके सुन्दर शिरोभूषण की मणियों के दमकते किरणमण्डल को स्पर्श करने वाले मस्तक पर चुम्बन करके अभिनन्दन करता है। प्रजाएँ सकुशल हैं। किन्तु तुम्हें देखे हुए कितना ही समय बीत गया है। हमारा हृदय बहुत सी उत्कण्ठा (अभिलाषा) से युक्त है। और देवी (तुम्हारी माता) भी सारे अन्त पुर के साथ दुःखित हो गयी है इसलिये पत्र पढ़ने की समाप्ति (के काल) को ही प्रस्थान करने का समय बना लेना (अर्थात् इस पत्र को पढ़ते ही चल पड़ना)"। शुकनास द्वारा लिखे हुए दूसरे पत्र में भी इसी विषय को पढ़ा। इसी समय समीप पहुँच कर वैशम्पायन ने भी, अपने दो पत्र, इन दोनों के समान विषय के ही दिखलाये।

अस्मिन्नेवावसरे समुपसृत्य वैशम्पायनोऽपि लेखद्वितयमपरमात्मीयमस्मादभिन्नार्थमेवादर्शयत्। अथ 'यथाज्ञापयति तातः' इत्युक्त्वा तथैव च तुरगाधिरूढः प्रयाणपटहमदापयत्। समीपे स्थितं च महताश्वीयेन परिवृतं महाबलाधिकृतं बलाहकपुत्रं मेघनादनामानमादिदेश—'भवता पत्रलेखया सहागन्तव्यम्। नियतं च केयूरकस्तामादायैतावतीं भूमिमागमिष्यतीति तन्मुखेन विज्ञाप्या प्रणम्य देवी कादम्बरी। नन्वियं सा त्रिभुवननिन्दनीया निरनुरोधा निष्परिचया दुर्ग्रहा प्रकृतिर्मर्त्यानां येषामकाण्डविसंवादिन्यः प्रीतयो न गणयन्ति निष्कारणवत्सलताम्। एवं गच्छता मयात्मनो नीतः स्नेहः कपटकूटजालिकताम्, प्रापिता भक्तिरलीककाकुकरणकुशलताम्, पातितमुपचार-

समीपमागत्य वैशम्पायनोऽप्यपरमात्मीयं लेखद्वितयमस्मात्स्वकीयलेखादभिन्नार्थमेकाभिधेयमेवमदर्शयद्दर्शितवान्। अथेति। तद्वाचनानन्तरं यथाज्ञापयति यथाज्ञां दत्ते तात' पिता। इत्युक्त्वा तथैव पूर्ववदेव तुरगाधिरूढं प्रयाणपटहं प्रयाणभेरीमदापयद्दापितवान्। समीपे स्थितं महताश्वीयेन बलेन परिवृतं महाबलं सैन्यं तत्राधिकृतं नियुक्तं बलाहकस्य पुत्रं मेघनादनामानमादिदेशादिष्टवान्। भवता त्वया पत्रलेखया सहागन्तव्यं समेतव्यम्। नियतं निश्चितं केयूरकस्तां पत्रलेखामादाय गृहीत्वैतावतीं भूमिमागमिष्यतीति तन्मुखेन केयूरकमुखेन प्रणम्य देवी कादम्बरी विज्ञाप्या विज्ञप्तिविषयीकरणीया। नन्विति वितर्के। तेषां मर्त्यानां या निरनुरोधा निर्गतं कस्याप्यनुरोधं स्वकार्यप्रतिबन्धो यस्यां निर्गतं परिचयं सख्यानुवृत्तिर्यस्याम्। दुर्ग्रहेति। दुर्दुष्टो ग्रह आग्रहो हठो यस्यामेवंविधा प्रकृतिः स्वभावः सा प्रकृतिस्त्रिभुवननिन्दनीया स्यात्। यत्तदोर्नित्याभिसंबन्धाद्येषां मर्त्यानामकाण्डेऽप्रस्तावे विसंवादिन्यो व्यभिचारिण्यः प्रीतयो निष्कारणवत्सलतां निर्निमित्तहितकारितां न गणयन्ति न मनस्यानयन्ति। एवममुना प्रकारेण गच्छता व्रजता मयात्मनः स्नेहः स्वकीया प्रीतिः कपटं कैतवं तस्य कूटजालिका मिथ्याप्रपञ्चस्तद्रूपतां नीतः प्रापितः। भक्तिराराध्यत्वेन ज्ञानं वा साध्यलीका

इसके पश्चात् 'मेरे पिता जो आज्ञा देते हैं वही हो" यह कहकर उसने प्रस्थान (सूचक) ढोल बजवाया। और समीप में स्थित बहुत बड़े अश्वसम्बन्धी सैन्य (बड़ी भारी अश्वसेना) से घिरे हुए उस बड़ी (भारी) सेना के अध्यक्ष बलाहक के पुत्र मेघनाद को आज्ञा दी—"तुमको पत्रलेखा के साथ आना है। और निश्चय ही, केयूरक उसको लेकर यहाँ तक आयेगा ही, उसके मुख से (उसके द्वारा) मेरा नमस्कार देकर राजकुमारी कादम्बरी को यह सन्देश देना—"निश्चय ही, मनुष्यों (मर्त्यों) का यह प्रसिद्ध स्वभाव है जो तीनों लोकों द्वारा निन्दा करने योग्य है (तीनों लोकों को जिसकी निन्दा करनी चाहिये), जो किसी की की हुई भलाई को नहीं मानता, जो परिचय को नहीं मानता तथा जिसको पकड़ पाना कठिन है (अथवा जिसको जीता नहीं जा सकता)। उन मनुष्यों का स्वभाव है कि जिनकी अचानक न मेल खायी हुई (असफल हुई) प्रीतियाँ (दूसरों द्वारा दिखलायी गयी) अकारण (निःस्वार्थ) संवेदनशीलता की उपेक्षा कर देती हैं। इस प्रकार (अचानक) चले आये मैंने अपनी प्रीति को कपटकारी, कपटजाली अर्थात् असत्य व्यवहार करने वाले व्यक्ति के गुणों से युक्त बना दिया है, अपनी (तुम्हारे प्रति) भक्ति को (तुम्हें भ्रम में डालने के लिये) झूठे वाणी परिवर्तन करने में कुशल बना लिया

मात्रमधुर धूर्ततायामात्मार्पणम्, प्रकटित वाङ्मनसोर्भिन्नार्थत्वम्। आस्ता तावदात्मा। अस्थानाहितप्रसादा दिव्ययोग्या देव्यपि वक्तव्यतां नीता। जनयन्ति हि पश्चाद्वैलक्ष्यम भूमिपातिता व्यर्थाः प्रसादामृतदृष्टयो महताम्। न खलु तथा देवी प्रति प्रबललज्जाति-भारमन्थर मे हृदयं यथा महाश्वेता प्रति। नियतमेनामलीकाध्यारोपणवर्णितास्मद्गुण सभारामस्थानपक्षपातिनीमसकृदुपालप्स्यते देवी। तत्किं करोमि। गरीयसी गुरोराज्ञा प्रभवति देहमात्रकस्य। हृदयेन हेमकूटनिवासव्यसनिना लिखित जन्मान्तरसहस्रस्य

मिथ्या या काकुर्वक्रोक्तिस्तस्या करणे कुशलतां दक्षता प्रापिता। उपचारो बाह्यनियमस्तन्मात्रेण मधुर मिष्टमात्मार्पण भवदीयोऽहमिति स्वस्यार्पण धूर्तताया पातित क्षिप्तम्। वाङ्मन सयोरिति। 'अचतुर–' इत्यादिना निपात। भिन्नार्थत्व विसवादित्व प्रकटितमाविष्कृतम्। तावदादावात्मास्तां तिष्ठतु। ममेति शेष। अस्थानेऽयोग्य आहितः स्थापित प्रसादो ययात एवाह—दिव्याना योग्योचितैवविधा देव्यपि कादम्बर्यपि दूरदेशागतेन चन्द्रापीडेन कारणं विना कथ सत्य प्राप्तेति वक्तव्यता वचनीयतां नीता प्रापिता। मयेति शेष। हि यस्मात्कारणादभूमिपातिता अस्थाननिपातिता व्यर्था निष्फला प्रसादामृतदृष्टय प्रसन्नतापीयूष दृश. पश्चान्महता वैलक्ष्य जनयन्त्युत्पादयन्ति। स्थानविशेषे प्रीतिविशेष प्रदर्शयन्नाह—न खल्विति। खलु निश्चये। न तथा देवीं प्रति कादम्बरीं प्रति प्रबला प्रकृष्टा या लज्जा त्रपा तस्या अतिभारोऽतिवीवधस्तेन मन्थरमलस मे मम हृदय चेतो यथा महाश्वेता प्रति वर्तते। नियत निश्चितमलीकाध्यारोपेण वर्णित स्तुतोऽस्मद्गुणसभारो यया तामस्थानेऽनुचितस्थले पक्षपातो विद्यते यस्या एवविधामेना महाश्वेता देवी कादम्बर्यसकृद्वारवारमुपालप्स्यते। उपालम्भ दास्यतीत्यर्थं। तत्किं करोमि। कोऽप्युपायो नास्तीत्यर्थं। अस्मिन्नर्थे हेतु प्रदर्शयन्नाह—गरीयसीति। देहमात्रकस्य शरीरमात्रधारिणो गुरोराज्ञा निर्देशो गरीयसी गरिष्ठा

है, (तुम्हारे लिये) मैने अपने आत्मसमर्पण को जो केवलमात्र शिष्टाचार में ही मधुर रह गया है, निपुण वञ्चकता में (परिवर्तित कर) गिरा दिया है, वाणी तथा मन की पृथक् पृथक् विषयता (वचनों तथा विचारों की भिन्नता) को प्रकट कर दिया है। मेरी आत्मा (मेरे अपने विषय को) छोड़ भी दें तो भी मैंने अनुचित स्थान में (मेरे जैसे अपात्र व्यक्ति पर) अपनी कृपा किये हुई आप सरीखी, देवताओं के योग्य राजकुमारी को भी निन्दार्ह बना दिया है। निश्चय ही कृपारूपी अमृत से भरी बड़े आदमियों की दृष्टियाँ, अपात्र पर पड़ी हुई व्यर्थ हो कर पीछे लज्जा को उत्पन्न करती हैं। वस्तुत मेरा हृदय राजकुमारी के प्रति उतना प्रबल लज्जा के भारी भार से दबा हुआ (शिथिल) नहीं है जितना कि महाश्वेता के विषय मे है। निश्चय ही, झूठ मूठ मेरे गुणसमूह के अध्यारोपण का वर्णन किया है जिसने ऐसी, इस, अनुचित व्यक्ति (अपात्र) पर अपना पक्षपात दिखाये हुई (महाश्वेता) को राजकुमारी बार बार उपालम्भ देगी। तब फिर मैं क्या करूँ! मेरे पिता की बहुत भारी (महत्त्वपूर्ण) आज्ञा का तो केवल मेरे देह पर ही आधिपत्य है किन्तु हेमकूट में निवास की 'प्रबल इच्छा' (व्यसन) रखने वाले मेरे हृदय ने तो (केवल इस जन्म के लिये ही नहीं) अपितु दूसरे सहस्रों जन्मों के लिये

दास्यपत्र देव्या हस्तेन दत्तमस्याः। दविकगौल्मिकेनेव देवीप्रसादेन गन्तु सर्वथा गतोऽस्मि पितुरादेशादुज्जयिनीम्। प्रसङ्गतो जनकथाकीर्तनेषु स्मर्तव्यः खलु चन्द्रापीडः। चण्डालो मा चैवं मस्थाः, यथा जीवन्पुनर्देवीचरणारविन्दवन्दनानन्दमननुभूय स्थास्यति चन्द्रापीड इति। महाश्वेतायाश्च सप्रदक्षिणं शिरसा पादौ वन्दनीयौ। मदलेखायाश्च कथनीयः प्रणामपूर्वमशिथिलः कण्ठग्रहः। गाढमालिङ्गनीया च तमालिका। अस्मद्वचनादशेषः प्रष्टव्यः कुशलं कादम्बरीपरिजनः। रचिताञ्जलिना च भगवानामन्त्रणीयो हेमकूटः' इति। एवमादिश्य तम् 'सुहृदादिसाधनमक्लेशयता शनैः

---

प्रभवति जायते। हेमेति। हेमकूटे निवासस्तद्वयसनिना हृदयेन चित्तेन जन्मान्तरसहस्रस्य दास्यपत्रं लिखितमस्या देव्या हस्तेन दत्तम्। पितुरादेशाज्जनकनियोगादुज्जयिनी गन्तु सर्वथाह गतोऽस्मि। केन। देवीप्रसादेन। कादम्बर्या माहात्म्येनेत्यर्थः। देवयोनित्वात्तस्या इति भाव। केनेव। दविकगौल्मिकेनेव वनेचरसमूहेनेव। सोऽपि देवी पोदकी तदनुरोधेनैव गच्छति। तथा प्रसङ्गतो जनकथा सौवसेवककथा तस्या कीर्तनेषु नामोच्चारणेषु खलु निश्चयेन चन्द्रापीड स्मर्तव्य स्मरणीय। अय चण्डाल कृतघ्नत्वादेव मा मस्था मा जानीया। यथा जीवन्पुनश्चन्द्रापीडो देव्या कादम्बर्याश्चरणारविन्दस्याङ्घ्रिपद्मस्य वन्दन नमस्करण तस्माद्य आनन्द प्रमोदस्तमननुभूयाननुभवविषयीकृत्य स्थास्यति। अत्र काकु न स्थास्यतीत्यर्थः। इति महाश्वेतायाश्च सप्रदक्षिण प्रदक्षिणासहित यथा स्यात्तथा शिरसा मस्तकेन पादौ वन्दनीयौ नमस्करणीयौ। तथा मदलेखायाश्च प्रणामो नमस्कारस्तत्पूर्वकमशिथिलः कण्ठग्रह कथनीयो वाच्य। तथा गाढमत्यर्थमालिङ्गनीया परिरम्भणीया च तमालिका। अशेष समग्र. कादम्बरीपरिजनोऽस्मद्वचनात्कुशल श्रेय प्रष्टव्य। रचिताञ्जलिना च त्वया भगवान्हेमकूट निमन्त्रणीय आमन्त्रणीय इति पूर्वोक्तया दिशादिश्यादेश दत्वा त मेघनादं सुहृदादिसाधन मित्रादिसैन्यमक्लेशयताखेदयता त्वया शनै. शनैर्गन्तव्यमित्युक्त्वा वैशम्पायन स्कन्धावारभरे न्ययुङ्क्त नियोजितवान्।

---

भी लिखा गया दास्यपत्र (सेवा करने का इकरारनामा) तुम्हारे पास रख दिया है। जैसे वनचर को सेनाध्यक्ष जाने नहीं देता वैसे ही इसको देवी की कृपा ने जाने नहीं दिया, (गुल्म का अर्थ चुंगीकेन्द्र भी है—उस अवस्था में चुंगीकेन्द्र का अध्यक्ष अर्थ होगा), (विवश होकर) सर्वथा पिता के आदेश से ही उज्जयिनी को चला गया हूँ। अवसर आने पर (प्रसंगवश) व्यक्तिविषयक वार्ताओं में इस नीच (अथवा दुःखी) चन्द्रापीड को स्मरण कर लेना। चन्द्रापीड चण्डाल अर्थात् कृतघ्न है, यह मत मान लेना। और यह भी मत समझ लेना कि जीवित रहता हुआ चन्द्रापीड देवी के चरणकमलों की वन्दना के आनन्द का उपभोग किये बिना चैन से बैठेगा। और महाश्वेता के पाँवों की वन्दना प्रदक्षिणा के साथ करना। और मदलेखा को नमस्कारपूर्वक दृढ़ कण्ठाश्लेष कहना। तमालिका को (मेरी ओर से) गाढ़ आलिङ्गन कहना। मेरे कहने से कादम्बरी के सभी कर्मचारियों की कुशलता पूछना, और हाथ जोड़कर भगवान् हेमकूट को बिदाई (आमन्त्रण) देना। उस मेघनाद को इस प्रकार आदेश देकर "मित्र आदि सेना को कष्ट न देते हुए तुम्हें धीरे-धीरे चलना चाहिए" यह कह कर वैशम्पायन को

शनैर्गन्तव्यम्' इत्युक्त्वा वैशम्पायन स्कन्धावारभरे न्ययुङ्क्त। स्वयमपि च तथारूढ एव गमनहेलाहर्षहेषारवकम्पितकैलासेन खुरताण्डवखण्डितभुवा कान्तकुन्तलतावनवाहिना तरुणतुरगप्रायेणाश्वसैन्येनानुगम्यमानस्तमेव लेखहारक पर्याणलग्नमभिनवकादम्बरीवियोगशून्येनापि हृदयेनोज्जयिनीमार्गं पृच्छन्प्रतस्थे। क्रमेण चातिप्रवृद्धप्रकाण्डपादपप्रायया, मालिनीलतामण्डपैर्मण्डलिततरुखण्डया, वनगजपतिपातितपादपपरिहारवक्रीकृतमार्गया, जनजनिततृणपर्णकाष्ठकोटिकूटप्रकटितवीरपुरुषघातस्थानया

---

स्वयमपि च तथा पूर्वोक्तप्रकारेणारूढ एव गमनलक्षणा या हेला तया हर्षं तस्य हेषारवस्तेन कम्पित कैलासो येन। खुरेति। खुरताण्डवेन खण्डिता भूर्येन स तेन। कान्तेति। कान्ता मनोहरा ये कुन्ता भल्ला। सरलत्वसाम्यात्त एव लतास्तासां वन तद्वाहिना। तरुणा इति। तरुणा नव्यास्तुरगा प्रायेण बाहुल्येन यस्मिन्नेवंविधेनाश्वसैन्येनानुगम्यमानस्तमेव पूर्वोक्तमेव लेखहारक पर्याण पल्ययन तत्र लग्नम्। अभीति। अभिनव प्रत्यग्रो य कादम्बरीवियोगस्तेन शून्येनापि हृदयेनोज्जयिनीमार्गं पृच्छन्प्रतस्थे चचाल। क्रमेण चेति। स चन्द्रापीड क्रमेण परिपाट्या शून्ययाटव्या दिवस गत्वा वासरमतिक्रम्य। परीति। परिणत रक्त रविबिम्बं यस्मिन्नेवभूत वासरे सायसमयेऽटवीक्षेत्रैर्विरलीकृतो यो वनप्रदेशस्तस्मिन्। चिरेति। चिरप्ररूढस्य। बहुकालीनस्येत्यर्थं। रक्तचन्दनतरो पत्राङ्ववृक्षस्योपरि महान्त रक्तध्वज दूरत एव ददर्शेत्यन्वय। इतोऽटव्या विशेषणानि—अतीति। अतिप्रवृद्धोऽतिवृद्धिं प्राप्त प्रकाण्ड स्कन्धो येषामेतादृशा पादपा वृक्षा. प्रायो बाहुल्येन यस्यां सा तया। मालीति। मालिनीसञ्ज्ञिता या लता वल्लयस्तासा मण्डपैर्मण्डलिताश्चक्रवालितास्तरुखण्डा वृक्षसमूहा यस्यां सा तया। वनेति। वनस्य यो गजपतिर्यूथनाथस्तेन पातिता भग्ना ये पादपा वृक्षास्तेषां परिहारो वर्जन तन्निमित्तक प्रतिबन्धवशाद्वक्रीकृतो मार्गं पन्था यस्यां सा तया। जनेनेति। जनेन लोकेन जनित निष्पादित यत्तृण पर्णकाष्ठानां कोटी तस्या कूट शिखर तादृशचिह्नेन प्रकटित वीरपुरुषाणां घातस्थान यस्या

---

उसने सेना के दायित्व पर नियुक्त कर दिया। और वह स्वय भी वैसे ही घोड़े पर चढा हुआ, चलने के चाव (हेला) में की गयी हर्षसूचक हिनहिनाहट के शोर से कैलाश को कम्पाते हुए, खुरों के नृत्य (ताण्डव) द्वारा भूमि को खोदते हुए, सुन्दर भालों रूपी लताओं के समूह को अथवा व्यूहरचना को धारण किये हुई युवक अश्वो की अधिकता से युक्त अश्वसेना द्वारा अनुगम्यमान, उसी पत्रवाहक से जो कि काठी से लगा हुआ (चल रहा) था, नये (ताजे) कादम्बरी के वियोग के कारण शून्य हृदय द्वारा भी उज्जयिनी के मार्ग को पूछता हुआ चल पड़ा। और उसने दिन भर अधिकाश में अत्यन्त बढ़े हुए तनों वाले वृक्षों से भरे हुए, मालिनी लताओं के कुञ्जों द्वारा घिरे हुए वृक्षसमूहों वाले, जगली विशाल हस्तियों द्वारा गिराये हुए वृक्षों को त्यागने से (वृक्षों से बचकर निकलने के कारण) टेढ़े हुए मार्ग वाले, मनुष्यरचित, घास, पत्र तथा लकड़ी के नोकदार खण्डों के ढेरों से जहाँ वीर पुरुषों की हत्या के स्थान सूचित हो रहे थे, जहाँ बड़े बड़े वृक्षों की जड़ों पर व्रन की दुर्गा देवी के चित्र खुदे हुए थे, जहाँ प्यासे

